चोक्तः। तद् सर्वात्मभूतं सर्वोपास्यं मुख्यमविकृतं स्वस्वरूपात्मकमेकम्। तच्च श्रौतोपासनादिरूपया मुक्त्याऽभिव्यज्यते। ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमान इत्यादिश्रुतेः। सत्त्वशुद्ध्यर्थमुपासनादीत्येकदेशिनः। सिद्धान्ते प्रकारस्तु साधनप्रकरणे वक्ष्यते। जीवानामपि सजातीयत्वादत्रैव निवेशः। ते च योगसाधितेन मनसा भगवद्दृष्ट्या दिव्यदृष्ट्या च प्रकाशन्ते। तत्रैषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेशेति श्रुतेर्मनसो द्रष्टृत्वम्। तच्च, योगेन साधितमेव पश्यन्नन्तरेव च पश्यतीति श्रुत्यन्तराद्, अयं हि परमो धर्मो यद् योगेनात्मदर्शनमित्यादिस्मृतेश्चावसीयते। दिव्यदृष्ट्या भगवदीक्षणसमर्थदृष्ट्या च बहिः। वृत्रस्य देहान्निष्क्रान्तमात्मज्योतिररिन्दम * पश्यतां सर्वलोकानामलोकं समपद्यतेति वाक्ये देवाऽसुरसंग्रामसामयिकदेवादीनां दिव्यदृष्टिमतामेव सर्वलोकपदेन परामर्षात्। तथा, चैद्यदेहोत्थितं ज्योतिर्वासुदेवमुपाविशत् * पश्यतां सर्वलोकानामुल्केव भुवि खाच्च्युतेति वाक्ये सभास्थानां भगवन्तं पश्यतामेव सर्वलोकपदेनोक्तत्वात्। ज्योतिःपदवाच्यत्वं च प्रकाशकत्वादेव। जीवस्य चैतन्यगुणोऽपि जीवाऽविनाभूतत्वात् तत्रैव निविशते। तत्स्वरूपं तूत्तरार्द्धे, जीवस्यानुस्मृतिः सतीत्यत्र विवृतम्। पूर्वापरानुसन्धानरूपा स्मृतिर्या सा तादिति। व्युच्चरणात् पूर्वमभेदेन व्युच्चरणोत्तरमविद्यासम्बन्धात् प्राक्कालवर्तिनो ज्ञानस्य सोऽहमितिपूर्वापरानुसन्धानरूपस्यैव सिद्धत्वात्। तत्त्वमस्याद्युपदेशोत्तरमपि तथैव प्रतिसन्धानादजपायामपि तथात्वात् तादृशात्मस्यैव निश्चेयत्वात्। विद्यया स्वरूपलाभोऽपि पूर्वोक्तरूप एव। विस्मृतकण्ठमणिन्यायेन तस्यैव पुनः प्रतिसन्धानात, सत्त्वशुद्धौ ध्रुवास्मृतिरिति तद्ध्रौव्यस्यैव श्रावणाच्च। एतस्य पूर्वोऽनुभवजन्यत्वे-

ऽप्याकारमात्रस्यैव भेदात् स्वरूपतो नित्यत्वम् ॥

पूर्वोक्तमेव ज्ञानं यदा प्रकाशरूपेणाविर्भवति, यथा सूर्यप्रकाशस्तदा भगवद्गुणत्वेनोच्यते । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणेत्यादौ, तद् भगवति नित्यं, जीवेषु पार्षदादिषु तु तद्दत्तं समायाति । युक्तं भगैः स्वैरितरत्र चाध्रुवैः, तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहादित्यादिवाक्येभ्यो जीवगुणरूपं ज्ञानमत्रैव वा निविशत इति द्वितीयम् । इदमेव सृष्ट्यर्थं यदा भगवन्मनोमयादिमनाऽथा वेदशरीरं गृह्णाति तदा तृतीयम्। तच्च, स एष जीवो विवरप्रसूतिरित्यादिनैकादशे स्कन्ध उच्यते । ततः सृष्टिश्च । शब्द इति चेन्नातः प्रभवात् प्रत्यक्षाऽनुमानाभ्यामिति सूत्रे स्फुटा । तदग्रे व्युत्पाद्यम् । तादृशशरीरविशिष्टमपि रूपं विराडिव अनन्तम् । तदपि तैत्तरीयब्राह्मणे इन्द्रभरद्वाजसंवादे स्फुटम् । अनन्ता वै वेदा इति तत्र श्रुतेः। तदेव शरीरविशिष्टं पश्चाद् बीजतामापद्यते । तदा व्यष्टय इव विकृताः सर्वे शब्दास्तत्रासकरवालेसादिपदरूपा आदिसृष्टौ भवन्ति । तदग्रे स्फुटीभविष्यति । एतद्भगवदाश्रितमेव तुरीयम् । एतच्चतुर्विधं नित्यम् । ततस्तादृशद्विविधशब्दाद्यात्मकशरीरविशिष्टमेव तत् लोके प्रकटीभवितुं लौकिकं प्रमातारं प्रमेयं चाश्रयते । तत्र शब्दशरीरविशिष्टस्य प्रमात्राश्रयणं पश्यन्त्याख्यया शब्दावस्थया तद्बोधकश्रुत्या चावसीयते । तथाचानुभविकोक्तिः । न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ॥ अनुविद्धमिव ज्ञानं सर्वं शब्देन भासत इति । तत्र प्रमेयाश्रयं प्रमेयानन्त्यादनन्तमेव, परं प्रमेयरूपतया एकविधमिवैकमित्युच्यते । पूर्वोक्तरीत्या ज्ञानस्य शब्दानुविद्धत्वाच्छब्दस्य च नित्यमर्थसम्बद्धत्वाच्छब्दविशिष्टस्यैव तस्य प्रमेयाऽऽश्रयत्वम् । इदमप्यनुव्यवसायाकारादेव निश्चीयते। परमत्र शब्दोऽर्थश्च न्यग्भूतो

भासते । पूर्वत्र तु ज्ञानं स्वग्भूतमिति विशेषः । नचाऽनेकमूकीय-ज्ञानस्य शब्दावैशिष्ट्यं शक्यम् । अभिनयस्यैव तत्र शब्दस्थानाप-न्नत्वात् । शब्दविशेषमनुसन्धायैव बोधकेनाभिनयप्रदर्शनात् पर-म्परया शब्दवैशिष्ट्यस्य तत्रापि सत्त्वात् । इदं पञ्चमम् । प्रमात-रि त्वन्तःकरणेन्द्रियाश्रयणात् पञ्चधा । तत्रेन्द्रियेष्वेकधा । तदग्रे व्युत्पाद्यम् । अन्तःकरणे चतुर्धा । तत्र मनसा जनितं संशयात्म-कम् । तस्य सङ्कल्पविकल्पात्मकत्वात् । तच्च तदाश्रितमेव । अत एव शङ्का पिशाच्या अनिष्टचिः । आत्मानं तु दौरात्म्यनिष्ठशौ प्रमिणोतीत्यदोषः । शरीराभिमतिस्त्वहङ्कारेण कृता बुद्ध्याश्रया । एवमन्येऽपि विपर्यासनिश्चयस्मृतिरूपा बुद्धिवृत्तिरूपत्वाद् बुद्ध्या-श्रयाः । मोक्षशास्त्रीयसाधनैः शरीराभिमतिः शिथिलीभवन्ती यदा नश्यति तदा तन्मूलास्तेऽपि तथा भवन्ति । ज्योतिर्ब्राह्मणे आत्म-ज्योतिष्ट्वमुपक्रम्य, स समानः सन्नित्यहङ्कारसादृश्यमुक्त्वा, सधीः स्वप्नो भूत्वेमं लोकमतिक्रमतीति श्रुत्याऽहङ्कारसमानत्वेन सन्नियः स्वप्नात्मकबुद्ध्यवभासकतया स्वप्नात्मकत्वादहङ्कारो बुद्ध्या सहितः स्वाप्नं पश्यतीति स्वप्नज्ञानमहङ्काराश्रयम् । चित्तं त्वात्मानमेव सुषुप्तौ पश्यत्यैक्येन । अन्यदा तु लीनमिति निर्विषयं ज्ञानं चि-त्ताश्रयम् । एवं दृग्धा । तृतीयस्कन्धे, एतल्लीलातिदेशेन निरू-पणं ज्ञानस्य सृष्टिस्थितिप्रलयोपयोगितया भगवल्लक्षणत्वज्ञापना-र्थम् । तत्रानुपदोक्तं षड्विधमपि ज्ञानं कार्यरूपमन्तःकरणधर्मः । कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्ये-तत्सर्वं मन एवेति श्रुतेः । शाण्डिल्यभाष्ये त्वनुमानं दर्शितम् । सुखादयः करणसमवेताः । घ्राणादीन्द्रियाग्राह्यगुणत्वात् । स्पर्श-शून्यग्राह्यगुणत्वाद्वा । शब्दवदिति । जन्यज्ञानं च स्थिरं घटादि-वत्त तु त्रिक्षणावस्थाय्येवेति नियमः । यस्त्वचेतसो ग्राह्य बुद्धि

पर्यवतिष्ठते * स्थिरबुद्धिरसंमूढ इत्यादिशास्त्रात्। नच स्थिरत्वे सर्वदैकज्ञानापत्तिरिति शङ्क्यम्। विषयान्तरज्ञानसामग्र्या जातेन ज्ञानान्तरेण तस्य तिरस्कारे संस्काराऽऽख्यसूक्ष्मरूपेण तस्यावस्थानोपगमात्। नच योग्यस्य तस्य स्थितावनुव्यवसायापत्तिरिति शङ्क्यम्। गृहादौ व्याप्तस्यापि गन्धस्य घ्राणेन ग्रहण एव स्फुरणवन्मनसा तस्य ग्रहण एव स्फुरणमिति कार्यबलादेव सिद्धेः। नच गन्धस्याऽऽगन्तुकत्वेन कदाचिद् ग्रहणमुचितम्। ज्ञानस्य तु मनोधर्मस्य स्थिरत्वे कथं कदाचिद् ग्रहणमिति शङ्क्यम्। रजसा व्यापारान्तरविशेषेणोपपत्तेः। तमसा तदावरणाच्च तथा। नचैवं स्मृत्यजनकबुद्धेरपि स्थिरत्वापत्तिः। इन्द्रियैर्बुद्धिजननोत्तरं पौनःपुन्याग्रभावेन दार्ढ्याभावात्। शरीरस्याप्यवलोकशास्त्रादिभिर्ज्ञानस्य पोषे अभ्यासेन च दार्ढ्ये तस्य स्थिरत्वसिद्धेः। नच स्थापकस्याधारस्य चानिर्वाच्यत्वेन स्थितिरशक्यवचनेति वाच्यम्। जीवप्रयत्नेन व्यापारेणान्तःकरणे स्थापितत्वात्। नचैवं सति तन्नाशानुपपत्तिः शङ्क्या। विहितानां देशकालादीनां तत्पोषकत्ववन्निषिद्धानां तेषां नाशकत्वात् तस्यापि सिद्धेः। नचात्र विनिगमकाभावः। मायाया ज्ञानतिरस्कारिणीत्वात्तदाश्रयभूतानां कालिमगधमध्यदेशशाक्तनिषिद्धक्रियाणां तथात्वस्यौचित्यात्। तत्रापि यथायथं द्वाभ्यां द्वाभ्यां स्वरूपतः स्थानतो गुणतश्च नाशः। तत्र स्वरूपतो नाशो पुनरस्मरणम्। स्थानतो नाशो विपर्ययरूपता। गुणतो नाशो ततः सत्फलाभाव इति क्वापि न शङ्कालेशः॥

अस्य ज्ञानस्य जनितस्य शब्दा विषयाश्चोद्दीपकाः। अजनितस्य तु जनन एव सामग्रीरूपाः। एतदेव कोशेषु बुद्धिचेतनादिशब्दैरभिधीयते। इदं च सात्त्विकादिभेदेन त्रिविधम्। तत्र सात्त्विकं ज्ञानं प्रमारूपमेव। सत्त्वगुणहेतुसामग्र्या सत्त्वयद्भाव-

न्तःकरणेन प्रमितेरेव जननात् । सत्त्वलये तथैव सामग्र्या भ्रमजननात् । अतोऽन्वयव्यतिरेकाभ्यां सत्त्वस्यैव प्रमाणत्वनिश्चयात् तज्जन्यमेव ज्ञानं प्रमाणम् । अबाधितज्ञानत्वं, बाधयोग्यव्यतिरिक्तत्वं वा तल्लक्षणम् । गुणहेतुसामग्री तु, आगमोऽर्थः प्रजा देशः कालः कर्म च जन्म च * ध्यानं मन्त्रोऽथ संस्कारो दशैते गुणहेतवः ॥ तत्तत् सात्त्विकमेवैषां यद्यद् वृद्धाः प्रचक्षते । निन्दन्ति तामसं तत्तद्राजसं तदुपेक्षितमित्येकादशस्कन्धे उक्ताः । तच्चैकाविधमेव । अव्ययैकभावावगाहित्वात् । तदुक्तं गीतायामेकादशस्कन्धे च— सर्वभूतेषु येनैकं भावमव्ययमीक्षते * अविभक्तं विभक्तेषु तज्ज्ञानं सात्त्विकं स्मृतमिति । केवल्यं सात्त्विकं ज्ञानमिति भगवद्वाक्येषु । गीतावाक्ये ज्ञानमिति करणे ल्युट् । तेनाऽत्र मनःपरिणामविशेषः सात्त्विको ज्ञानपदेनाच्यते । ततस्तज्जन्यज्ञानमपि तथेति सिद्ध्यति । इदञ्चानुमितिशाब्दादिरूपं विकल्पान्यवक्तृत्वैताहगेव भवति।एकादशस्कन्धे, आद्यन्ते च मध्ये च सृज्यात् सृज्यं यदन्वियात् * पुनश्च प्रतिसंक्रामे यच्छिष्येत तदेव सदिति तद्विपयाकारानुमानप्रकारयोरुक्तत्वात् । प्रयोगस्तु— विमता भावाः सदभिन्नाः, आद्यन्तमध्येषु सदनुगतत्वात् । यदेवं यदनुगतं तत्तदभिन्नम् । सौवर्णकुण्डलकटकादिवत् । सदवशेषत्वाच्च तथेति द्विधा सिद्ध्यति । इदमेव च भावाद्वैतम् । कार्यकारणवस्त्वैक्यमर्शनं पटतन्तुवत् * अवस्तुत्वाद्विकल्पस्य भावाद्वैतं तदुच्यत इति सप्तमस्कन्धात् । तत्त्वमसीत्यादौ, सदेव सोम्येत्युपक्रमेण ऐतदात्म्यमिदं सर्वं, तत्सत्यं, स आत्मेत्युपसंहारेण च सदात्मकस्य श्रावणाच्च । राजसं तु पूर्वोक्तया राजससामग्र्या नानाकारं भवति । पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् * वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसमिति, रजो वैकल्पिकं स्मृतमिति

च भगवद्वाक्यात् । इदं च व्यवहारोपयोगि । व्यवहारस्तु— अहम्ममाभिमानात्मकयानससन्निपातजन्यो देहेन्द्रियादिस्वाभाविकव्यापारात्मकः सन्निपातः । शमो दमस्तितिक्षेक्षेत्यादिभिः सत्त्वादिगुणत्रयवृत्तीरुक्त्वा, सन्निपातस्त्वहमिति ममेत्युद्धव या मतिः॥ व्यवहारः सन्निपातो मनोमात्रेन्द्रियासुभिरिति भगवद्वाक्यात् । मोक्षशास्त्रीयस्तु न तथा । शास्त्रात् पुरुषस्याऽहम्ममेतिबुद्धिनिवृत्तौ रजस्तमसोः क्षीयमाणतया अमावल्येन मिश्रणाभावे केवलसात्त्विकत्वात् । औषधाज्जायमानस्य भावस्य सन्निपातनिवर्तकत्वात् । तत्र पृथग्बुद्धेर्विद्यमानत्वेऽपि प्रबलेन सत्त्वेन तस्याग्रस्यमानतया अकिञ्चित्करत्वात् । अतो लौकिक एव तथा । अत एव राजस्याः प्रमाया अपि परमार्थतो न प्रामाण्यम् । तामसं त्वप्रमाणमेव । यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहेतुकम् ॥ अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतमिति । प्राकृतं तामसं ज्ञानमिति च भगवद्वाक्यात् । तच्च पामराणां बालानां च तामससामग्र्या भवति । शिष्टनिन्दितत्वाच्च तद्धेयम् । लोकव्यवहारेऽपि भ्रमबहुलं राजसभेदज्ञानेनैव गतार्थं च । अतो व्यवहारोपयोगाय साम्प्रतम् । राजसभेदानेव प्रदर्शयामः । तत्र राजसं ज्ञानं सविकल्पकमेव । ततः पूर्वं चेन्द्रियेषु सात्त्विकमुत्पद्यते निर्विकल्पकम् । तच्च सन्मात्रावगाह्येकविधमेव । जाग्रद्वृत्तेः सात्त्विकत्वेन प्रथमत एव सत्त्वानुग्रहे इन्द्रियैः प्रथमं तस्यैवोत्पादनात् । नच सविकल्पकस्यापीन्द्रियजन्यत्वात् कथमेकविधमेवेत्युच्यते इति शङ्क्यम् । तस्य तथात्वेऽप्यन्तःकरणाश्रितत्वात् । कामः सङ्कल्प इति श्रुतौ कामादीनां विशेषवृत्तीनामुल्लेखेन तथा निश्चयात् । शाण्डिल्यभाष्योक्तानुमानाभ्यां सिद्धे करणप्रमन्तरत्वे सविकल्पकव्यतिरिक्तस्य इन्द्रियसमवेतत्वाङ्गीकारे बाधकाभावात् । तस्य सन्मात्रावगाहि-

त्वं च वस्तुमात्रविषयकत्वात् । विकल्पान्यत्वकारे सत्येव वस्तुत्वपर्यवसानात् । अत एव च सात्त्विकत्वम् । यद्यपि सत्त्वात् संजायते ज्ञानमिति वाक्याद्धेतुविचारेण ज्ञानमात्रस्य सात्त्विकत्वमायाति, तथापि विभाजकवाक्येषु विषयविचारेण त्रैविध्यकथनादत्र विषयविचारेणैव तथात्वं ज्ञातव्यम् । तत्सत्त्वे चेन्द्रियमेव प्रमाणम् । रजोऽननुवेधे अस्तीत्युपलम्भस्य सर्वजनीनत्वात् । तदनुवेधे तु बुद्ध्यनुग्रहादिकल्पस्फूर्तिर्मान्द्याच्चदनुपलम्भ इति न किञ्चिदनुपपन्नम् । एतस्य सविकल्पकात् पूर्वभावेऽपि न तत्कारणत्वं, प्रमाणाभावादिति ॥

भट्टास्तु— अक्षिसन्निपातानन्तरमविविक्तसामान्यविशेषभागं संमुग्धवस्तुमात्रगोचरमालोचनज्ञानं तत् । तदभावे विकल्पसंमोह एव न जायेत । विकल्पयता हि पूर्वानुभूतं जातिविशेषं संज्ञाविशेषं वाऽनुस्मृत्य तेन तेन पुरः स्थितं वस्तु विकल्पयितव्यम् । न चार्थमदृष्टवतस्तत्स्मरणमुपपद्यते । तस्मादस्ति निर्विकल्पकमपि ज्ञानमित्याहुः ॥ सिद्धान्ते त्विदं मानसं सामान्यसंशयात्मकं वस्तुमात्रविषयकज्ञानानन्तरभावित्वेन पर्यवस्यति ॥

बौद्धास्तु— स्वलक्षणमात्रगोचरं निर्विकल्पकमिच्छन्ति । तन्मीमांसका न क्षमन्ते । तथाहि । प्रतीयते हि संमुग्धाकारं वस्तु सहसैव, यत् पश्चाच्च जातिद्रव्यगुणक्रियानामभिः पञ्चधा विकल्पेन विकल्प्यते । गौरयं, दण्ड्ययं, शुक्लोऽयं, गच्छत्ययं, डित्थोऽयमिति । तत्र निर्विकल्पकमनेकाकारं वस्तु संमुग्धं गृह्णाति । सविकल्पकं त्वेकैकाकारं जात्यादिकं विविच्य विषयीकरोति । स्वलक्षणमात्रविषयत्वे तु विवेकस्यानन्तर्यं न स्यात् । त्वन्मते जातिद्रव्यादेरभावादिति ॥

वेदान्तपरिभाषाकारस्तु— संसर्गानवगाहि ज्ञानं निर्विकल्पकम् । तच्च सोऽयं देवदत्त इति वाक्यादपि भवति । नच वाक्य-

जन्यज्ञानस्य कथं निर्विकल्पकत्वमिति शङ्क्यम्। वाक्यजन्यज्ञानविषयत्वे पदार्थसंसर्गस्यातन्त्रत्वात्। तन्त्रत्वे अनभिमतस्यापि संसर्गस्य विषयत्वापत्तेः। किन्तु तात्पर्यविषयत्वमेव तथा। तथाच तत्र संसर्गत्वेन संसर्गानवगाहात्र तस्य तथात्वं दुर्घटमित्याहु। तन्न रोचते। अनेकार्थशब्दके, सुरभि मांसं भुङ्क्त इत्यादिवाक्ये तात्पर्योऽविषयस्यापि गोसंसर्गस्य संसर्गत्वेनैव शब्दाज्ज्ञानदर्शनेन तस्य विषयताया दुर्वारत्वात्। तत्त्वमसीत्यादिवाक्यजन्यस्य सन्मात्रविषयकत्वेन निर्विकल्पकत्वसिद्धेश्च॥

नैय्यायिकास्तु— वैशिष्ट्यानवगाहि निष्प्रकारकं वा ज्ञानं निर्विकल्पकम्। यद्यपि तत्सत्त्वे नेन्द्रियं प्रमाणं, तथाप्ययं घट इति विशिष्टज्ञानरूपकार्यानुमेयम्। तथाहि। अयं घट इति ज्ञानं विशेषणज्ञानपूर्वकं, विशिष्टज्ञानत्वात्। यद्विशिष्टज्ञानं तद्विशेषणज्ञानपूर्वकम्। यथा दण्डी पुरुष इति ज्ञानमिति। तच्चात्र जन्मान्तरीयभगवदीयविशिष्टज्ञानयोर्व्यवहितत्ववैयधिकरण्याभ्यां विशेषणज्ञानत्वासम्भवात्। घट इति ज्ञानात् पूर्वं वैशिष्ट्यानवगाहि जायत इति मन्तव्यम्। तदेव निर्विकल्पकमिति दिगित्याहुः॥

प्राभाकरास्तु— निर्विकल्पकं ज्ञानमेव न। विशेष्यविशेष्ययोः समानसंवित्संवेद्यत्वादित्याहुः॥

वयं तु— विशिष्टज्ञानं प्रति यद्विशेषणज्ञानस्य कारणत्वं नियतं तदिन्द्रियेण गृह्यमाणस्यैव तस्य। अन्यथा दण्डनिर्विकल्पकानन्तरं दण्डीति बुद्धिः स्यात्। नच विशिष्टवैशिष्ट्यबुद्धिं प्रति गृह्यमाणविशेषणज्ञानत्वेन कारणता, केवलविशिष्टबुद्धिं प्रति त्वऽगृह्यमाणेनापि तेन सेति वाच्यम्। दृष्टान्ताभावेन तादृङ्नियमे प्रामाण्याभावात्। तर्हि प्राथमिकं घट इति ज्ञानं कथमिति चेद्, इन्द्रियार्थसन्निकर्षे प्रागेव रजोऽनुवेधेन तद्वाचकशब्दस्फुरणादिति

बुद्ध्यस्त्व । नचैवं विशिष्टबुद्धिं प्रति विशेषणज्ञानत्वेन कारणत्वनियमव्याहतिः। विशिष्टबुद्धिपदेन विशिष्टवैशिष्ट्यबुद्धेर्ज्ञान्यत्वात्। नच रजतमदृष्टवतः शुक्तिदर्शनेऽपीदं रजतमिति रजतत्वप्रकारकभ्रमो नोत्पद्यत इति विशिष्टबुद्धावपि विशेषणज्ञानस्य हेतुता मन्तव्यैवेति वाच्यम्। वाचकशब्दाऽस्फूर्तिस्फूर्तिभ्यामेवोपपत्तेस्तस्या अनावश्यकत्वात्। घटो द्रव्यमितिवदिदं रजतमित्यस्यापि एकविशिष्टे परवैशिष्ट्यमितिविषयताकविशिष्टवैशिष्ट्यबुद्धित्वात्। तत्र विशेषणज्ञानस्य गृह्यमाणस्यैव हेतुत्वेन भ्रमोपपत्तेः सुवचत्वाच्च। ततोऽनुमानस्यार्थान्तरपर्यवसन्नत्वान्नैयायिकोक्तरीत्या न तादृशनिर्विकल्पकसिद्धिरिति दिक्॥

नास्तिकास्तु— वैशिष्ट्यानवगाहिज्ञानं साक्षात्कार इति स्वीकृत्य तदेव परमार्थसत्। सविकल्पकं त्वलीकघटत्वादिसामान्यविषयकत्वाद् भ्रान्तमित्याहुः॥ ते तु घटत्वादिसामान्यसत्त्वस्याग्रे वक्ष्यमाणत्वात् प्रक्रियाजन्यज्ञानस्य तामसत्वाच्च निरसनीयाः॥

तस्मादुभयविधमपि ज्ञानं निर्बाधम्। तत्रेन्द्रियाश्रितं निर्विकल्पकं सात्त्विकमपि द्रागेव रजसा ग्रस्यत इति राजसकोटौ निवेश्यते। तस्मात् सविकल्पकमेव राजसं ज्ञानम्। तच्च पृथक्त्वेनेत्यादिभगवद्वाक्यात् सद्विकल्पावगाहि। विकल्पाः सतोऽवान्तरविशेषास्तद्विषयमित्यर्थः।

नैय्यायिकास्तु— वैशिष्ट्यावगाहि सप्रकारकं सविशेष्यकं वा ज्ञानं सविकल्पकमित्याहुः। तदप्युक्तान्नातिरिच्यते। प्रकारताविशेष्यते चायं घट इत्यादिज्ञाने विशेषणविशेष्ययोर्घटत्वघटयोर्विशेषणत्वाधारत्वापरनामानौ विषयताविशेषौ। विषयता च ज्ञानार्थयोः स्वरूपसम्बन्धविशेषः। स च स्वरूपसम्बन्धो ज्ञाने विषयितापदवाच्यः, अर्थे विषयतापदवाच्यः। एवं प्रकारतापि बोध्यम्॥

अपरे तु भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वमिति लक्षयित्वा भासमानं यद्वैशिष्ट्यं तत्प्रतियोगित्वं प्रकारत्वम् । यथाऽयं घट इति ज्ञाने घटत्वस्य वैशिष्ट्यं समवायो भासते । तत्प्रतियोगि च घटत्वमित्याहुः । तन्न । दण्डपुरुषसंयोगा इति समूहालम्बने, दण्डी पुरुष इतिवद्दण्डस्य प्रकारतापत्तेः । संयोगो हि दण्डस्य वैशिष्ट्यं भासते । तत्प्रतियोगी च दण्ड इति मञ्जरीकारः ॥

अन्ये तु— भासमानं यद्वैशिष्ट्यप्रतियोगित्वं तत्प्रकारत्वमित्येवं समासोऽत्र विवक्षितः । एवञ्चोक्तसमूहालम्बने प्रतियोगित्वस्याभानान्न तत्साधारण्यम् । नन्वेवमपि दण्डपुरुषसंयोगतत्प्रतियोगित्वानुयोगित्वानीति समूहालम्बनसाधारण्यमिदं संगच्छत इति चेन्न । स्वरूपतो भासमानस्य वैशिष्ट्यप्रतियोगित्वानुयोगित्वस्य प्रकारत्वविशेष्यत्वस्य वाच्यत्वात् । समूहालम्बने हि तत्प्रतियोगित्वानुयोगित्वमतिरिक्तं भासते, न स्वरूपतः । विशिष्टबुद्धौ तु तथेति न दोष इत्याहुः । तदपि न । प्रतियोगित्वादेः स्वरूपसम्बन्धरूपत्वेनातिरिक्तत्वे मानाभावात् । तथात्वे विशिष्टबुद्धावपि स्वरूपतो भानासम्भवादिति प्रकारत्वविशेष्यत्वे विषयताविशेषावेवेत्येव युक्तम् । तत्र विशेषणत्वोपलक्षणत्वभेदात् प्रकारता द्विधा । तत्र विशेष्यतावच्छेदकत्वे सति व्यावर्तकत्वं विशेषणत्वम् । यथा, दण्डी पुरुष इत्यत्र दण्डित्वम् । तदनवच्छेदकत्वे सति व्यावर्तकत्वमुपलक्षणत्वम् । यथा जटाभिस्तापसः, काकवद्देवदत्तस्य गृहमित्यत्र जटाकाकौ । प्रत्याय्य व्यावृत्त्यधिकरणत्वं च विशेष्यत्वमिति नैयायिकाः । कार्यान्वयित्वं विशेषणत्वं, तदनन्वयित्वमुपाधित्वम्, तदेव चोपलक्षणत्वमिति मायावादिनः ॥

भट्टास्तु— ज्ञातो घट इति प्रतीतेर्ज्ञानजन्यो विषयनिष्ठः प्राकट्यापरनामा पदार्थो ज्ञातता । सैव च विषयता विषयविषयिणोः

सम्बन्धस्वरूपा । अवश्यमन्तव्या चेयम् । कथमन्यथा ज्ञानकर्मत्वं, घटादेः क्रियाजन्यफलशालित्वाभावादित्याहुः ॥

अत्र केचित्— नैतद् युक्तम् । विनष्टे घटे ज्ञात इति प्रतीतेः । न हि तत्र ज्ञानं किञ्चिज्जनयितुं शक्नोति । तस्यैवासत्त्वात् । न च समवायिकारणं विना भावकार्योत्पत्तिः सम्भवति । तत्र स्वरूपसम्बन्धविशेष एव प्रतीतेर्विषय इति चेत् । अन्यत्रापि स एवास्तु, कृतमधिकेन । कर्मत्वस्यापि तद्वदेवोपपत्तेरित्याहुः ॥

तत्तुच्छम् । विषयविषयिणोर्विषयविषयिभावात्मकः स्वरूपमेव सम्बन्ध इति वादिमतेऽपि विनष्टघटस्यासत्त्वात् स्वरूपसम्बन्धस्याभावेन ज्ञानविषयत्वाभावापत्तेः । नच शशशृङ्गमितिवदसदपि भवति ज्ञानविषय इति वाच्यम् । शशशृङ्गमिति ज्ञानस्य भ्रमत्वादस्यापि तुल्यविषयतया भ्रमत्वापत्तेः । किञ्च, भ्रमे हि यावन्तः पदार्था भासन्ते ते अन्यत्र प्रसिद्धा एव । अन्यथाऽप्रसिद्धस्यापि भ्रमः स्यात् । तथाच न भ्रमोऽप्यसद्विषयक इति फलति । तथा सति कुतस्तरां प्रमायां तथात्वम् । ननु तथापि भ्रमप्रमावैलक्षण्यायाऽसदेव वैशिष्ट्यं भ्रमे सदुपरागेण भासत इति मन्तव्यमेवेति चेत्, तर्हि प्रकृतेऽपि कपालोपरागेणासन्नेव घटो भासत इति भ्रमत्वमेव मन्तव्यम् । ननु सदुपरागेण भानं भ्रमप्रयोजकं न भवति । अभावप्रतीतिमात्रबाधापत्तेः । प्रतियोगिसत्तामेवादाय तत्र सत्ताङ्गीकारात् । अतो दोषबाधावेव प्रयोजकाविति तदभावादस्य भ्रमत्वमितिचेन्न । एतस्य प्रतिबाधनादरणीयत्वात् । मतान्तरे सत्ताया धर्मान्तरत्वेनाभावेऽपि तत्सत्त्वे बाधकाभावात् । अतः सत्तयैवाभावप्रतीत्युपपत्तेः सदुपरागस्यापि भ्रमप्रयोजकत्वं वाच्यमेवेति पूर्वोक्तज्ञाने भ्रमत्वापत्तिर्दुर्वारैव । किञ्च, सदुपरागेण भानं वदता असत एव भानमङ्गीकृतम् । तत्तु भ्रमेऽप्यनुपपन्नमेव ।

ज्ञानप्रयोजकमस्तिकर्षव्याप्तिदस्यादेरसत्त्वभावात्। प्रयोजकमन्तरेण ज्ञानाङ्गीकारे सर्वदा भ्रमः स्यात्। अतो भ्रमोऽपि सद्विषयक एव। न च प्रमावैलक्षण्यानुपपत्तिः। अन्यख्यातिवादेन दोषबाधाभ्यामेवोपपत्तेः। एवं सति प्रमायां सुतरां सत्तापेक्षेति विनष्टघटस्थलेऽपि सूक्ष्मरूपेण घटसत्त्वमङ्गीकार्यमेवेति ज्ञाततोत्पत्तौ बाधकाभावाद् गौरवमात्रमेव ज्ञाततापक्षे दूषणम्। अर्थप्रकाशाऽतिरिक्तप्राकट्यस्यात्र वक्तुमशक्यत्वाच्च। ज्ञातताखरूपस्याप्यसिद्धिरिति च। तेन न्यायमतमेवात्र सम्यगिति। वस्तुतस्तु सत्कार्यवादस्य श्रुतिसिद्धत्वात्। सदप्याविर्भावापरपर्यायतयाऽङ्गीक्रियत इति भाट्टमते प्रामाणिकत्वान्न दोषावहमिति दिक्॥

प्रकृतमनुसरामः॥ उक्तरूप सविकल्पकं द्विधा— विशिष्टबुद्धिसमूहालम्बनभेदात्। तत्राद्यं तत्प्रकारकबुद्धित्वम्। यथा घट इति। दण्डी पुरुष इत्यादिरूपा विशिष्टवैशिष्ट्यबुद्धिस्तु तस्या भेदः। द्वितीयं तु तद्विशेष्यकबुद्धित्वम्। यथा दण्डपुरुषसंयोगा इति। घटपटस्तम्भा इति विशिष्टसमूहालम्बनमपि तस्यैव भेदः॥

साम्प्रदायिकनैयायिकास्तु— तत्र विशिष्टवैशिष्ट्यबुद्धौ विषयता चतुर्विधा— एकत्र द्वयमित्येका। एकविशिष्टे परवैशिष्ट्यमितीतरा। विशिष्टस्य वैशिष्ट्यमित्यन्या। विशेष्ये विशेषणं, तत्रापि विशेषणान्तरमिति चतुर्थी। तत्र यत्रैकस्मिन् विशेष्ये युगपदेव विशेषणद्वयं भासते सैकत्र द्वयमिति नाम्नी। उदाहरण— कृष्णो दण्डकुण्डलवानिति, घटत्वद्रव्यत्ववदिदमिति च। यत्र पुनरेकविशिष्टे वैशिष्ट्यं भासते सा विशिष्टे वैशिष्ट्यमिति। यथा कृष्णः श्यामः कुण्डली भूतले घट इत्यादि। एतयोर्विशेष्यतावच्छेदकप्रकारकनिश्चयत्वेन विशेषणज्ञानस्य हेतुता। यत्र चैकविशेषणविशिष्टस्यान्यत्र वैशिष्ट्यं भासते सा विशिष्टस्य वैशि-

ष्ट्यमिति। उदाहरणं— वेणुमान् कृष्णः, घटवद् भूतलं, रक्तदण्डवान् देवदत्त इति। अत्र विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन हेतुता। यत्र तु पूर्वं मुख्यं विशेष्ये विशेषणं भासते ततस्तत्र विशेषणान्तरं सविशेष्ये विशेषणं तत्र विशेषणान्तरमिति। यथा भूतलं घटवदिति रक्तदण्डवांश्च वेति च। अत्र विशेषणतावच्छेदकप्रकारकज्ञानत्वेन हेतुतेत्याहुः॥

रामनाथस्तु— विशिष्टस्य वैशिष्ट्यमित्यतो विषयवैलक्षण्याऽभावात् प्रयोजनाभावाच्च तुरीया न प्रामाणिकीत्यवदत्।

तत्तुच्छम्। रक्तदण्डवांश्च वा, भूतलं घटवन्नवेत्यादिसंशयस्य विशिष्टवैशिष्ट्यमिति विषयताकत्वेन गृह्यमाणस्य तत्त्वाभावापत्तेः। विशेषणतावच्छेदकप्रकारकनिश्चयाभावाद्विशिष्टस्य वैशिष्ट्यमिति विषयतायास्तत्र वक्तुमशक्यत्वात्। यद्यपि विषयस्तुल्यस्तथाप्यनुभवभेदाद्भेदः। अन्यथा घटवद्भूतलं भूतले घट इत्यनयोरपि विषयभेदाभावाद्विशिष्टवैशिष्ट्यमपि न सिद्ध्येत्। अत एवानुभवसिद्धो ह्ययं विशिष्टवैशिष्ट्यबुद्धीनां विषयताविशेष इति दीधितिकृतोक्तम्। इदमत्र प्रसङ्गादुक्तम्॥

प्रकृतमधुनाऽनुसरामः॥ पूर्वोक्तं सविकल्पकं तु पञ्चविधम्। संशयविपर्यासनिश्चयस्मृतिस्वाप्नभेदात्। ते च तृतीयस्कन्धे प्रदिष्टाः। संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च * स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथगिति। यद्यपीदं बुद्धिलक्षणं, तेन बुद्धिवृत्तिरूपा एते भवन्ति, न तु ज्ञानभेदास्तथापि, बुद्धिर्विज्ञानरूपिणीति बुद्धेः स्वरूपलक्षणाद् विशिष्टज्ञानसमानाकारा बुद्धिरिति तेनैव विशिष्टज्ञानभेदा अपि सिद्ध्यन्तीत्यदोषः॥

अथैषां लक्षणान्युच्यन्ते॥ धर्मित्वेन विवक्षितस्येतरभेदज्ञापको धर्मो हि लक्षणमिति बोधसौकर्यार्थं तस्यावश्यकत्वात् तत्र

एकस्मिन् धर्मिणि विरुद्धनानाकोट्यवगाहि ज्ञानं संशयः। समूहालम्बनेऽतिव्याप्तिवारणायैकस्मिन् धर्मिणीति । इमे चूताः पनसा वा, एतौ नरौ स्थाणू वेत्यादौ तु धर्मितावच्छेदकैक्यमादाय धर्मिण एकत्वमित्यदोषः । इदं रजतमित्यादिविशिष्टवैशिष्ट्यनिश्चयज्ञानवारणाय विरुद्धेति ।

इदन्तारजतत्वयोरविरोधादभ्रमेऽस्ति विरोध इतिचेन्न। तत्र मायिकस्यैवेदमंशस्य भानेन पारमार्थिकस्याप्रमेयत्वात् । अन्यथा ज्ञानस्य साक्षित्वापत्ते । विशेषास्फूर्तिहेतुकं विरुद्धनानाकोट्यवगाहिज्ञानं वा, न त्वेकधर्मिकभावाभावकोटिज्ञानं तत् । तत्तदभावसमूहालम्बनेऽतिव्याप्तेः । नाऽपि विरोधसंसर्गकं ज्ञानमिति । स्थाणुत्वपुरुषत्वयोः संसर्गत्वेन विरोधस्याभावात् । धर्मिणि तूभयोः प्रकारतया धर्मिणा सह विरोधस्यैवाभावात् । संशये प्रकारतया भानेऽपि दोषविशेषघटितसामग्र्या यत्कोट्या विरोधविशिष्टतया भानं तत्रापि विरोधस्य पूर्वं तद्विशेषणतयैव प्रमिततया तदापि तथैव भाननिश्चयेन संसर्गतया भानस्याऽशक्यवचनत्वात् । नचात्र समूहप्रतीतेर्जायमानत्वात् तदुपपादनाय विरोधस्य संसर्गत्वं कल्प्यत इति वाच्यम् । कोट्योः पर्यायेण प्रतीत्या तस्या एव भावात् ।तस्मात् पूर्वोक्तमेव लक्षणम् । स च द्विविधः । सम उत्कटकोटिकश्च । तत्र संस्कारतेजसोर्विरुद्धयोः संस्कारयोस्तेजसोः शब्दयोर्वा तुल्यप्रकाशकत्वे विशेषास्फूर्तौ समः । यथा, इदं रजतं न वा, स्थाणुर्न वा, वसनमुज्ज्वलं न वा, परमाणुरूपा भूर्नित्याऽनित्या वेत्यादि । अयमपि शुद्धसङ्कीर्णभेदाद् द्विविधः । तत्र शुद्ध उक्तः । स्थाणुर्वा पुरुषो वेति तु सङ्कीर्णः । भावान्तरधर्मेण साङ्कर्यात् । पुनरपि द्विविधः । साधारणधर्मदर्शनजन्या विप्रतिपत्तिजन्या च । तत्राद्यः सङ्कीर्णात्मा। द्वितीयस्तु, परमाणुरूपा भूर्नित्या अनित्या वेति।पुरा-

णादावनित्यत्वस्य न्यायदर्शनादौ परमाणूनां नित्यत्वस्य चोक्तेः ॥

केचित्तु सकलनिश्चितनित्यानित्यव्यावृत्तत्वेन गन्धवत्त्वेन तादृश-शब्दत्वादिविशिष्टशब्दज्ञानेन चासाधारणधर्मदर्शनजन्यमानं तृतीय-मप्याहुः। तन्न रोचते । असाधारणधर्मदर्शनस्य संशयोत्पादक-त्वे मानाभावात्। गन्धवती भूर्नित्याऽनित्या वा। वर्णात्मा शब्दो नित्योऽनित्यो वेत्यादिस्तु विप्रतिपत्तिजनित एव। पृथिवीशब्दयो-रनित्यतायाः प्रत्यक्षसिद्धत्वेन सकलानित्यव्यावृत्तत्वाभावनिश्चयात्। गन्धवत्त्वशब्दत्वादिहेतुकानुमानेन परमाणुवर्णयोरनित्यतायाः सा-ध्यसाधनत्वादिति। प्रत्यक्षसंशये धर्मेन्द्रियसन्निकर्षेणैव निर्वाहाद्ध-र्मिज्ञानस्य कारणत्वं मीमांसका नेच्छन्ति। अन्वयव्यतिरेकसिद्ध-त्वान्नैयायिकास्त्विच्छन्ति। सामग्रीसंस्कारयोरन्यतरस्य प्राबल्ये तेजआदिभिः सहकारिभिस्तदनुगुणधर्मप्रकाशने अल्पविशेषस्फूर्तौ उत्कटकोटिको भवति। भूयोविशेषस्फूर्त्यभावेन द्वितीयलक्षणेऽपि नाव्याप्तिदोषः। सम्भावनाप्युत्कटकोटिकसंशयविशेष एव। अत एव सम्भावितं सर्वमेवाप्रमापामिति तृतीयस्कन्धे व्युत्पादितम्। तर्कोऽपि तथा। सम्भावनान्तर्गतत्वात्। स्वोत्प्रेक्षिता युक्तिस्तर्क इति तल्लक्षणात्। अनिष्टप्रसञ्जनरूपत्वेऽपि तदनपायात्, प्रयोगे सं-भावनार्थकलिङ्घटितवाक्यप्रयोगाच्च। व्याप्तिमूलभूतस्य फलं निश्चयो, न तु स्वयं निश्चयरूप इति न काप्यनुपपत्तिः। नच तत्र कोट्यन्तरास्फुरणात् सम्भावनायाः कथं संशयाऽन्तःपातित्वमिति वाच्यम्। न्यग्भूतस्फूर्तेस्तत्रापि सत्त्वात्। अन्यथा, अयं प्रायः पुरुष इत्यादौ प्रायस्त्वास्फुरणापत्तेरिति दिक् ॥

विपर्यासस्तु— सम्प्रयुक्तभिन्नार्थमात्रप्रतिपादकं बाह्यं ज्ञान-म्। मात्रपदं संशयवारणाय। बाह्यमिति स्मृतिस्वाप्नयोर्वारणाय। अयं च विषयदोषात् कारणदोषाच्च भवति। यथेदं रजतमिति,

शङ्खः पीत इति, घटो भ्रमतीति वह्नः। वस्तुतस्त्वावरकत्वाल्ला-घवाच्च करणदोषादेवेति निश्चयः। केचन, शङ्खः पीत इत्यादौ गृह्यमाणारोपमाहुः। तदपि त्रिक्षणिकज्ञानवादिमते न सङ्गच्छते। परेण गृह्यमाणस्यारोपेऽतिप्रसङ्गापत्तेः। स्वयं तत्र गृह्यमाणत्वे आरोपस्यैव बाधात्। स्वयमन्यत्र गृह्यमाणस्य स्वारोपदशायां ग्रह-णस्य नाशेन गृह्यमाणत्वस्यायथार्थवचनत्वाच्च। अतो जपारुण-स्फटिकमुखप्रतिबिम्बादिकमेव तत्रोदाहरणीयमिति दिक्॥

अत्र बहवः ख्यातिवादाः॥ तत्पूर्वोत्पन्नस्यानुभवस्य संस्का-रात्मना स्थितस्योद्बोधकैः प्रापरूपे मायिकार्थाकारवती बुद्धिवृ-त्तिर्माययाः बहिः क्षिप्यते। तदा सा पुरोवर्तिनं सर्वतोऽप्यतो वा-ऽऽवृत्य बहिरवभासत इति मायिकस्यान्यस्यैव ख्यानादन्यख्याति-रित्यत्र व्यवह्रियते॥

नैयायिकास्तु— चाकचक्याद्युद्बुद्धसंस्कारसहकृतेन दोषोप-हितेन्द्रियेण सम्प्रयुक्ता शुक्तिरेव रजतात्मना गृह्यते इति सम्प्रयु-क्तस्यान्यथाभानादन्यथाख्यातिरेवेयमित्याहुः॥

भाट्टास्तु— कर्तृगतैर्दोषैः प्रमुष्टतत्ताका स्मृतिरेवात्रेत्यख्या-तिवादमाहुः॥

प्राभाकरास्तु— प्रमुषिते स्मरणाभिमाने अगृहीतासंसर्गकं ज्ञानद्वयमत्रेत्येवमख्यातिवादमाहुः॥

मायावादिनस्तु— तत्र अविद्ययाऽनिर्वचनीयं रजतमुत्पद्यत इत्यनिर्वचनीयख्यातिमाहुः॥

बौद्धास्तु— असदेव रजतं ख्यायत इत्यसत्ख्यातिमाहुः॥

विज्ञानवादिनस्तु— क्षणिकविज्ञानरूप आत्मैव बहिः ख्या-यत इत्यात्मख्यातिमाहुः॥

सांख्यास्तु— सदसती ख्यायेते इति सदसत्ख्यातिमाहुः॥

तेषां दूषणं ख्यातिवादे प्रपञ्चितमिति नेह विस्तरः ॥

ख्यात्यन्तरे संसर्गोऽसन्नेव भासते । असत्ख्यातौ तु संसर्गिणोऽप्यसन्त इति पार्थसारथिमिश्राः ॥

निश्चयो यथार्थानुभवः । अयमेव प्रमेति व्यवह्रियते । याथार्थ्यं चार्थानतिवर्तित्वम् । सम्प्रयुक्तार्थं देशादिपूर्वकं विषयीकृत्य जायमानत्वमिति यावत् । तेन संशयविपर्यासस्वापानां निरासः । संशयेऽपि कोट्यन्तरेऽर्थातिक्रमात् । विपर्यासे स्वापे चार्थाभावेनैवातिक्रमात् । नच रजतरङ्गयोरिमे रङ्गरजते इति विपरीतभ्रमे सम्प्रयुक्तार्थातिक्रमाभावादतिव्याप्तिः । देशातिक्रमेण सम्प्रयुक्तार्थातिक्रमस्य तत्रापि सत्त्वात् । एवमेव भ्रमान्तरेऽप्युन्नेयम् । नचेन्द्रियसंसृष्टेऽपि वह्नौ तदनुमिते सम्प्रयुक्तार्थातिक्रमेण जायमानतया तत्राव्याप्तिः शङ्क्या । तत्रापि धूमादिरूपाव्यभिचरितसम्बन्धिद्वारार्थसंसर्गस्य सत्त्वात् । नचातीतानागतहेतुस्थले यानुमितिस्तत्राव्याप्तिरिति शङ्क्यम् । अतीते हेतौ पुरुषेणादृष्टेऽनुमितेरेवानुदयात् । यत्र पुनर्धूमः पूर्वं दृष्टस्ततो नष्टस्तदनन्तरं च वह्न्यनुमितिस्तत्र तत्रापि धूमध्वंसाधिकरणस्यादर्शने तस्या अनुदयात् काऽव्याप्तिः । वह्न्यर्थिप्रवृत्तिस्तु सम्भावनयैव । दानसम्भावनयार्थिप्रवृत्तिवत् । सम्भावना च व्याप्तिस्मरणात् । भूतलादिरूपधूमाधिकरणमात्रदर्शने तु वह्निसाक्षात्कारो वा, सम्भावना वा, विलक्षणोच्छूनभस्मादिना वाऽनुमितिर्न तु धूमध्वंसेन । तस्याधिकरणव्यङ्ग्यत्वेन तदधिकरणस्य च धूमाश्रयत्वेन योग्यानां तेषां धूमानतिरिक्तत्वात् । तत एवानुमितिजननात् । अथ दरदग्धेन्धनादिरेव धूमाधिकरणत्वेन विवक्षितस्तर्ह्यावश्यकत्वाल्लाघवाद् दृष्टानुरोधित्वाच्च तेनैवानुमितिर्न तु धूमध्वंसेन । तस्य चास्त्येवार्थे सम्बन्धित्वमतो नाव्याप्त्यवकाशः । एवमेवानागतस्थलेऽपि प्रागभावव्य-

ञ्जकस्यानुमापकत्वमिति तत्रापि तथा । धूलीपटले धूमभ्रमेण याऽनुमितिः सा स्वलक्ष्येति न तत्राव्याप्तिर्दोषाय । कदाचिद्वह्निव्याप्तिस्तु काकतालीयत्वान्न तस्याः प्रमात्वनिर्वाहायालमिति दिक्॥

उपमितिस्तु— सादृश्यादिसहकृतेन्द्रियार्थसंसर्गजन्यैव । शाब्दमपि शब्दस्य नित्यसमर्थसम्बद्धत्वात् तेन चक्षुरादिवत् पदार्थोपस्थितेः शब्दार्थजन्यमेवेति न काप्यव्याप्तिरिति सुष्ठु ॥

केचित्तु— तद्वति तदवगाहित्वं याथार्थ्यम् । तच्च तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वम् । नचैवं वह्निगुञ्जापुञ्जयोरिमौ गुञ्जापुञ्जवह्नी इति विपरीतभ्रमे वह्न्यंशे वह्नित्ववद्विशेष्यकत्वस्य गुञ्जांशे वह्नित्वप्रकारकत्वस्य च सत्त्वात् तत्रापि प्रमात्वापत्तिः शङ्क्या । तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वस्य विवक्षितत्वात् । एवं शुक्तावपि कालिकादिसम्बन्धेन रजतत्ववत्त्वस्य सत्त्वाद्रजतभ्रमे रजतं संयोगसम्बन्धेन रजतत्ववदिति सम्बन्धभ्रमे चातिव्याप्तिवारणायोभयत्र तत्सम्बन्धावच्छिन्नत्वमपि निवेशनीयम् । तथाच तत्सम्बन्धावच्छिन्नतद्वन्निष्ठविशेष्यतानिरूपिततत्सम्बन्धावच्छिन्नतन्निष्ठप्रकारताशालिज्ञानत्वे तदर्थः फलतीति ॥

तन्न । संशयस्यापि यथार्थत्वापत्तेः । नच तदंशे सोऽपि यथार्थ एवेति वाच्यम् । तथा सत्यवशिष्टांशे भ्रमत्वमेव तस्येति संशयोच्छेदापत्तेः । नच भ्रमप्रमासाधारणज्ञानस्य संशयत्वान्नोच्छेद इति वाच्यम् । ज्ञानस्य गुणत्वान्निरंशत्वेनैकस्योभयात्मकताया वक्तुमशक्यत्वात् । अत एव शाखावच्छेदेन कपिसंयोगवति वृक्षे, मूले वृक्षः कपिसंयोगीति प्रत्ययस्यापि नानया दिशा प्रमात्वम् । किन्त्वेकदेशविकृतन्यायेनेति बोध्यम् । अन्यथा पुरोवर्तित्वप्रमूहालम्बनाद्यंशे भ्रममात्रस्य तद्वति तदवगाहित्वेनांशतः प्रामाण्यसत्त्वात् केवलभ्रम उदाहर्तुमशक्य एव स्यात् । नाऽपि तद्वति तत्प्रमा-

अप्रकारावगाहित्वं, तद्वति तत्प्रकारकानिश्चयत्वं वा तत् । निर्विकल्पकेऽव्याप्तेः । तस्य धर्मस्वरूपमात्रावगाहित्वेन तद्वत्ताद्यनवगाहित्वात् । अवगाहे निर्विकल्पताहानिप्रसङ्गात् । नच तस्य न लक्ष्यत्वमिति वाच्यम् । अयथार्थत्वापत्तेः । नचेष्टापत्तिः । तज्जन्यसविकल्पकस्यापि तथात्वापत्तेः । तस्मादुक्तमेव लक्षणमिति निश्चेयम् । नचैवं स्मृतेरयथार्थत्वापत्तिः । परम्परया तस्या अप्यर्थमनतिक्रम्यैव जायमानत्वात् । नच तथा सति तस्याः प्रमाणत्वापत्तिः। अर्द्धाङ्गीभावात् । ज्ञानस्यार्थप्रकाशरूपत्वेनाऽर्थस्य तदर्द्धाङ्गत्वात् । अतोऽन्तरविद्यमानानामप्यनुभूतसमानां भावया अन्तरुपस्थापने तस्यास्तत्सहकृतत्वात् । यथा शिरोऽतिरिक्तसर्वावयवसम्पूर्णः क्रियां कुर्वन्नपि देहः शिरोहीनत्वात् कबन्ध एव । तथा स्मृतिर्हीनरूपाऽपि प्रवृत्त्यादिकार्यं जनयन्त्यर्थाभावान्न निश्चयरूपेणानुभवपदेन तस्या अपि निरासः । अनुभवस्तु स्मृतिभिन्नं ज्ञानम् । साक्षात्प्रमाणजन्यं ज्ञानं वा । साक्षात्त्वञ्च क्लृप्तद्वाराऽतिरिक्तानन्तरितत्वम् । तेन नानुमित्यादावव्याप्तिः । साक्षात्पदेनैव च स्मृतेरपि निरासः । अनुभवसूक्ष्माऽवस्थारूपस्य संस्कारस्य अनुभवतद्ध्वंसयोश्च क्लृप्तद्वाराऽनन्तःपातित्वात् । द्वाराणि त्वग्रे तत्तत्प्रस्तावे वाच्यानि । प्रमाणपदं च ज्ञानकरणपरम् । तेन संशयादेः सग्रहः । नच स्मृतिनिरासाय चेदनुभवपदम् । तर्हि स्मृतिभिन्नं ज्ञानमनुभव इत्येव लक्षणं लघुत्वादादरणीयमिति वाच्यम् । संस्कारजन्यं ज्ञानं स्मृतिरिति स्मृतिलक्षणानङ्गीकारस्याग्रे प्रपञ्चनीयत्वेन गुरुत्वमङ्गीकृत्यैवास्यादरणादिति दिक् ॥

तच्च निश्चयात्मकं ज्ञानं प्रत्यक्षपरोक्षभेदेन द्विविधम् । तत्र इन्द्रियार्थसत्संप्रयोगजन्यं ज्ञानं प्रत्यक्षम्। एतदेव लोके साक्षात्कारपदेनोच्यते । ईश्वरज्ञानं तु न लक्ष्यम्। शब्दादपरोक्षं च न युक्ति-

सदृमित्युपपादयिष्यते । सँश्चासौ सम्प्रयोगश्चेति समासः । मायिकविषयग्राहकसामग्न्यऽप्रतिहत इत्यर्थः। तेन संशयादेर्निरासः। तत्र तत्सम्प्रयोगस्यासत्त्वाद् दुष्टत्वादित्यर्थः । यत्तु प्रमाणचैतन्यस्य विषयचैतन्याभेदः प्रत्यक्षमिति मतम् । तदुपरिष्टाज्ज्ञानोत्पत्तिप्रक्रियायां निरसनीयम् । तस्मादुक्तमेव प्रत्यक्षलक्षणम् । संशयादौ प्रत्यक्षत्वव्यवहारस्तु सादृश्यनिबन्धनो गौणः । तत्सञ्जिघृक्षायां तु सत्पदं त्याज्यम् । तद्भिन्नं ज्ञानं परोक्षम् । एतयोर्भेदा अग्रे वाच्याः। स्मृतिस्तु संस्कारमात्रजन्यं ज्ञानम् । निद्रावहिरिन्द्रियाजन्यत्वे सति संस्कारजन्यमिति यावत् । तेन न लुप्यन्तरेऽतिव्याप्तिः । यद्वा संस्कारत्वेन संस्कारजन्यं ज्ञानं स्मृतिः । प्रत्यभिज्ञादेः सहकारित्वेन संस्कारजन्यत्वान्न तत्रातिव्याप्तिः ।

नच भावनासंस्कारस्य सिद्धान्तेऽनङ्गीकारादसम्भव इति शङ्क्यम् । अनुभवसूक्ष्मावस्थारूपस्य संस्कारस्याङ्गीकारादित्युक्तम् । नच, सद्यो नष्टस्मृतिर्गोपीयत्रानुभवाव्यवहितोत्तरमपि स्मृत्यङ्गीकाराव तदानीं च सूक्ष्मावस्थानुपपत्तेस्तादृश—व्यक्तावव्याप्तिरिति वाच्यम् । तस्या अलौकिकलीलान्तःपातित्वेनात्रालक्ष्यत्वात् । तस्या अपि लक्ष्यत्वे तु अनुभवभिन्नं ज्ञानं स्मृतिरिति लक्षणम् । नन्वेवं सति स्मृतिजनकतावच्छेदकाननुगम इति चेन्न। अनुभवत्वस्यैवावच्छेदकत्वात्। अवस्थायाः स्वरूपभेदानापादकत्वात्। नचाऽवच्छेदकगौरवमिति वाच्यम् । प्रामाणिकत्वात् । पदार्थान्तररूपसंस्काराऽनङ्गीकारेण प्रत्युत लाघवाच्च। नन्वनुभवाव्यवहितोत्तरक्षणे या स्मृतिः सा उपनीतभानरूपैवाङ्गीकार्या। न च स्मृतिपदविरोधः । स्मृतिप्रतिलम्भे सर्वग्रन्थीनां प्रविमोक्ष इति श्रुतौ स्मृतिपदस्य मोचकसाक्षात्कारपरत्वेनापि व्याख्यानेनान्यत्रापि तथा वक्तुं शक्यत्वादितिचेन्न । लाक्षणिकत्वाव । आर्जवेन सिद्धौ त-

दङ्गीकारस्यायुक्तत्वात् । किञ्चात्रोपनीतभानत्वाङ्गीकारे स्मृतित्वोच्छेदप्रसङ्गः । भावनासंस्कारोपनीततत्त्वस्य, सर्वत्र वक्तुं शक्यत्वात् । नच ज्ञानातिरिक्तस्योपनायकत्वाभावान्न तथेति वाच्यम् । अप्रयोजकत्वात् । क्लृप्तमानाद्यभावेऽपि ज्ञानजनकत्वस्योपनायकत्वेन संस्कारेऽपि ततस्त्वात् । नन्वेवं स्मृतेरुपनीतभानरूपत्वेऽनुभवान्तःपातित्वेनानुभवामीत्यनुव्यवसायापत्तिरितिचेन्न । अनुभवत्वसामान्येऽप्यनुमितिसनन्तरमनुमिनोमीत्यनुव्यवसायाद् अनुभवामीत्यस्याभावाच्च तथाऽऽपादयितुमशक्यत्वात् । अत उपनीतभानत्वव्यारणायाऽनुभवभिन्नत्वस्यैव रूपस्य स्मरामीत्यनुव्यवसायप्रयोजकत्वेनोपेयत्वात् तस्य चानुभवाव्यवहितोत्तरभाविन्यामपि तुल्यत्वात् तस्या अपि नोपनीतभानत्वम् । प्रकृतायास्त्वनुव्यवसीयमानत्वाभावेऽपि वाक्यप्रामाण्यादेव स्मृतित्वमवसीयते इति न शङ्कालेशः । किञ्च । अतिरिक्तसंस्कारवादिमते तु संस्कारस्यासिद्धिरेव । तथाहि । संस्कारवादिना सर्वोत्पत्तिमन्निमित्तकारणत्वेनाऽदृष्टस्यापि स्मृतिहेतोर्वक्तव्यत्वे, आवश्यकत्वाल्लाघवाच्च तदेवाऽस्तु, कृतं संस्कारेणाऽतिरिक्तेन । नन्वनुभवजन्यम् अदृष्टं स्मृतिजनकम् ? उतानुभवजनकम् । नाद्यः । अनुभवस्याऽदृष्टजनकत्वेनाविहितत्वात् । अविहितेनापि दुरदृष्टवदङ्गीकारेऽपि सहकारिणोऽन्यस्याभावेनाऽनुभवस्य च नष्टत्वेन स्मृत्यनुदयप्रसङ्गात् । न द्वितीयः । अनुभवं विनापि स्मृतिप्रसङ्गात् । अतोऽन्यथानुपपत्त्यानुभवव्यापारत्वेन संस्कारसिद्धिरितिचेत् । न । अनुभवतद्ध्वंसयोरन्यतरस्य सहकारित्वसम्भवात् । त्वयापि सदृशादेरननुगतस्यैवोद्बोधकस्याङ्गीकारात् । नच प्रतियोगितदभावयोरेककार्यजनकत्वान्नैवमिति वाच्यम् । व्यक्तिभेदेनादोषात् । नचैकजातीयेऽपि तथेति वाच्यम् । ज्ञानजातीये तदभावात् । घटतद्-

भावसमूहालम्बनदर्शनात् । ननु तत्र तयोर्विषयत्वेन कारणत्वमतो न दोषः । प्रकृते तु न तथेति तत्तद्रूपेणैव कारणत्वं वाच्यम् । तथा सति कारणीभूताभावप्रतियोगित्वस्य प्रतिबन्धकपदार्थत्वेन स्मृतिकारणीभूतध्वंसप्रतियोगिनोऽनुभवस्य स्मृतिप्रतिबन्धकत्वापत्तिरितिचेन्न । प्रतिबन्धकसंसर्गाभावत्वेनैव प्रतिबन्धकाभावस्य हेतुतया तस्य संसर्गाभावत्वेन प्रतिबन्धकशरीरघटकत्वात् प्रकृते च ध्वंसत्वेन कारणत्वाद् ध्वंसप्रतियोगिनोऽनुभवस्य स्मृतिकारणत्वानपायात् । नचानुभवत्वेन कारणत्वे उपेक्षात्मकानुभवादपि स्मृत्यापत्तिः । उपेक्षान्यत्वस्यापि तत्र विशेषणीयत्वात् ।

ननु चाक्षुषत्वादिना साङ्कर्यादुपेक्षात्वस्यैकस्याभावेन तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटस्यैव निवेशनीयतया स्मृतिजनकतायां सर्वांशोपेक्षाभेदे आंशिकोपेक्षाभेदानामेकत्र निवेशप्रसङ्गेन तेषां मिथो विशेषणविशेष्यभावे विनिगमनाविरहेण कार्यकारणभावानन्त्यप्रसङ्गात् । संस्काराङ्गीकारे तु संस्कारजनकतावच्छेदककोटौ सर्वांशोपेक्षाभेदानां, स्मृतिजनकतावच्छेदककोटौ च आंशिकोपेक्षाभेदानां निवेशेन एकत्र तेषामनिवेशाल्लाघवमिति लाघवबलेन संस्कारः सेत्स्यतीतिचेन्न । सिद्धे संस्कारे तज्जनकविचारदशायां बुध्यमानस्य तदवच्छेदकलाघवस्य तदसिद्ध्यैव पराहतत्वात् । गुरोरपि कार्यकारणभावस्य धर्मत्वेन तदपेक्षाधर्मिभूतसंस्कारकल्पनाया एव प्रत्युत गुरुत्वात् । उपेक्षात्वस्याखण्डोपाधित्वाङ्गीकारे तदवच्छिन्नप्रतियोगिताकभेदस्यैकत्वात् कूटानिवेशेन संस्कारानङ्गीकर्तुरेव लाघवाच्च । किञ्चैवं जनकतावच्छेदकभेदे सर्वांशोपेक्षान्यानुभवस्मृत्यजनकत्वात् सर्वांशस्मृतिरपि न स्यात् । तथाच प्रत्यक्षविरोधः । तादृशसंस्कारात् सेत्स्यतीतिचेत्, तर्ह्यागतमेव व्यापारित्वेन तादृशानुभवस्य जनकत्वमित्यपार्थः प्रयासः । अख-

ण्डोपाधित्वानङ्गीकारे तु महत्त्विनिवृत्त्यजनकादिरूपाद्प्यनुभवात् स्मृतिदर्शनेन तदतिरिक्तापेक्षासत्त्व एव मानाभावादनुभवत्वेन कारणत्वमप्रत्यूहमेवेति कृतं संस्कारेणेति दिक् ॥ नचैवं यागजाऽपूर्वासिद्धिः। श्रुत्या यागस्य करणत्वबोधनेन तदभावस्य तथात्वायोगात् । वस्तुतस्तु लौकिकक्रियया यागस्याभिव्यक्तिर्न तु क्रियैव यागः। यज्ञो वै विष्णुरिति श्रुतेरित्यन्यत्र विस्तरः। अतोऽतिरिक्तसंस्काराभावान्न नैयायिकोक्तं लक्षणम्। प्रकृतमनुसरामः॥

स्वापस्तु— स्वप्नसृष्टिविषयकं ज्ञानम्। तेन न पूर्वोक्तेष्वन्तर्भावः। नच जाग्रद्दृष्टानामेव स्वप्नेऽपि दर्शनान्न साऽन्येति शङ्क्यम्। स्वशिरश्छेददर्शनादिविरोधात्। नच कर्तृकरणाद्यभावात् सा नास्तीति वाच्यम्। न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजत इत्यादिश्रुतिभिः सन्ध्यस्थाने सृष्टिकथनात्। भगवत एव तत्र कर्तृत्वान्मायायाश्च करणत्वात्तस्या एव चोपादानत्वात् । नच दीक्षितेन स्वप्नेऽन्नभोजने कृते प्रायश्चित्तविधानात्। कथं तस्या मायिकत्वमिति वाच्यम्। शास्त्रेण यज्ञकर्मण्येव कर्तृत्वे नियमिते निषिद्धस्य भोजनस्य प्रतिच्छायरूपेऽपि तस्मिन्नारोपितमाभिमानिककर्तृत्वमपि दोषावहमित्यभिप्रायेण तदुक्तेः। नच संवादिदेवताऽऽज्ञादिदर्शनान्न मायात्वमिति शङ्क्यम्। जीवानामिन्द्रादीनां योगादिसामर्थ्यवतामन्तर्हृदि भवेशात् सर्वसमर्थस्य भगवतश्च व्यापकत्वेन विद्यमानत्वात्तदाज्ञादेरमायिकत्वेऽपि प्रमेयबलादेव तादृग्ज्ञानसम्भवेऽपि सर्वत्रामायिकत्वस्यापादयितुमशक्यत्वात्। जागरिते दोषवशात् क्वचिन्मायिकरूपेव स्वप्नेऽप्युक्तगुणवशात् सत्यस्यापि क्वचिद् दर्शनसिद्धेश्च। तस्मात् स्वाप्निकी सृष्टिर्मायामात्रं, न वस्तुभूतेति निश्चयः। तदुपपादितं सन्ध्याधिकरणे व्यासपादैः ॥

माध्वास्तु तद्विषयकं ज्ञानं मिथ्येति वदन्तः स्वप्नदृष्टिं सत्यां निरुपादानिकां चाहुः। यथा हि चिन्तामणिकामधेनुकल्पतर्वादिभ्यः पदार्थाश्चिन्तामात्रान्निमित्तादुत्पद्यन्ते। तत्र न चिन्तामण्यादीनामुपादानत्वम्। विक्रियाया अदर्शनात्। तथा स्वप्नेऽपीति। तदशोभनम्। तथा सति चिन्तामण्याद्युत्पन्नानामिव स्वाप्निकानामपि चिरकालस्थायित्वापत्तिः। स्वप्ने स्वशिरश्छेदद्रष्टुर्दर्शनस्य मिथ्यात्वेऽपि छेदस्य तात्त्विकत्वान्मरणापत्तिश्च। अनुपादानकत्वेनाऽन्यस्य शरीरस्याङ्गीकारेऽप्यर्थक्रियान्तराभावादचिरस्थायित्वात् सन्ध्याधिकरणविरोधादैन्द्रजालिकादिष्वपि सत्यत्वापाताच्च। अतस्तत्रायत्कान्तन्यायेन तत्तत्समवाय्याकर्षकत्वमेव वाच्यम्। ज्ञानं तु तद्विषयकं सत्यमेव। तस्यात्मरूपत्वात्। अत्रात्मा स्वयञ्ज्योतिर्भवतीति श्रुतेरिति दिक्॥

सुषुप्तिस्तु स्वप्नस्यैवाऽवान्तरभेदः। तत्राऽऽत्मस्फुरणं तु स्वत एव। चिन्ता तु विकल्पसंमोहात्मिका सम्भावनायाम् ऊहापोहात्मिका मानससंलापो ध्यानात्मिका स्मरणे निविशत इति नातिरिक्ता। ह्रीभीप्रभृतयस्त्वहङ्काराद्यन्वयो न ज्ञानविशेषाः। सोऽयं देवदत्त इत्यादिप्रत्यभिज्ञा तु निश्चय एव। अभ्यासजन्ये दृढप्रतीतिरूपे ज्ञाने यथा पूर्वानुभवसंस्कारः सहकारी तथा प्रत्यभिज्ञाया स्मृतिः सहकारिणी। विशेषणतावच्छेदकप्रकारकनिश्चयार्थं तस्या अवश्यमपेक्षणात्। अतो यथाऽनुग्राहकान्तरप्रवेशेऽपि यथार्थानुभवत्वानपायादभ्यासज्ञानं निश्चयरूपं तथा स्मृत्या विषयेण च पूर्वस्थितज्ञानस्योद्दीपनात् प्रत्यभिज्ञापीति ज्ञेयम्। प्रत्यभिज्ञायाः संस्कारजन्यत्वपक्षेऽपि तस्या अनुग्राहकत्वेन संस्कारजन्यत्वात्। स्मृतेस्तु संस्कारत्वेन संस्कारजन्यत्वान्मात्रपदादानेऽपि स्मृतिलक्षणस्य नातिव्याप्तिरपि ज्ञेयम्। प्रमप्रमागमगृहालम्बनं तु, एक-

देशाविकृतमनन्यवद्भवतीति न्यायेन भ्रमाधिक्ये विपर्यास एव । प्रमाधिक्ये च निश्चयः । एवञ्च यत्र शाखावच्छेदेन वृक्षे कपिसंयोगो मूलावच्छेदेन च कपिसंयोगभ्रमस्तत्रापि पूर्वोक्तन्यायात् प्रमारूपैव, न तु नैयायिकोक्तरीत्या । एवञ्च दारुदन्तादिनिर्मितमूर्तौ चित्रादौ च या तुरङ्गप्रतीतिः साऽपि प्रमाधिक्यान्निश्चयरूपैव, न त्वाभ्योऽधिका । तथैव नटेऽपि या सामाजिकानां रामादिप्रतीतिः साऽनुकार्यराहित्येऽपि यथाशास्त्रवेशक्रियाऽनुकृतिनिमित्तकत्वात् सामाजिकरसोद्बोधकत्वाच्च प्रमाधिकेति प्रमारूपैव । एतेनैव देवताप्रतीतिरपि व्याख्याता ज्ञेया । यत्र त्विमे रङ्गरजते इति साम्यं तत्र पूर्वोक्तन्यायस्य तूष्णीकत्वाद् भ्रमप्रमान्यतररूपता, न वक्तुं शक्येति समानरूपतया सम्भावनावत् संशय इति सङ्क्षेपः ॥

इति प्रमाप्रसङ्गेन ज्ञानभेदा विचारिताः ।
इदानीं करणं तस्या विचारयितुमुद्यमः ॥

तत्र तावद् व्यापारवदसाधारणकारणं करणम् । कारणत्वं चाविर्भावकशक्त्याधारत्वम् । उपादानस्य कार्यं या व्यवहारगोचरं करोति सा शक्तिराविर्भाविका । आविर्भावश्च व्यवहारयोग्यत्वम् । तिरोभावश्च तदयोग्यत्वम् । ते द्वे यद्यपि भगवतः शक्ती । आविर्भावतिरोभावौ शक्ती वै मुरवैरिण * इति, मयूराश्चित्रिता येनेति च वाक्यात् । आविर्भावयतीत्याविर्भाव इत्यर्थात् । तथापि भगवता विभज्य तत्र तत्र स्थापिते इति तस्य तस्य तत्तदाविर्भावकत्वात् तत्तच्छक्तित्वमुच्यते । तथात्वं चैकादशस्कन्धे उक्तम् अब्जयोनिमुपक्रम्य, विश्लिष्टशक्तिर्बहुधेव भाति बीजानि योनिं प्रतिपद्य यद्वदिति कथनात् । एवञ्च व्यवहारे यत्र यदाविर्भाविका शक्तिस्तत्तस्य कारणम् । यस्य च यतो व्यवहारयोग्यत्वं

तत्तस्य कार्यम्। इदं च यथा तथा आविर्भावतिरोभाववादे प्रपञ्चितमस्माभिः। एतेनैव कुलालपितुरपि न कारणतेति सिद्धम्। फलापधानाभावात्। यत्तु अनन्यथासिद्धनियतपूर्ववर्तित्वं कारणत्वमाहुः। तन्न। पूर्ववर्तित्वस्य कार्यमापेक्षत्वात् कार्यस्य च नियतपश्चाद्भावित्वादन्योन्याश्रयग्रासात्। अनन्यथासिद्धत्वस्यान्यथासिद्धभिन्नत्वेनान्यथासिद्धेश्च अन्यत्र गृहीतकारणताकत्वरूपत्वेन तत्राप्यस्यैव कारणलक्षणस्य वक्तव्यत्वादात्माश्रयापत्तेश्च। नापि कारणं कारणमित्यनुगताकारप्रतीतिसाक्षिकजातिविशेषत्वं। अभावे तस्याङ्गीकारेण जातेरेवाप्रक्रमवचनत्वात्। अखण्डोपाधित्वं त्वगतिकगतिः। नापि कार्यानुकृतान्वयव्यतिरेकित्वं तत्। मूलकारणे आकाशादौ व्यभिचारात्। तन्मते तस्य तस्य नित्यविभुत्वेन कालतो देशतश्चाव्यतिरेकात्। नच यत्कारणत्वेन विद्वद्भिर्व्यह्रियते तदादाय लक्षणसङ्गतिरिति वान्यम्। तथाप्युक्तदोषानपायात्। तस्मादुक्तमेव कारणलक्षणम्॥

तच्च कारणं द्विविधम्— समवायिनिमित्तभेदात्। तत्र तादात्म्यसम्बन्धेन यदाश्रयं कार्यं भवति तत् समवायिकारणम्। समवायश्च तादात्म्यस्यैव नामान्तरम्॥

वैशेषिकास्तु— अयुतसिद्धानामाधाराधेयभूतानामिह प्रत्ययहेतुः सम्बन्धः समवायः। यथा इह तन्तुषु पटः, इह पटे शुक्लत्वमिह गवि गोत्वमिति कार्यकारणयोर्गुणगुणिनोः सामान्यविशेषयोः। स च सर्वेषामेको नित्यो व्यापकश्चेत्याहुः॥

तदन्ये न क्षमन्ते॥ तत्र पार्थसारथिमिश्राः— इयं गौरिति प्रत्ययादिह गोत्वमस्तीतिप्रत्ययाभावाच्च न पूर्वोक्तलक्षणः समवायः, किन्तु येन सम्बन्धेनाऽऽधेयमाधारे स्वानुरूपां बुद्धिमाधत्ते स्वाकारेण बोधयतीति यावत्, स सम्बन्धः समवाय इत्याहुः। तच्चिन्त्य-

म्। गुणगुणिनोः क्रियाक्रियावतोर्यः सम्बन्धस्तस्याऽसमवायत्वाप-त्तेः। गुणक्रियाभ्यां स्वाकारेण गुणक्रियावतोरबोधनात्। अथाऽयुतसिद्धयोर्यः सम्बन्धः स समवायः। अयुतसिद्धौ च तौ ययोर्द्वयोरनश्यदेकमपराश्रितमेवावतिष्ठत इति। तदपि जघन्यम्। तथा सति प्रलये जातिस्थितिः, काले वक्तुमशक्या स्यात्। कालसमवेतत्वबुद्ध्यापादकत्वात्। नच तत्र जातिः, स्वरूपेण, कालिकेन वा सम्बन्धेन तिष्ठतीति वाच्यम्। मानाभावादित्याहुः॥

श्रीहर्षमिश्रास्तु— अपराश्रितत्वं नामापरसम्बन्धित्वम्। तत्र कोऽसौ सम्बन्धः? संयोगः, समवायो वा। नाद्यः। समवायापलापप्रसङ्गात्। न द्वितीयः। अपराश्रितत्वस्य समवायघटितत्वेन समवायिनिरूपणे आत्माश्रयप्रसङ्गादित्याहुः॥ वस्तुतस्तु कार्यमात्रस्य प्रलये नाशं वदद्भिर्वैशेषिकैस्तादृशगुणक्रियाप्रतियोगिकस्य तादृसम्बन्धस्यानुयोगिकस्य च समवायस्य प्रतियोग्यादिनाशात् प्रमातॄणां वाचकरणनाशाच्च प्रतीत्यभावेन कालिकादिसम्बन्धेन कालादौ सत्तामप्युपपादयितुमशक्नुवद्भिः स्वमुखेनैव प्रतिज्ञा भज्यते इति ह्येयम्॥

ब्रह्मसूत्रानुसारिणस्तु— यथा अयुतसिद्धयोराधेयाधारयोर्विशेषणविशेष्यभावोपपत्तये समवायोऽङ्गीक्रियते तथा समवायस्याप्याधेयत्वेन विशेषणत्वात्तदर्थं सम्बन्धान्तरस्य समवायान्तरस्य वा अपेक्षायां तदनवस्थापत्तिर्निःसत्वहानिरानिःसता च स्यात्। अनपेक्षाया समवायस्यासम्बद्धत्वप्रसङ्गः। तथा सत्यसम्बद्धः कथं सम्बन्धिनौ सम्बन्धयेत्। स्वत एव स्वास्थितिनियमेन तेनैव न्यायेनाधेयान्तरस्यापि स्थितिसिद्धौ समवायस्यैवासिद्धिः। नच तस्य सम्बन्धत्वात् स्वास्थितिनियामकत्वं, सम्बन्धिनां तु न तथेत्यतो न दोष इति वाच्यम्। संयोगस्याऽपि सम्बन्धत्वेनैव-

साम्यात् तस्याप्यसमवेतत्वापत्तेः । नच तस्य गुणत्वात्तत्रास्ति सम्बन्धान्तराकाङ्क्षेति वाच्यम् । गुणपरिभाषायास्त्वतन्त्रमात्रशरणत्वेनेतरेषामनादरणीयत्वादित्याहुः ॥

अत्रैवान्ये तु, अयुतसिद्धयोः सम्बन्धः समवाय इति वदता अयुतसिद्धत्वमेव पूर्वं साधनीयम् । तत्तु कार्याभावे निरूपयितुमेवाशक्यम् । असत्कार्यवादे असतः कार्यस्य पश्चात्सत्ताङ्गीकारात् । तथा सत्यऽपृथक्सिद्धत्वरूपस्यायुतसिद्धत्वस्यैव पूर्वमसिद्ध्या तदुपपाद्यस्य समवायस्याप्यसिद्धिः । तस्य पूर्वमुपगमे असत्कार्यवादभङ्गप्रसङ्गः । अथोत्पत्त्यैव समवाय इतिचेत् तदुत्पत्तेरनित्यत्वात् समवायनित्यत्वहानिः । नित्यत्वे च कार्यनित्यत्वप्रसङ्गात् कारणव्यापारानर्थक्यम् । तस्मात् तादात्म्यलक्षण एव कार्यकारणयोः, सम्बन्धो न समवाय इत्याहुः ॥ यत्तु गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया, विशिष्टबुद्धित्वात् । दण्डपुरुषविशिष्टबुद्धिवदित्यनुमानेन सयोगादिबाधात् साधयन्ति । तदप्येतेनैव परास्तम् । सिद्धसाधनत्वादर्थान्तरत्वाच्च । नच लाघवबलात् तत्सिद्धिः । पदार्थान्तरत्वेन प्रतिपाद्यमानस्य तस्यैव गुरुत्वात् । प्रतिपत्तिसौकार्याभावाच्च । अतो न समवायस्तादात्म्यातिरिक्तः । तादात्म्यं च भेदसहिष्णुरभेद एव । भेदसहिष्णुता च, बहु स्यां प्रजायेयेतीच्छाया तद्व्यापारभूतशक्तिविभागेनेति नाऽत्र पूर्वोक्तदोषसचारः । श्रुतिशरणत्वात् कल्पनायाः । यद्वा, यत्र येन यतो यस्य यस्मै यद् यद् यथा यदा * स्यादिदं भगवान् साक्षात् प्रधानपुरुषेश्वर इति दशमस्कन्धीयवाक्ये यथापदोक्तप्रकारमध्ये तस्यापि निवेशयितुं शक्यत्वात् सत्कार्यवादे कार्यस्य प्रलयेऽपि सत्त्वेन सम्बन्धिद्वयसत्त्वाच्च नित्यसम्बन्धरूपसमवायस्यातिरिक्तत्वाङ्गीकारेऽप्यदोषः । नच सूत्रविरोधः।

तत्र वैशेषिकादिप्रतिपन्नस्यैव दूषणेनाविरोधात् । एवञ्चास्मिन् मते रूपादीन् प्रति न घटादिद्रव्यस्य कारणता । प्रमाणाभावात् । किन्तु समानकालीनत्वमेव दृष्टानुरोधाद् बोध्यम् । यत्तु पूर्ववर्तित्वं कारणलक्षणं स्वीकृत्य रूपादीन् प्रति द्रव्यस्य कारणत्वाय प्रथमे क्षणे घटादेर्निर्गुणत्वं स्वीकुर्वन्ति । तदसङ्गतम् । तथाहि । प्रथमे क्षणे किं कपालादिगुणा नश्यन्त्युत तिष्ठन्ति ? । नाद्यः । कारणगुणानां नष्टत्वे कार्यगुणाऽनारम्भापत्तेः । वह्निपाकादिरूपनाशकसामग्र्यभावे तन्नाशस्याप्यशक्यवचनत्वात् । पीततन्तुभिः श्वेतपटापत्तेश्च । पीतस्यैवं भवने नियामकाभावात् । नचादृष्टमेव वाच्यम् । तेनैव निर्वाहे कारणरूपस्य कारणताभङ्गान्नीरूपादपि सरूपोत्पत्त्यापत्तेश्च । न द्वितीयः । सत्सु तेषु कार्यगतगुणानारम्भे हेत्वभावादिति दिक् ॥

प्रथमे क्षणे परमसूक्ष्मो घट उत्पद्यत इत्यप्यसङ्गतम्। अत्र सांख्याः— प्रथमे क्षणे घटः परमाणुर्वा महान् वा उभयविलक्षणो वा । नाद्यः । निरवयवत्वापत्तेः । न द्वितीयः । गुणगुणिनोरेककालोत्पत्तिप्रसङ्गात् । परमसूक्ष्मो घट इति प्रतिज्ञाविरोधाच्च । अनेककपालेषु समवेतो घटः परमसूक्ष्म इत्यहृदयङ्गमश्च । न तृतीयः । अप्रसिद्धेः। नच गुणगुणिनोर्जन्यजनकत्वानुरोधेनैवं कल्पनेति वाच्यम् । समानकालोत्पत्तिवादिनं प्रति जन्यजनकभावस्य वक्तुमशक्यत्वात् । नच समानसामग्रीकत्वेन कार्यकारणयोरभेदापत्तिरिति वाच्यम् । तन्तुरूपादेः पटाजनकतया रूपजनकत्वेन सामग्रीभेदात् । नचैतस्मिन्मते किं समवायिकारणमिति वाच्यम्। पट एव । नच कारणत्वाभावे कथं समवायिकारणत्वमिति वाच्यम् । स्यादेवं यदि समवायिकारणत्वं कारणताविशेषः स्यात् । न चैवम् । किन्तु कार्यसमवायित्वमेवेत्याहुः । तथाचैतन्मते कारणे-

कविध्यमेव। समवायश्च स्वरूपसम्बन्धविशेष एव। कार्यं चावस्थाविशेष एवेति। सिद्धान्ते तु पूर्वोक्तेच्छया लोकेऽपि कारणत्व समवायिनो निर्बाधम्। आविर्भावकशक्त्याधारत्वस्य कारणलक्षणस्य तत्राप्यन्वयव्यतिरेकसिद्धत्वात्। पुत्रादौ जन्यत्वस्य शास्त्रसिद्धत्वाच्चेति। उपादानं तु समवायिन एवावस्थाविशेषः। परिच्छिन्नस्य कर्तृक्रियया व्याप्तस्यैव मृत्पिण्डसूत्रादिरूपस्य पृथिव्यंशस्यैव घटपटाद्युपादानत्वदर्शनात्। अन्यथा पृथिवीत्वाविशेषात् पिण्डादिरूपताभावेऽपि घटाद्युत्पद्येत। अत एव भगवानविकृत एव जगत एकांशेन समवायी। स एव पुनः क्वचित् कालरूपं क्वचित् प्रकृतिरूपं स्वांशमुपादानं करोतीति प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः * सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहमिति। गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठितः * पुरुषस्तदुपादानमात्मानं लीलयाऽसृजत्॥ विश्वं वै ब्रह्म तन्मात्रं संस्थितं विष्णुमायया * ईश्वरेण परिच्छिन्नं कालेनाव्यक्तमूर्तिनेत्यादिवाक्यादवसीयते। तच्च लोकेऽप्येकस्यैकमेव, न त्वनेकम्। अन्यथा कारणगुणानां कार्यगुणोत्पादकत्वनियमात् कार्यस्यानेकत्वापत्तेः। शरीरादिष्वपि भूतसमुदायस्यैव हेतुत्वम्। अन्यद्रव्यत्वावच्छिन्नं प्रति तद्योग्यावयवस्थूलांशत्वेनैवानुगता कारणता। न तु स्पर्शवत्त्वेन। आकाशे व्यभिचारात्। आकाशाद्वाय्वुत्पत्तेः श्रौतत्वात्। न च निमित्तत्वम्। पुराणोपबृंहणविरोधात्। अत एव नारम्भवादोऽपि। इदं च यथा तथा प्रपञ्चभेदवादे व्युत्पादितमस्माभिः॥ उपादानं च द्विविधम्। परिणाम्युपादानं, विवर्तोपादानं च। तत्र आद्यं स्वसमानसत्ताककार्याकारेणाविर्भवति। परिणामश्च उपादानसमसत्ताकोऽन्यथाभावः। स द्विविधः। अविकृतो विकृतश्च। तत्राद्यो यथा सुवर्णस्य रुचककुण्डलादिः। द्वितीयो यथा

मृदो घटशरावोदञ्चनादिः। यथा च मनसो वृत्तिरूपं ज्ञानम्। उपादानविषमसत्ताकोऽन्यथाभावो विवर्तः। स त्वेकविध एव। यथा रजतादिरूपेण शुक्तेः स्थानम्। समवायिकारणभिन्नं यत् कारणं तन्निमित्तकारणम्। यथा घटस्य कुलालचक्रचीवरदण्डादिकं, तुरीवेमादिकं पटस्य, विषयेन्द्रियव्यापारा ज्ञानस्य। कारणता च द्विविधा। एका दण्डचक्रादिन्यायेन सामग्रीकारणता। तृणारणिमणिन्यायेन प्रत्येकपर्यवसायिनी द्वितीया। तन्तुद्वयसंयोगादिकं च सामग्र्यामेव प्रविशतीति नाऽसमवायित्वेन अतिरिक्ता कारणता तस्य कल्पनीया। प्रयोजनाभावात्। तस्माद् द्विविधमेव कारणम्। कारणताग्राहकौ चान्वयव्यतिरेकौ। तौ च द्विविधौ। तत्र स्वस्वव्याप्येतरयावत्कारणसत्त्वे यत्सत्त्वेऽवश्यं यत्सत्त्वमन्वयः। यदभावेऽवश्यं यदभावो व्यतिरेक इत्येका विधा कारणतामात्रग्रहण उपयुज्यते। अन्वयनमन्वयः। एराजित्यनेन भावेऽच्। कार्येण सह तदवयवादिरूपेणावस्थानम्। विशेषेणातिरेचनं व्यतिरेकः। कार्यातिरेकणावस्थानमिति द्वितीया विधा। इमौ च उपादानत्वग्रहणे कृत्स्नप्रसक्तिवारणे च यथायथमुपयुज्यतेऽतो न शङ्कालेशः। कारणेन कार्यजनने यदन्तरा अवश्यमुपयुज्यते स व्यापारः। यथा तन्तुद्वयसंयोगश्च तन्तुतुर्योः। यथाच विषयेन्द्रियसंयोग इन्द्रियाणां, यथा द्रव्येण प्रीता देवता प्रीतिर्वा यागस्य। न तु तज्जन्यत्वे सति तज्जन्यजनकः। समवायादौ व्यभिचारात्। असाधारणत्वं चात्र कार्योत्पादनकाले तदनुकूलव्यापारातिरिक्तव्यापाररहितत्वं बोध्यम्। ईश्वरेच्छादीनामितरव्यापाररहित्याभावान्न तत्रातिव्याप्तिः। विषयस्य समवायिनश्चाकारणत्वनिरासाय तु तद्भिन्नत्वं विशेषणीयम्। केचित्तु कार्यत्वाऽवच्छिन्नकार्यतानिरूपितकारणताऽशून्यत्वमसाधारणकारणत्व-

माहुः। अन्ये तु कार्यत्वाऽवच्छिन्नकार्यतानिरूपितकारणताश्रयत्वं तदित्याहुः। तत्र नास्माकमाग्रह इति व्यवसितं करणम् ॥

एवं हि सिद्धे करणे यत्र पूर्वोक्तधर्मा मति।
करणं तत्प्रमाणं तन्मूर्द्धन्यो वेद एव हि ॥
अर्थेन नित्यसंबन्धात्तज्ज्ञानाऽव्यभिचारतः।
लोकानधिगतार्थस्य गन्तृत्वान्नास्य लोकतः ॥
तदर्थावगतेर्बाधस्तेन मूर्द्धन्यताऽस्य वै।
वैयासे दर्शने ब्रह्मप्रमितेः करणं श्रुतिः ॥
तन्मूलमन्यत् संदेहहृत्या तत्सहकारिताम्।
यातीति शास्त्रयोनित्वादित्यत्रैवं विनिश्चितम् ॥
तेनान्यत्र प्रमाणत्वमन्येषां न विरुद्ध्यते।
एवमेव निबन्धेऽपि बुद्ध्यतामाशयोऽपि च ॥
मानान्तरोपजीव्यानामिन्द्रियाणां प्रमाणता।
सत्त्वयोगादृते नास्ति तेनाचार्यैरनादृता ॥
प्रमाणगणना लोकव्यवहारप्रयोजना।
ततः शब्दाविरुद्धा साऽऽदरणीयेति सूचितम् ॥
अतोऽत्र व्यवहारे यः स्वप्रस्थानसमाश्रितः।
विशेषस्तस्य बोधार्थमादर्तव्यैव सा ततः ॥
श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्।
प्रमाणेष्वनवस्थानाद्विकल्पात् स विरज्यते ॥
श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्।
एतैरादित्यमण्डलं सर्वैरेव विधास्यते ॥
एवमेकादशस्कन्धे श्रुतौ यद्विनिरूपितत्।
तदाश्रित्य मयाऽनैतदुच्यतेऽतो न दूषणम् ॥
तत्रैतिह्यं स्मृतिः पूर्वदृष्टस्मृत्या निरूपणात्।

सूत्रेऽत्रापि प्रमाणोक्तौ स्मृतेरेवादरादपि ॥
शेषं यथास्थितं यानि तूपमानादिकानि वै।
तान्यनुग्राहकाण्येव तेन दोषो न कश्चन ॥
सर्वाण्येव प्रमाणानि सत्त्वमेव कथञ्चन।
उपजीवन्ति तद्धेतो कथितः पूर्वमागमः ॥
उक्तवाक्ये श्रुतिस्तस्माच्छब्दः पूर्वं निरूप्यते।
येन ज्ञाते परिकरे मुख्यत्वावगतिः श्रुतेः ॥
तस्याविरोध एवान्यप्रामाण्यं नान्यथा ततः ॥

ननु बाधयोग्यव्यतिरिक्तज्ञानजनकं सत्त्वं योगादिनापि जन्यत इति कथं वेदस्यैव मुख्यत्वमितिचेन्न। तेषामपि वेदमूलत्वात्। अवेदमूलानामप्रमाणत्वात्। विदूरकाष्ठाय मुहुः कुयोगिनामित्यादिवाक्यात्। योगिनामृषीणामपि परस्परविमतिपत्तिदर्शनाच्च। अतो वेद एव प्रमाणम्। स चाप्तोपदेशरूपः। आप्तश्च यथास्थितार्थवादी। स लौकिकालौकिकभेदेन द्विविधः। तत्राऽस्मदादिर्लौकिकः। अलौकिकस्तु ऋषीनारभ्येश्वरपर्यन्तः। उत्तरोत्तरं चैषामाप्तत्वाधिक्यात् परमाप्तत्वमीश्वरे पर्यवस्यतीति तदुपदेशरूपो वेद एवाऽनपेक्षं प्रमाणम्।
नन्वाप्तोपदेशस्य तेन रूपेण प्रामाण्ये सिद्धे वेदस्य परमप्रामाण्यं सिद्ध्येत्।तदेव तावदसिद्धम्।पदानामुपनायकत्वेन श्रोत्रादेव शाब्दसिद्धेः। शब्दस्य प्रमाणान्तरत्वकल्पनाया अन्याय्यत्वात्। अन्वयबुद्धेर्लिङ्गजन्यत्वेनानुमितत्वेऽपि निर्देशस्य वाक्यत्वाच्च। नच शब्दान्वयव्यतिरेकानुविधानात् तस्य कारणत्वमिति वाच्यम्। हेतुशरीरघटकत्वेन हेतुत्वेन वाऽनुविधानोपपत्तेस्तस्यातिरिक्तकारणताग्राहकत्वे मानाभावात्। अतो वेदस्य न पृथक् प्रामाण्यमिति दूरनिरस्तं परमत्वमिति चेत् ॥ अत्राहुर्नैयायिकाः ॥ शब्दः पृथगेव

मानम्। गौरस्ति घटमानयेत्यादौ स्वस्ववृत्त्या पदजन्यपदार्थोप-
स्थित्यनन्तरं गवादावस्तित्वाद्यन्वयविषयस्य विलक्षणबोधस्यान्व-
यव्यतिरेकाभ्याम् आकाङ्क्षादिमच्छब्दकारणकस्योपनीतभानत्वा-
ऽयोगात्। अशक्यस्याप्यन्वयस्य पदैरुपस्थापनेऽश्वपदाद्गोरप्युप-
स्थापनापत्त्याऽतिप्रसङ्गापत्तेः। नचान्वयबोधो नास्त्येवेति वृथा-
ऽयं प्रयास इति वाच्यम्। विशिष्टबुद्धेरानुभविकत्वेन तदभावे-
ऽनुभवविरोधापत्तेः। तस्य तत्साधकत्वानङ्गीकारेऽनुमितेरप्यप-
लापापत्तेः। नापि स स्मृतिरूप एवेति युक्तम्। अनुव्यवसायवि-
रोधात्। समानाकारसंस्काराजन्यत्वेन स्मृतित्वस्याशक्यवचन-
त्वाच्च। नाऽपि साक्षात्कारः। साकाङ्क्षपदानामिवान्यस्याप्युपना-
यकत्वस्य शक्यवचनत्वेन तदुपस्थापितस्याप्युपनयमर्यादया भा-
नापत्तेः। नचेष्टापत्तिः। अनुभवविरोधापत्तेः। तत्तदर्थविषयक-
शाब्दबुद्ध्यनुव्यवसायं प्रति शाब्दबुद्धेस्तत्तदर्थकसाकाङ्क्षपदजन्य-
तत्तदर्थगोचरशाब्दत्वेन विषयविधया हेतुताकल्पनेऽतिगौरवात्।
इतरबाधलक्ष्यावच्छिन्नेतरत्वादेरपदार्थस्यापि शाब्दबोधेऽवगाहात् प्र-
प्रस्य तद्विषयकानुव्यवसायस्य बाधप्रसक्तेर्गवादावस्तित्वादेरिवा-
स्तित्वादौ गवादेरपि भानप्रसङ्गस्य तावताप्यनुद्धाराच्च॥

किञ्च शाब्दधियः प्रत्यक्षत्वाऽभ्युपगमे पदार्थाऽन्वयबोध-
दशायामपदार्थानामपि स्वसामग्रीबलेन प्रत्यक्षत्वापत्तिः। प्रत्यक्षसा-
मान्यं प्रति शाब्दसामग्र्याः प्रत्यक्षसामग्रीकोटिनिविष्टतया प्रतिब-
न्धकत्वासम्भवात्। नच शाब्दान्यप्रत्यक्षत्वावच्छिन्नं प्रति तस्या-
स्तथात्वकल्पनान्न दोष इति वाच्यम्। गुरुत्वात्। तदपेक्षया शा-
ब्दधियः प्रत्यक्षभिन्नत्वकल्पनायामेव लाघवाच्च। तस्मान्नान्वय-
बुद्धेः प्रत्यक्षरूपत्वम्। नाप्यनुमितिरूपत्वम्। अलिङ्गजन्यत्वात्।
नच गौरस्तीति वाक्याद्गौरस्तित्ववान्, तद्योग्यत्वाद्, घटवदिति

बाधराहित्यरूपा योग्यतैव लिङ्गमिति वाच्यम् । अज्ञाताया अनुपयोगात् स्वरूपसत्त्वात्तस्या अकारणत्वेन तज्ज्ञानस्यैव लिङ्गताया वाच्यत्वात् तस्य च बाधनिश्चयाभावमात्रजननेनैवोपेक्षणेन लिङ्गताया अशक्यवचनत्वात् । योग्यतामात्रलिङ्गकस्य संसर्गानुमानस्यान्वयबुद्धित्वे घटः कर्मत्वमित्यादिस्थलीयस्यापि तस्य तथात्वापातात् । योग्यतायाः संशयेऽप्यन्वयबुद्धेरानुभविकत्वादनुमितित्वस्याशक्यवचनत्वाच्च । न च, गौरस्तित्ववान्, स्वधर्मिकास्तित्वाऽन्वयबोधानुकूलाकाङ्क्षाश्रयपदस्मारितत्वाद्, घटवद् । गौरिति पदम् अस्तित्ववद्गोज्ञानपूर्वकम्, अस्तिपदसाकाङ्क्षगोपदत्वाद्, यन्नैवं तन्नैवम्, आकाशवदिति तत्तत्पदार्थपक्षकपदपक्षकानुमानाभ्यामनुमितित्वसिद्धिरिति युक्तम् । हेतुशरीरप्रविष्टाया आकाङ्क्षाया अन्वयबोधानुकूलानुपूर्वीपर्यवसितत्वेन अन्वयबोधसिद्धेः पूर्वमसिद्धत्वात्तादृशशरीरकहेत्वसिद्धेः । एतेनैव, चैत्र दण्डेन गामभ्याजेत्यादिवाक्यश्रवणोत्तरम्, एते पदार्था मिथः संसर्गवन्तः, आकाङ्क्षादिमत्पदकदम्बकस्मारितत्वाद्, गेहे घटोऽस्ति तमानयेतिपदकदम्बकस्मारितपदार्थसार्थवत् । उक्तरूपाणि पदानि, वैदिकपदानि वा तात्पर्यविषयस्मारितपदार्थसंसर्गज्ञानपूर्वकाणि, आकाङ्क्षादिमत्पदकदम्बकत्वाद्, घटमानयेतिपदकदम्बकवदित्यादिकमपास्तम् । तादृशव्याप्तिज्ञानं विनापि शाब्दबोधस्य सर्वानुभवसिद्धत्वाच्च । न च तत्र व्याप्तिज्ञानं कल्पनीयमिति वाच्यम् । सर्वत्र शब्दश्रवणोत्तरं व्याप्तिस्फूर्तौ मानाभावात् । सर्वत्र शब्दस्थले व्याप्तिज्ञानकल्पनवत् सर्वत्रानुमितिस्थले पदज्ञानं कल्पयित्वा शाब्दबोधस्यापि कल्पयितुं शक्यत्वाच्च पृथगेव शब्दस्य प्रामाण्यमित्याहुः ॥

वस्तुतस्तु सादिसृष्टिवादिनो वैशेषिकस्य सर्गादौ प्राथमिक-

वाक्यमाकलयतः शाब्दबोधदशायां पदकदम्बान्तरस्यानुत्पन्नत्वेन पदपक्षकानुमाने सपक्षाभावात्। पदार्थपक्षकाऽनुमानेऽपि विशेषणाभावप्रयुक्ततदभावाच्छाब्दबोध एवैवं दुर्लभ इति मूले कुठारः। अथ तत्र विधान्तरेण बोधस्तर्हि आवश्यकत्वात् सैवास्तु, कृतमनया। अथ तदा वाक्यान्तरमुत्पन्नमुच्यते तदापि परस्परसामग्र्या प्रतिबन्धेन युगपदनेकवाक्यज्ञानाभावात् स एव दोषः। अथ तत्र प्राथमिकवाक्यान्न शाब्दबोधः, किन्तु शक्तिग्रहमनाख्या कतिपयवाक्यैरावापोद्वापाभ्यां शक्तिग्रहे बोधस्तदापि शक्तिग्रहसमकालं चेदन्विताभिधानपक्षापत्त्या सिद्धान्तहानिर्हेत्वसिद्धिश्चाकाङ्क्षाया अज्ञातत्वात्। शक्तिग्रहोत्तरमाकाङ्क्षादौ ज्ञाते चेत्तदाप्याकाङ्क्षास्वरूपज्ञापनायाकाङ्क्षापदशक्तिं ग्राहयतां पदानां शब्दत्वेनैव कारणतायाः कल्पनीयत्वात् तथा कारणताया लघुत्वाच्च। शाब्दबोधेऽपि तत्त्वेनैव कारणत्वस्य झटिति स्फूर्तिर्नाऽनुमानत्वेन गुरुत्वादक्लृप्तत्वाच्च। एवञ्च प्रमाणान्तरकल्पनापेक्षया बोधविलम्बकल्पनमेव न्याय्य इत्यपि निरस्तम्। विलम्बस्याऽनुभवविरुद्धत्वादिति दिक्। अतः पृथगेव शब्दः प्रमाणमिति स्थितम्। नन्वस्तु प्रमाणान्तरत्वं, तथापि प्रत्यक्षविरुद्धं शब्दस्तेनाऽपि न प्रमातुं शक्यते। प्रत्यक्षोपजीवकत्वाच्छब्दस्य। अन्यथा प्रतारकवाक्यस्यापि प्रामाण्यापत्तेः। किञ्च, स्वरूपलाभेऽपि शब्दः श्रोत्रसापेक्षः। अतः प्रत्यक्षस्यैव मुख्यत्वमुचितं, न शब्दस्येति चेन्न। स्वरूपलाभे श्रोत्रनापेक्षत्वे प्रामाण्यांशे तदनपेक्षत्वात्। श्रुतमात्रेण शब्देन चक्षुरादिकमनपेक्ष्यैव पदार्थोपस्थापनात्। नापि प्रत्यक्षोपजीवकत्वम्। वेदे तदभावात्। लोकानधिगतस्यापि विषयस्य धर्मादेर्बोधनात्। नच सोऽपि योगिनामृषीणां प्रत्यक्ष इति वाच्यम्। मानाभावात्। योगादौ धर्मादिप्रत्यक्षजनन-

सामर्थ्यस्य मानाऽन्तरेणाऽज्ञातत्वात्। तदर्थं प्रवृत्त्यनुपपत्तेश्च। नचाऽदृष्टादेव प्रवृत्तिरिति वाच्यम्। सत्कर्मकरणमन्तरेण तस्यैवाऽनुपपत्तेः। आदिसर्गे परम्परया वक्तुमशक्यत्वात्। अनादिसर्गवादे अपौरुषेयस्य वेदस्यैव धर्मप्रमितिजनकत्वस्वीकाराच्च। नापि स्वभावात् प्रवृत्तिः। तस्यापि मूलविमर्षे वेद एव विश्रान्तेः। नचेश्वरेच्छयेति युक्तम्। शब्दं विना तस्यैवासिद्धेः। नच कार्यत्वादिलिङ्गकानुमानेन तत्सिद्धिः। बीजाङ्कुरदृष्टान्तेन हेतोः साधारणत्वादित्यन्यत्र विस्तरः। अतो लौकिकव्यवहारसाधकस्यैव शब्दस्य प्रत्यक्षोपजीवकत्वं, न वेदस्येति तत्र प्रमाणमूर्द्धन्यत्वं निर्बाधम्। नचेश्वरजन्यत्वादीश्वरप्रत्यक्षोपजीवकत्वं वेदस्य शक्यम्। अबुद्धिपूर्वमेव तदभिव्यक्तेः। नचाऽत्र मानाभावः। निःश्वसितश्रुतेः। भगवान् ब्रह्म कार्त्स्न्येनेत्यन्वीक्षाबोधकवाक्याच्च। अन्यथा तदनुपपत्तेः। अतो लोकानधिगतार्थगन्तृत्वात् तदर्थस्य प्रमाणान्तराबाध्यत्वेन निरपेक्षेण सह सम्बद्धत्वेन च वेदात्मकशब्दस्यैव मूर्द्धन्यत्वमुचितं, नान्यस्येति निश्चयः॥

इदं च तस्य द्वेधा प्रामाण्यं शब्दस्यौत्पत्तिकसूत्रविमर्षादवसीयते। तेनात्र शब्दार्थतत्सम्बन्धाः क्रमेण परीक्षणीयाः। तथापि शब्दे विचारबाहुल्याद् व्यासपादैः सर्ववेदार्थरूपस्य ब्रह्मण एव पूर्वं विचारितत्वात् सम्बन्धे विचारस्याल्पत्वाच्च प्रातिलोम्येनैव विचार्यते। तत्रार्थानामुत्पत्तिविनाशशालित्वाद् देवदत्तादिनाम्नां च जननोत्तरमेव सम्बन्धदर्शनात् तन्न्यायेनान्यत्रापि तथैव सिद्धेर्न पूर्वोक्तं साधीय इति नैयायिकादयः प्रत्यवतिष्ठन्ते॥

अत्र जैमिनीयाः—शब्दार्थयोः कः सम्बन्ध इति जिज्ञासायां, न तावत् संश्लेषतादात्म्यसमवायसंयोगाः। क्षुरमोदकशब्दोच्चारणे मुखपाटनपूरणाद्यापत्तेः। नाप्यैक्यम्। प्रतीतिविरोधात्।

अन्यथैवाग्निसंयोगाद्दाहं दग्धोऽभिमन्यते * अन्यथा दाहशब्देन दाहार्थः संप्रतीयत इति प्रतीतिभेदाच्च। नापि कार्यकारणभावः। द्वयोर्नित्यत्वात्। नापि निमित्तनैमित्तकत्वयोनाश्रयाश्रयिभावाः। प्रत्यक्षविरोधेनानुपपन्नत्वात्। किन्तु प्रत्याय्यप्रत्यायकभावः संबन्धः। स चाऽपौरुषेयः। तत्तच्छब्दश्रवणेन तत्तदर्थोऽवगमस्यानादिपरम्परासिद्धत्वात्। अत एव च स्वाभाविकः। नच पराभिप्रायानुमानादेवार्थप्रतिपत्तिसिद्धेरस्वाभाविकत्वं शङ्कनीयम्। स्वापाद्यवस्थायां परवचैरनभिज्ञैर्बालैः शुकसारिकादिभिरनर्थज्ञैर्वैदिकैश्चोच्चारिताल्लौकिकशब्दान्मन्त्रार्थवादादिवाक्यार्थाभिज्ञानामप्यर्थबोधानापत्तिप्रसङ्गात्। नच प्रत्याय्यप्रत्यायकभावो नाम संज्ञासंज्ञिभावस्तस्य स्वाभाविकत्वे, इदम्प्रथमतया श्रवणेऽप्यर्थप्रत्ययापत्तिरिति शङ्कनीयम्। चक्षुष आलोकसंयोगस्येव शब्दस्य शब्दार्थसम्बन्धग्रहस्यापि सहकारित्वात्। नच सम्बन्धग्रहो नाम शक्तिग्रहः। तस्य पुरुषान्तरकृतबोधनाधीनत्वात् पौरुषेयत्वं सम्बन्धस्य शङ्क्यम्। तद्ग्रहणमात्रस्यैव पुरुषाधीनत्वेन ग्राह्यस्य सम्बन्धस्य तदनधीनत्वात्। अन्यथार्थकथने तस्यान्यैरुपालम्भदर्शनेन तथा निश्चयात्। देवदत्तादिशब्दवन्नूतनार्थसम्बन्धे तस्य स एवार्थ इति तदनुपालम्भप्रसक्तेश्च। न च भूमावर्थो मुखे शब्दः, गौरिति शब्दः सास्नादिमान् अर्थः, शब्दोऽयं नाऽर्थः, अर्थोऽयं नशब्द इत्याश्रयभेदरूपभेदप्रतीतिभेदै रज्जुघटवच्छब्दार्थयोः पृथग्भूतत्वात् तादृशयोश्च रज्जुघटसम्बन्धवत् कृतकसम्बन्धवत् कृतकसम्बन्धस्यैव दृष्टत्वान्न नित्यसम्बन्धसिद्धिः। सिद्धे चैवमनित्यत्वे कश्चिच्चेतनः पुरुषस्तत्सम्बन्धी वाच्यः। स च नास्मदादिः। असर्वज्ञत्वात्। किन्तु परमेश्वरेण सर्गादिकाले सम्बन्धः क्रियते। ततो रूपद्वयं कृत्वा व्यवहार्यत इति वाच्यम्। सर्गादौ

मानाभावात् । आदिकाले सर्वाभावेनोपादानुपादानाभावेन सृष्ट्यभावप्रसक्तेः । वैचित्र्यानुपपत्तेश्च । नच जीवादृष्टवैचित्र्यात् कार्यवैचित्र्यमिति युक्तम् । दृष्टं विना केवलादृष्टेन तदसिद्धेः । अन्यथा बीजं विनापि वृक्षोत्पत्तिप्रसङ्गात् । नचैश्वरेच्छादिना नियतव्यवस्था सिद्धिः । केवलानुमानशतैरपीश्वरासिद्धेः । बीजाङ्कुरवद्विनापीश्वरं प्रवाहादेव सृष्टिसिद्धावीश्वराङ्गीकारस्यायुक्तत्वात् । ईश्वरकर्तृकत्वेनानित्यत्वे सति वेदानां पौरुषेयत्वापाते शाक्यादिग्रन्थवदतीन्द्रियार्थग्राहकत्वाभावप्रसङ्गेनाऽप्रामाण्यप्रसङ्गात्। नच मन्त्रार्थवादेतिहासपुराणादिकमेव सृष्ट्यारम्भे प्रमाणमिति वाच्यम्। तेषां तत्र तात्पर्याभावात्। तस्मादनादौ संसारे पदपदाऽर्थसम्बन्धधुरभावान्नित्य एव तयोः सम्बन्ध इत्याहुः॥ वेदान्तदर्शनरीतिकस्त्वग्रे वक्ष्यते ॥

नन्वर्थस्यानित्यत्वात् कथं सम्बन्धस्य नित्यत्वमितिचेत् ॥ अत्र जैमिनीयाः॥स च न व्यक्तिरूपेणाऽनित्येनार्थेन, किन्तु नित्येनाऽऽकृतिरूपेण । आकृतिरेव च सामान्यम् । अनुगताकारप्रतीतिजननात्। सैव च जातिर्न तु तदभिव्यङ्ग्या ।मानाभावात् । न च आकृतेरनित्यत्वम् । एकव्यक्तिनाशेऽपि व्यक्त्यन्तरे दर्शनादतो न दोष इत्याहुः ॥

अत्र बौद्धाः— आकृतिर्व्यक्तेः सकाशाद्भिन्ना, अभिन्ना, भिन्नाभिन्ना वा । नाद्यः । व्यक्तिव्यतिरेकेणानुपलब्धेः । न द्वितीयः । आधाराधेयभावप्रतीतिबाधापत्तेः । एकस्यापेक्षरूपायामनेकानेकरूपाभेदस्याशक्यवचनत्वाच्च । न तृतीयः । भेदाभेदयोः सहावस्थानविरोधात् । किञ्चाद्ये विकल्पे सा सर्वगता वा, तत्तद्व्यक्तिमात्रगता वा । नाद्यः । अन्तरालेऽनुपलब्धेः । न द्वितीयः । एकस्यां व्यक्तौ कात्स्न्र्येन वर्तमानस्य व्यक्त्यन्तरे

तदनुपलम्भप्रसङ्गात् । अनुत्पन्नायां व्यक्तौ तस्मिन् देशेऽसत्त्वादुत्पन्नायामपि तस्यां तदनुपलम्भप्रसङ्गाच्च । नच तया सहैवोत्पद्यत इति वाच्यम् । नित्यत्वव्याघातापत्तेः । नच व्यक्त्यन्तरादायातीति वाच्यम् । अमूर्तत्वात् । यत आयाति तत्रानुपलम्भप्रसङ्गाच्च । नचांशेनायातीति वाच्यम् । निरंशत्वाभ्युपगमात् । एकस्या अतीतानागतवर्तमानव्यक्तिष्वंशतो वृत्तेरशक्यवचनत्वाच्च । एवं व्यक्तिनाशे तत्र स्थिताया उपलब्धिप्रसङ्गात् । पुनर्याने तत्र पुनः प्रवेशेन व्यक्त्यन्तरे द्विगुणोपलब्धिप्रसङ्गाच्च । तस्माद्विकल्पाकारमात्रमिदं, न तु सामान्यं नाम पदार्थः कश्चिदस्ति । नच गवाश्वादिवैचित्र्यानुपपत्तिः । विचित्रस्वभावस्वलक्षणदर्शनवशादेव तदुपपत्तेः । नच सामान्यरूपस्यार्थस्याभावे कथं सामान्यविकल्प इति वाच्यम् । अर्थशून्यस्यापि विकल्पस्य शुक्तिरजतादौ दर्शनात् । नचैवं विसंवादापत्त्या लोकव्यवहारबाधापत्तिरिति वाच्यम् । यथा मण्यर्थिनो मणिप्रभायां मणिबुद्ध्या प्रवृत्तौ तस्या बुद्धेः परम्परया मणिप्रभवत्वेन मणिप्रापकतया संवादाद् व्यवहारसिद्धिस्तथा विचित्रार्थक्रियासमर्थस्वलक्षणाभिमानिनो जायमानस्यार्थशून्यस्यापि जातिविकल्पस्य परम्परया तत्प्रभवतया संवादात् । तादृशव्यवहारार्थप्रवृत्तेरपि सिद्धेः । किञ्च । केशाण्डकन्यायेन स्थूलावभासस्योपपत्तौ सञ्चितानेकपरमाणुपुञ्जातिरिक्तस्याऽवयविनो व्यक्तिरूपस्याभावाद् दूरापास्तं निराधारं सामान्यम् । नच सामान्याभावे कथं गौर्गौरित्यनुगताकारप्रतीतिरिति शङ्क्यम् । विलक्षणरूपस्वलक्षणस्वभावादेव सम्भवात् । सामान्यवादिनापि नानाविधानां गोत्वाश्वत्वादीनां सामान्यत्वाविशेषेऽपि तेन तेन तत्तद्व्यक्तिषु तत्तत्प्रतीतिजनने स्वभावस्यैवाश्रयणीयत्वात् । तस्माद्विकल्पमात्रमेव सामान्यं, न तु वस्तु तदित्याहुः ॥

तत्त्वं पार्थसारथिमिश्राः ॥ नैवं सामान्यमपह्नोतुं शक्यम्। प्रत्यक्षबलसिद्धत्वात्। अयं गौरयमपि गौरयं वृक्षोऽयमपि वृक्ष इति प्रत्यक्षस्य देशकालावस्थान्तरेष्वविपर्यस्तत्वात् सर्वप्रमाणोपजीव्येन प्रत्यक्षेणैव वस्तुनो द्व्याकारत्वसिद्धौ कुतर्काभासानां भ्रान्तत्वात्। नचानुमानेनाप्येतद्बाधः। उपजीव्यत्वात्। भेदाभेदविकल्पेन सामान्यं निराकुर्वता त्वयापि— यद्वस्तु तद्भिन्नमभिन्नं वा भवति, सामान्यमपि यदि वस्तु स्यात् तर्हि भिन्नमभिन्नं वा स्यात्। न च द्वेधाऽपि सम्भवति। तस्मादवास्तवमिति वक्तव्यम्। अन्यथा वस्तुत्वस्य भेदाभेदव्याप्तत्वाद् व्यापकानुपलब्ध्या सामान्यस्यावस्तुताया वक्तुमशक्यत्वात्। तथा सत्यङ्गीकृतमेव सामान्यं वस्तु। नच सामान्य औपाधिको वस्तुशब्दो, न जातिनिमित्तकोऽतो नानेन जातिसिद्धिरिति वाच्यम्। अनेन जातिसिद्ध्यभावेऽप्युपाधिरूपसामान्यस्य सिद्ध्यानुगताकारस्य सामान्यस्य सिद्धत्वात्। औपाधिकानामपि मूलोपलक्षणं विना स्वरूपलाभाभावात्। व्यावृत्त्यैकरसं सर्वमभ्युपगच्छतः सौगतस्य क्वचिदप्यनुवृत्तरूपाभावेनौपाधिकव्यवहारस्यापि दुर्घटत्वात्। सिद्धे चैवमनुवृत्ताकारे बाधकाभावाज्जातिरूपमपि निष्प्रत्यूहम्। तस्मात्सर्वप्रमाणसिद्धं सामान्यं नापह्नोतुं शक्यम्। ननु तर्हि विकल्पानां कः परिहार इतिचेत्। न कोऽपि। अपरिहृतानामपि तेषामकिञ्चित्करत्वात्। सामान्याभावे तेषामपि स्वरूपलाभाऽभावादित्युक्तम्। अथापिचेन्मदाग्रहस्तर्हि तेऽपि परिह्रियन्ते। तत्र केचित्। भिन्नमेव सामान्यं व्यक्तिभ्यः। नच पृथगुपलब्धिप्रसङ्गः। व्यक्तिसमवेतत्वेनान्यत्र तदभावात्। नच व्यक्त्यतिरेकेणादर्शनादभेदः शङ्कनीयः। खण्डमुण्डयोर्गवोः खण्डमुण्डाकारस्य व्यावृत्तस्य दर्शनात्। अभेदे गवाकारवदुक्ताकारस्याप्यनुवृत्त्यापत्तेः। उक्ताकारवद्

गवाकारस्य व्यावृत्त्यापत्तेः । एकस्यामपि व्यक्तावियं गौरिति प्रत्यये गौरिति यदिदं बुद्धिगोबुद्ध्योः पर्यायतापत्तेश्च । न च व्यक्तेस्तादूप्यप्रत्ययानुपपत्तिप्रसङ्गः । समवायसम्बन्धमहिम्नैव तत्सिद्धेः । तस्माददोष इत्याहुः ॥ तत्त्वं तु पूर्वोक्तन्यायेन भेदस्य तादात्म्यप्रतीत्या वाऽभेदस्य सिद्धत्वाद्भिन्नाभिन्नत्वमेव युक्तम् । न च भेदाभेदयोर्विरोधः शङ्कनीयः । सहदर्शनेनैव शङ्कानिरासात् । नचातिप्रसङ्गः । इदं रजतं, नेदं रजतमितिवत् परस्परोपमर्दाभावात् । अत इयं गौरिति बुद्धिद्वयं सामानाधिकरण्यापर्यायत्वाभ्यामभेदं भेदं च जातिव्यक्त्योर्व्यवस्थापयतीति प्रतीतिबलादेवाय भेदाभेदाविरोधः । किञ्च, गोरूपेण निरूपणे गोजात्या व्यक्तिरभेदेन प्रतीयते । गौरयं शाबलेय इति व्यक्त्यन्तरात्मना निरूपणे च जातिर्भेदेन प्रतीयते । योऽयं शाबलेयो गौः स न बाहुलेय इत्यपेक्षाभेदादपि तथा । कुड्यदण्डादिषु विरुद्धस्वभावानां दीर्घह्रस्वादीनामपेक्षाभेदेनाविरोधवद् उभयप्रतीत्यविशेषात् । नच वैलक्षण्यप्रतीतिर्भेदप्रतीतिर्वैलक्षण्यप्रतीतिस्त्वभेदप्रतीतिरिति भेदप्रतीतिसमये येन जातिव्यक्ती भिन्ने अवगते तेनैव पुंसा अभेदप्रतीतिसमये तयोरन्यतरदेकं प्रतीयत इत्येकानिष्ठाकारद्वयस्य पर्यायेऽवगाहादेकनिष्ठद्विप्रतीतिः । सा च भेदप्रतीतिरेव, न तु भेदाभेदप्रतीतिरिति तदभावान्न भेदाभेदयोरविरोध इति वाच्यम् । वस्तुद्वयप्रतीतेर्भेदप्रतीतित्वाभावात् । एकव्यक्तिदर्शने जातिव्यक्त्योः सत्त्वेऽपि भेदाप्रत्ययात् । व्यक्त्यन्तरदर्शन एव जात्यन्वयेन पूर्वव्यक्तिव्यतिरेकेण च जातिव्यक्तिप्रत्ययस्य भवतोऽप्यभिमतत्वात् । किञ्चित्पुरुषं दूरात् पश्यतः पूर्वोपलब्धं च तत्सदृशं स्मरतो वस्तुतः पुरुषद्वयप्रतीतावपि स एवायमिति प्रतीत्या भेदानवधारणात् पूर्वोपलब्धमेव पुरुषं कालान्तरे दूरात् पश्यतः किञ्चिद्वैलक्षण्ये भेदप्रत-

वाच्य। नचात्र मानाभावः। किं स एवायमुतान्य इति संशय-वाक्यस्यैव मानत्वात् अन्यथा तदनुदयात्। तस्मादन्योऽयं नान्योऽयमित्येव भेदाभेदबुद्ध्योराकारौ। अतो द्वौ गावावुपलभमानस्योभयत्र गोमत्त्वयादयमस्मादन्य इति मतया बोधपपत्तंभिन्नाभिन्नत्वम् एवञ्च व्यक्त्यात्मरूपत्वाद् व्यक्तिगतैव जातिः। सा च स्वकारणादुत्पद्यमानायां व्यक्तौ कारणवशात् सम्बध्यते। नचास्मिन् देशे प्रागविद्यमानायाः कथमेतद्देशसम्बन्ध इति शङ्क्यम्। अस्मिन् देशे प्रागविद्यमानस्यैव देशान्तरादागतौ कारणवशादेव संयोगदर्शनात्। एतावान् परं विशेषो यत् संयोगो देशान्तरस्थस्यानेन देशेन क्रमिकस्तादात्म्यसमवाययोस्त्वनन्तरदेशमनपेक्ष्यैव साहसिकः। संयोगस्य तादात्म्यसमवाययोश्चैकस्वभावाभावात्। नच जातेर्नित्यत्वेन व्यक्तीनां चानित्यत्वेनाभेदोऽनुपपन्न इति शङ्क्यम्। तस्य वस्तुनो नानाकाराङ्गीकावकेनचिदाकारेण नित्यत्वस्य केनचिदनित्यत्वस्य च धारणेनाविरोधात्। एवञ्च जातेर्व्यक्तिरूपेणाऽनित्यत्वस्य व्यक्तेश्च जातिरूपेण नित्यत्वस्योक्तावपि बाधकाभावात्। यदि च सर्वगतं सामान्यमुपेयते तदापि व्यक्तीनामभिव्यञ्जकत्वात् संयुक्तसमवायस्य सामान्यग्राहकसन्निकर्षस्य व्यक्तिदेश एव सत्त्वान्न सर्वत्रोपलब्धिप्रसङ्गः। एवमभेदपक्षेऽप्याकारभेदाङ्गीकारान्नित्यत्वाऽनित्यत्वादिवत्, सर्वगतत्वासर्वगतत्वादिकमपि नानुपपन्नम्। वृत्तौ कात्स्न्यांश–विभागस्तु प्रमाणतो दुरवगतेर्न शङ्कितुमपि शक्यते। व्यक्तेः पुञ्जरूपत्वाभावस्तु केशाण्डकवत् पुञ्जप्रतीत्यभावादेव निरस्तः। तेन निराधारताऽपि परिहृता बोध्या। तस्मादस्त्यतिरिक्ता आकृतिर्नित्येति, तया शब्दस्य सम्बन्धोऽपि नित्य इति सिद्धम्। देवदत्तादिनाम्ना तु प्रत्यक्षतः सम्बन्धकर्तुरुपलम्भाद् व्यक्तावेव च सम्बन्धाच्च तन्न्यायेन सर्वेषां तत्त्वम्। स-

न्यकर्तुरनुपलम्भादाकृतौ सम्बन्धाच्चेति दिक् ॥

यत्तु केचित् । आकृतौ शक्त्यङ्गीकारे, व्रीहीनवहन्ति, पशुमालभेतेत्यादिविध्यानर्थक्यं निसायाश्चाकृतेरवहननालम्भाद्ययोगात् । लिङ्गसंख्याकारकानन्वयश्चालिङ्गत्वादेकत्वादमूर्तत्वाच्च । गौः शुक्लेत्यादिसामानाधिकरण्यबाधश्च । जातिगुणयोर्भिन्नत्वात् । एवमन्यदपि द्रष्टव्यम् । तस्मान्नाकृतौ शक्तिः । किन्तु व्यक्तावेव । न चैकत्र शक्तौ ज्ञातायां व्यक्त्यन्तरबोधो दुर्घटः । तत्र शक्तेरज्ञानादिति वाच्यम् । जातेरुपलक्षकत्वेनादोषात् । यः शुक्लवासाः स देवदत्त इतिवद् यैवमाकृतिका सा गौरित्येवं बोधसम्भवात् । जातिमेकामुपलक्ष्य व्यक्तिबोधनाच्च नानेकशक्तिकल्पनापत्तिः । आकृतिविशिष्टायां वा व्यक्तौ साऽस्तु । तथा सति न कोऽपि दोष इत्याहुः । तन्न । विशिष्टायां शक्तेः कल्पने शक्यद्वयापत्त्या गौरवात् । केवलायां तु कल्पने तासामतीतानागतवर्तमानानामनन्तत्वेन शक्यत्वज्ञानासम्भवात् । शुक्लायां व्यक्तौ व्युत्पन्नस्य गोशब्दस्य कृष्णायां प्रयोगे व्यभिचारात् । अस्य पदस्यायमेवार्थो नान्य इत्येवंलक्षणकत्वेन शक्तेर्नियमरूपत्वाद् व्यक्त्यन्तरेऽपि शक्तौ तस्या व्यभिचारप्रसङ्गेन नियमरूपत्वहानेरनन्तशक्त्यापत्तेश्च । न च जातेरुपलक्षणत्वान्नानन्त्यमिति वाच्यम् । तथाप्यभिधेयानन्त्येन तदपरिहारात् । व्युत्पत्तिसमय एव जातेरुपलक्षणत्वात् । हस्तमुद्रितं मणित्रयं कृत्वा मद्धस्तपिहितं यत्तन्मणिपदवाच्यमित्युक्तौ वक्तृहस्तस्योपलक्षणत्वेऽपि मणित्रयपदेन मणिव्यक्तीनामेवाभिधानात् । किञ्चाकृतिमविषयीकृत्य व्यक्तिमात्राभिधाने शब्देन व्यक्तिरेव प्रतीयेत, न तु विजातीयव्यावृत्ता सा । तथा सति पशुमालभेतेति वाक्याद् यःकश्चिदन्य आलभ्येत । सन्देहानपायात् । यदि च व्यक्तेर्जात्यविनाभूतत्वादभिधानसमय एव शब्दो जातिमपि विषयी-

करोतीत्युच्यते, तदा गोजातीयं प्रत्याययन् प्रथमं जातिमेव गोचरयतीत्यागतम्। तथा सति विशिष्टे एव शक्त्यापत्तिर्न तु केवलव्यक्तौ। नचैवमेवास्त्विति वाच्यम्। तथा सति पूर्वं जात्यभिधानात् तदविनाभूतव्यक्तेरपि तत एव प्रतिपत्तिरिति, न तत्र शक्तिकल्पनापेक्षा। किञ्च, व्यक्तीनां खण्डमुण्डादिभेदेन विचित्रत्वात् तदभिधाने चित्रबुद्धिरप्युत्पद्येत, न त्वेकाकारा। उत्पद्यते त्वेकाकारा। अतोऽन्वयव्यतिरेकाभ्यां जातिरेवाभिधेयेति निश्चयः। न च पूर्वोक्तदूषणापत्तिः। आकृतेर्व्यक्त्यव्यतिरिक्तत्वात्। एकस्यैव वस्तुनो व्यावृत्त्यनुवृत्तरूपाभ्यामुभयात्मकतायाः पूर्वमुपपादितत्वात्। अतोऽवहननादेर्लिङ्गादेश्च स्वरसेनैवान्वय इत्यदोषः। भेदपक्षेऽपि जातिर्व्यक्तिमन्तरेणानुपपन्ना तामाक्षेप्स्यति। आक्षेपश्च लक्षणा अर्थापत्तिर्वा। अतस्तथैव व्यक्तिबोधोपपत्तौ न तत्र शक्तिकल्पनापेक्षा। एवं तु, पशुना यजेत अरुणया क्रीणातीत्यादौ श्रुतं करणत्वममूर्तयोरपि जातिगुणयोर्द्रव्यपरिच्छेदकत्वेन तत्र मुख्यतयैवोपपत्स्यते। अधिकरणसम्प्रदानादिरूपं कारकत्वं मूर्तस्य साक्षादसम्भवदभेदं लक्षणां वाऽऽश्रित्योपपत्स्यते। तथा, श्येनचितं चिन्वीतेत्यादावाकृतेरेव सादृश्यप्रतियोगितया कार्यान्वयो दृश्यते। अतोऽभेदपक्षे भेदपक्षे च दोषाभावादाकृतावेव शक्तिर्निश्चेयेत्याहुः॥

गुरवस्तु— अनुपपत्तिज्ञानमन्तरेणापि, गौरस्तीति वाक्याद्गोत्वविशिष्टप्रतीतेर्नार्थापत्तिरपेक्षः। किन्तु समानसंवित्संवेद्यत्वमाक्षेपः। प्रत्यक्षे व्यक्तिमात्रसामग्र्या जातेरिव शाब्दे जातिमात्रसामग्र्यैव व्यक्तेरपि बोधाज्जातिधिया व्यक्तिविषयीकरणे जातिव्यक्त्योरेकधीविषयत्वात्। यद्वा जातिशक्तिरेव व्यक्तिं बोधयतीत्यनयैकशक्त्या युगपदुभयबोधात् समानसंवित्संवेद्यत्वम्। अनतिप्रसङ्गस्तु गोत्वशक्तस्य गोत्वविशिष्टबोधनादित्याहुः॥

वेदान्तदर्शने तु देवताविग्रहाधिकरणे, शब्द इतिचेन्नातःप्रभवात् प्रत्यक्षानुमानाभ्यामित्यादिसूत्रत्रये सर्गादिपक्षेऽपि व्यासचरणैः शब्दार्थयोरौत्पत्तिकसम्बन्धो यः समर्थितस्तमेव व्युत्पादयन्ति। तथाहि। एत इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यानिन्दव इति पितॄन् तिरः पवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानीति शस्त्रमभिसौभगेत्यन्याः प्रजा इत्यादिश्रुतिषु, अनादिनिधना दिव्या वागुत्सृष्टा स्वयम्भुवा * आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तय इति, नामरूपं च भूतानां कर्मणां च प्रवर्तनम् * वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः * सर्वेषां स तु नामानि कर्माणि च पृथक् पृथक् * वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे इत्यादिस्मृतिषु च सर्गादौ वैदिकशब्दादेव जगदुत्पत्तिकथनादेवाद्याकृतिविशेषं विग्रहवत्त्वबोधकमन्त्रार्थवादादिभ्योऽवगत्य, भूरिति व्याहरन् भूमिमसृजतेत्यादिश्रुतेर्लोकादीनामाकृतिं चिकीर्षितां बुद्धावालिख्य तत्तदाकारकजगत्करणात् सृष्ट्याद्यङ्गीकारेऽप्याकृतावेव सम्बन्धः। महाप्रलये सर्वव्यवहारोच्छेदेऽपि परमेश्वरानुगृहीतानां हिरण्यगर्भादीनामीश्वराणां तत्स्मरणात्। तथा, यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मा इति, सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् दिवं च पृथिवीं चान्तरिक्षमथो सुवरित्यादिश्रुतेः। ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः * शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यज इत्यादिस्मृतेश्चेति॥

अन्येतु— वाचा विरूपनित्ययेति श्रुतेर्वेदस्वरूपस्य, सूर्याचन्द्रमसाविति श्रुत्या जगत्प्रवाहस्य च नित्यत्वे सिद्धे वैदिकानां शब्दानां प्रवाह एव सम्बन्धमाद्रियन्ते॥

इतरे तु— इतरत्रावयवद्वेदस्याप्युत्पत्तिप्रलयप्रत्ययाभ्याकाशादिवन्नित्यत्वं, किन्तु ऋग्यजुरादिनाम्नामानुपूर्वीविशेषात्मकस्य

रूपस्य च प्रतिसर्गमेकरूपत्वात् समाननामरूपप्रवाहानुच्छेदरूपमेव नित्यत्वम्। नच सूक्ष्मरूपेणावस्थितस्याभिव्यञ्जकोत्पत्त्यादिविरूत्पत्तिभ्रमः कल्पनीयः। लौकिकवाक्येऽपि तथा कल्पयितुं शक्यत्वात्। सूक्ष्मरूपेण कार्यमात्रस्य नित्यताभ्युपगमात्। अथ वर्तमानावस्थयैव सत्त्वं वेदस्येति चेन्न। घटादावपि तथा प्रसङ्गात्। दण्डादीनामभिव्यञ्जकत्वसम्भवात्। वर्तमानत्वाभिव्यक्त्योर्भेदाभावाच्च। अत उक्तप्रत्ययानुरोधात् प्रवाहानुच्छेदरूपमेव शब्दस्य नित्यत्वम्। वेदश्च अन्तर्यामिसङ्कल्पात् सर्गादौ हिरण्यगर्भादिभिरबुद्धिपूर्वमेव स्वाप्नपदार्थवत् प्रतिभामात्रेणानुभूयते। ईश्वरस्तु सर्वज्ञत्वात् समानानुपूर्वीनिर्माणं करोतीत्युपपद्यते। अतश्च श्वासप्रश्वासवत् पुरुषबुद्ध्यजन्यत्वेन वेदेषु नाप्रामाण्यशङ्काया अपि सम्भवः। इदञ्च, यो ब्रह्माणमिति, अनादिनिधनेति श्रुतिस्मृतिभ्यामवगम्यते॥ सिद्धान्तस्तु नाकृतिमात्रे सम्बन्धः। लक्षणाप्रसङ्गात्। सा व्यक्तिं विनानुपपद्यमाना तामाक्षिपतीत्युपगमात्। नाप्यर्थापत्तिपक्षः साधीयान्। व्यक्तिबोधनाशे पदानामप्रामाण्यप्रसङ्गात्। अनुपपत्तिज्ञानमन्तरेणापि गोशब्दाद् गोत्वविशिष्टप्रतीतिदर्शनेनार्थापत्तेर्व्यापारत्वस्याप्यसङ्गतत्वात्। नापि समानसंवित्संवेद्यत्वपक्षो युक्तः। गोगोत्वपदयोः पर्यायतापत्तेर्गोत्वपदाद्गोप्रत्ययापत्तेरित्यादिनैयायिकोक्तदूषणग्रासात्। यः सिक्तरेताः स्यात् स प्रथमामुपदध्यादित्यादौ सिक्तरेतस्त्वादेराकृतित्वाभावेन श्रुतिविरोधापत्तेश्च। नच तत्र प्रवृत्तिनिमित्त एव सम्बन्ध इति वाच्यम्। उपाधेरनित्यत्वेन नियमभङ्गप्रसङ्गात्। सिक्तरेतस्त्वादेः प्रमाणान्तरेणापि ग्रहणात् तद्बोधकवेदाप्रामाण्यापत्तेः। तस्य धर्मस्योपधानकर्तृत्वायोगात् पदप्रवृत्तिवैयर्थ्यापत्तेः। ईदृशस्थले व्यवहारस्याशक्यवचनत्वेन सङ्केतग्रहविरोधाच्च। तस्माज्जा-

कृतिमात्रे सम्बन्धः, किन्तु व्यक्तावेव सम्बन्धः। नच व्यक्तेरनित्यत्वात् सम्बन्धानित्यत्वं शङ्क्यम्। वेदोक्तपदार्थानामाधिदैविकानां पुरुषावयवरूपत्वेन नित्यत्वात्। नचावयवानां हस्तपादादिरूपत्वेन यज्ञाद्याकारकत्वाभावात् कथं जातिगुणक्रियाद्रव्यनामवाचकपदजातस्यावयवे सम्बन्ध इति शङ्क्यम्। सर्वस्य भगवदनुकारितया तदवयवानां सर्वरूपत्वात्। पुरुषसूक्तेन तदर्थनिश्चायकद्वितीयस्कन्धाध्यायेन च तथा निश्चयात्। यदास्य नाभ्यान्नलिनादहमासं महात्मनः * नाविदं यज्ञसम्भारान् पुरुषावयवादृते * तेषु यज्ञस्य पशवः सवनस्पतयः कुशा इत्यादीनां, पुरुषावयवैरेतैः सम्भाराः संभृता मयेत्यन्तानां वाक्यानां तत्र दर्शनात्। तमेव भान्तमनुभाति सर्वमिति श्रुत्या अनुकृत्यधिकरणे सर्वस्य भगवदनुकारित्वकथनेन भगवतः सर्वाकारत्वसिद्धेः। एवञ्च सर्वे वेदा यत्पदमामनन्ति, वेदैश्च सर्वैरहमेव वेद्यः, मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते ह्यहम् * एतावान् सर्ववेदार्थ, इत्यादिषु बोधिसमभिधानवृत्त्या वेदस्य भगवद्वाचकत्वं यथाश्रुतं संगतं भवेत्। नच सूत्रकारेणाऽतः प्रभावादित्यनेन शब्दादर्थोत्पत्तिकथनान्नैवमर्थो युज्यते इति शङ्क्यम्। परप्रसिद्ध्या परो बोधनीय इति जैमिनिसमाधानार्थं तथा कथनात्। तेन ह्यनुपलब्ध एवार्थे चोदनावत्वेन धर्मपदार्थसत्तायास्तत्र भट्टस्यव्यतिरेकस्य च स्वीकारात्। अत एवं कथनं न वैदिकं मपश्चान्तरं विरुणद्धि। वस्तुतस्तु प्रभवशब्दस्य ज्ञानविषयत्वमात्रमर्थः।

तस्मात् परविद्याऽनुसारेण वैदिकानां पदार्थानां नित्यत्वात् तत्रैव पदानां सम्बन्धः। लौकिकाऽनुवादकानां तु प्रवाह इत्येव युक्तम्। अत एव, समाननामसूत्रे अपि-शब्दग्रहणम्। अन्यथैकेन सूत्रेणैव समाभिसम्भवादन्यतरसूत्रस्याऽपिशब्दस्य च वैयर्थ्या-

पत्तेः। पुनः पुनरेकदा वा पदार्थोत्पत्तौ अव्यभिचारात्मके सम्बन्धानित्यत्वे विशेषाभावात्। एवं तु, स्वरूपनित्यत्वं यस्य सिद्धं धर्मसत्त्वाविच्छेदवत्तादृशं सन्तत्यविच्छेदं चादायोभयथा विरोधसमाधेः सार्थक्यसिद्धिरित्ययमेव सूत्रार्थः।न च मन्त्राहे शक्त्युपगमे तदवयवभूतघटादिव्यक्त्यबोधः शङ्क्यः। वेदपितृमात्रादिपदानामवयविनि शरीरप्रवाहे च शक्तानामवयवबोधकस्य सर्वसम्मतत्वात्। नच जैमिनीयस्मृतेर्विरोधः। मन्त्रार्थ वेदविभागे तान् प्रति तस्य तथा निर्णयात्। कलिवर्ज्यनिर्णयवत्। अतो, जैमिनीये च वैयासे न विरोधोऽस्ति कश्चनेति पुराणवाक्यस्यापि न विरोधः। वस्तुतस्तु जैमिनेरपि व्यासवदेवाशयः।अन्यथा औत्पत्तिकपदस्थले नैसर्गिकपदमेव वदेत्। यत्तु वेदवाक्यस्य नाऽऽकाशवन्नित्यत्वमित्याद्युक्तम्। तन्न। अवकाशोत्पत्तिनाशयोः प्रतीयमानत्वेन तत्राऽपि तौल्यात्। लोकेऽवकाशातिरिक्तस्याकाशस्याऽप्रसिद्धात्। काणादादिस्मृतिविश्वासेन तत्र नित्यत्वमुपगम्य कुड्यतदभावादेरभिव्यञ्जकत्वादिकल्पने तु, वाचा विरूपनित्यया अनादिनिधनत्वादिश्रुतिस्मृत्यनुरोधात् स्थूलरूपेणैव नित्यत्वं वेदस्याङ्गीकार्यम्। अन्यथा तद्वैयर्थ्यापत्तेः। तस्मात् स्वरूपनित्यत्वं वेदस्य निर्बाधमिति दिक्॥

नन्वेवं सतीदानीन्तनयज्ञेषु लौकिकानां द्रव्याणां कथं विनियोग इतिचेत्। प्रोक्षणाधानादिना भगवदवयवावेशात्तदाधारत्वेनेति ब्रूमः। तेषा नित्यपरिच्छिन्नत्वाद् गमागमरूपाविर्भावतिरोभावयोस्तत्र सत्त्वात्।व्यापकत्वपक्षे तु विहितकार्यानुकूलस्वरूपस्य सन्निधानस्यैवावेशत्वात्। एवमेव फलभूतेषु देहादिलोकेष्वपि ज्ञेयः। भगवदवयवात्मकत्वदावेशो ज्ञेयः। अत एव तादृशामधिकारसमाप्तौ मुक्तिश्रवणमपि युज्यते। वैदिकस्य प्रपञ्चस्य

मोचकस्वभावत्वात्। स च शब्दैकसमधिगम्यशब्दाश्रित एव। अर्थाश्रयत्वस्य शब्दलक्षणस्य तृतीयस्कन्धे निरूपणात्। तस्य प्रत्यक्षविरोधाभावाय आधिदैविकमर्थमादायैव समर्थनीयत्वात्। द्वादशस्कन्धेऽपि, ततोऽभूत् त्रिवृदोङ्कारो योऽव्यक्तप्रभवः स्वराट्॥ यत्तल्लिङ्गं भगवतो ब्रह्मणः परमेष्ठिन इत्योङ्कारस्य ब्रह्मलिङ्गशरीरत्वकथनाच्च। एतेनैवार्थस्य वाङ्मात्रत्वं वदन्तोऽपि निरस्ता वेदितव्याः। शब्दस्यार्थप्रत्यायकत्वमप्यत एव ज्ञेयम्। नच मुखपाटनपूरणाद्यापत्तिः। तत्र तथेश्वरेच्छाभावात्। सहकारिण्या विहितक्रियाया अभावाच्च। अत एव, स एनं शुष्के स्थाणौ निपिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीत्यादौ मन्त्रेण सेकात् फलोपदर्शनं युज्यते। अतो न दोषः। नच पुरुषसूक्ते, तस्माद्विराड्जायतेत्युत्पत्तिश्रावणात् कथं नित्यत्वमर्थस्येति वाच्यम्। एतस्य ततो भिन्नत्वात्। तमुपक्रम्य तस्मादस्योत्पत्तिकथनात्। ननु तर्हि तत्रत्यानामनित्यत्वात् तद्वाचकपदानां सम्बन्धस्याऽनित्यत्वमपरिहार्यमिति चेन्न। सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्, सर्ववेदमयेनेदमात्मनात्मात्मयोनिना॥ प्रजाः सृज यथापूर्वं याश्च मय्यनुशेरत इत्यादिश्रुतिस्मृतिभिः प्रवाहानादित्वसिद्धौ तत्र सम्बन्धेनादोषात्। लौकिकपदानामप्येषैव गतिर्बोध्या। वस्तुतस्तु लोकेऽपि व्यक्तावेव पदसम्बन्धः। सूत्रं तु वादिबुद्ध्यनुसारेण सखण्डब्रह्मवादानुसारेण च बोध्यम्। ननु व्यक्तीनामानन्त्याद् एकत्र गृहीतसम्बन्धस्य घटादिपदैर्घटाऽन्तरबोधानुपपत्तिर्दुर्वारेति विशिष्टे सम्बन्धो वाच्य इति चेन्न। ब्रह्मवादे पदार्थानां सर्वेषां भगवदभिन्नत्वेन नित्यत्वात् कारणत्वेनाऽभिमतैरभिव्यक्तिमात्राङ्गीकारादेकस्यैवानेकधा भवनेनाविर्भवनेन तिरोभवनेन चैकस्यैव सर्वत्र सत्त्वादानन्त्येऽप्यदोषादेकत्रैव गृहीतायां शक्तौ निर्वाहाद्

तद्व्यूहवदनुगताकारप्रतीतिसिद्धेश्च वैशिष्ट्यगौरवस्य वैयर्थ्यात्। इदानीमपि हि जातिव्यक्तिविवेकमजानतो बालस्य पामराणां च शब्दाद् व्युत्पत्तिदर्शनाच्च। प्रलये सर्वव्यक्तिनाशे जातिसमवाययोः स्थितिकल्पनस्याऽत्यन्ताऽप्रामाणिकत्वात्। नित्यद्रव्येषु तत्स्थितेरभ्युपगमैकशरणत्वात्। जातिव्यक्तिविभागोऽयं यथा वस्तुनि कल्पित * इति पष्ठस्कन्धवाक्याज्जातेरपि कल्पनैकशरणत्वाच्च। जातौ सत्तानभ्युगमेन तस्या असत्त्वस्य त्वयाप्युपगतत्वाच्च। अतः, स एकधा भवति त्रिधा भवति पञ्चधा * सप्तधा नवधा चैव पुनश्चैकादशः स्मृतः * शतञ्च दश चैकश्च सहस्राणि च विंशतिरित्यादिश्रुतिभिः सृष्टिभेदेष्वेकस्यैवाऽनेकधा भवनस्योक्तत्वात्। दृष्टस्य पदार्थस्य स्वतो याथात्म्याज्ञाने शास्त्रतस्तदवगमस्य मणिपरीक्षादावुपलब्धेश्च श्रुत्युक्ताऽऽदरस्यैव ज्यायस्त्वात्। नचास्य वाक्यस्य, न पश्यो मृत्युं पश्यतीति ज्ञानिनं प्रस्तुत्य कथनान्नास्य भगवत्परत्वमिति शङ्क्यम्। एवमपि कैमुतिकन्यायेन भगवतस्तथात्वसिद्धेरप्रत्यूहत्वात्। प्रजायेयेतीच्छयाऽनेकधा भवनस्य श्रुत्यन्तरसिद्धत्वात्। नच प्रमाणाऽन्तरविरोधाद् ब्रह्माभेदबोधकागमप्रवृत्तिप्रतिरोध इति वाच्यम्। प्रमाणान्तराणामसत्ताऽलौकिकेऽर्थे प्रवृत्तिरहितत्वेनाकिञ्चित्करत्वात्। अन्यथा यागादौ शरीरक्लेशस्य सर्वस्वारे च मरणस्य प्रत्यक्षसिद्धत्वेन तद्विरुद्धानां यागचोदनानामपि प्रवृत्तिप्रतिरोधापत्तेः। लोकेऽपि पाकादिप्रवृत्तिप्रतिरोधापत्तेश्च। अथ तत्र विदुषां फलेप्सूनां ज्ञानादेरौत्कट्यान्न प्रतिरोध इति चेन्न। इहापि मुमुक्षूणां निरवद्यानां तथात्वेन तुल्यत्वात्। नन्वेवं यथाश्रुतार्थग्रहणे गोअश्वा एव पशवोऽन्ये त्वऽपशवः, आदित्यो यूप इत्यादावपि यथाश्रुतग्रहणापत्तिरिति चेन्न। त्रयः पशूनाऽहस्तादानाः पुरुषो हस्ती मर्कटः। पशुपतिः पशू-

नां चतुष्पदाम् उत च द्विपदामित्यादिश्रुत्यन्तरेऽन्येषां पुरुषादीनामपि पशुत्वश्रावणात्तद्विरोधेनापशव इत्यत्र गौण्या उचितत्वात्। एवमादित्यो यूप इत्यादावपि बोध्यम्। इदानीन्तनानां सर्ववेदादर्शित्वात्। अत एव, ग्रावाणः प्लवन्त इत्यस्याः सेतुबन्धे संवादोऽपि संगच्छते। चिद्रूपस्य जडत्वप्रतीतिस्तु, प्रजापतेरीच्छयैवोपपद्यते। लीलार्थं तथात्वाङ्गीकारात्। ननु तादृशां वाक्यानामुपासनाविधिशेषत्वेनार्थवादत्वमितिचेत्। अर्थवादत्वमिति कोऽर्थः। अप्रदर्थबोधकत्वं वा, स्वार्थे अप्रमाणत्वं वा, स्तावकत्वं वा। नाद्यः। प्रतारकत्वापत्तेः। तन्न्यायेन विधिवाक्येऽप्यनाश्वासप्रसक्तेः। अपौरुषेये त्वाडम्बरेण प्रामाण्यसाधनवैयर्थ्यापत्तेश्च। न द्वितीयः। मानाभावात्। आस्तिकानां शब्दश्रवणमात्रेणैव तत्र प्रमाणबुद्ध्युदयात्। स्वार्थे अप्रमाण्ये विधेयस्तुत्यसिद्धेश्च। तृतीयश्चेदुत्कर्षाधायकगुणानां लोकप्रसिद्धानां सतामेव विधेयस्तुत्यर्थकथनादागतमेव स्वार्थेऽपि प्रामाण्यमित्यर्थवादत्वेऽप्यदोषात्। अतो व्यक्तेर्भगवत्त्वपक्षे प्रवाहाविच्छेदपक्षे चैकत्रापि शक्तिग्रहे सुखेनैव व्यक्त्याकृत्योर्बोध इति न किञ्चिदनुपपन्नम्। नचेश्वरकर्तृकत्वे वेदानामनित्यत्वापत्तिरिति वाच्यम्। ईश्वरस्य नित्यत्वेन तत्प्राणभूतस्यास्य सुतरां नित्यत्वात्। अस्य महतो भूतस्य निःश्वसितं यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इति श्रुतेः। ऋचः सामानि जज्ञिरे छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायतेति श्रुतेः। प्रतिकल्प समाननामरूपप्रवाहेणाविर्भावेऽपि इतरवन्नामरूपनिर्माणकरणस्यानुक्तेश्च। नचाप्रामाण्यापत्तिः। पौरुषेयत्वस्याप्रामाण्यतन्त्रत्वाभावात्। पौरुषेयाणां प्रत्यक्षादीनां प्रामाण्यस्य भवताप्युपगमात्। मानवाऽकर्तृकत्वेनापौरुषेयत्वाच्च। ईश्वरस्य वेदादेव सिद्धत्वेनानपेक्ष-

त्वस्याऽहानेश्च । युक्तयापि विचारे कर्मणां फलशेषत्वेन श्रुता यागस्य फलं स्वर्गाद्यवसीयते । यागश्च पाक ओदनमिव न साक्षात् स्वर्गं साधयति, येनेश्वरापेक्षा न स्यात् । स्वर्गश्च लोकात्मकत्वाद् ब्रह्माण्डाधिपस्याधीनः । सुखसाधनानि तदधीनानि । अन्यथा यागेनापूर्वे निष्पन्ने तदानीमेव स्वर्गो भवेत् । प्रतिबन्धस्याशक्यवचनत्वात् । दृष्टार्थापत्त्या एतद्देहादेः प्रतिबन्धकत्वकल्पनेऽपि विनिगमकाभावेन श्रौतस्येश्वरस्यैवाङ्गीकृतेर्ज्यायस्त्वात् । तस्माद्वेदेनैव कुयुक्तिनिरासे व्यक्तावेव पदानां शक्तिः । आकृतिपक्षे चाविच्छिन्नप्रवाह इति न कथमपि नित्यसम्बन्धत्वहानिरिति दिक् ॥

अत्र नैयायिकादयः । ननु व्यर्थोऽयं सम्बन्धनित्यत्वसाधनप्रयासः । शब्दानित्यत्वेन दीपतादवस्थ्यात् । शब्दस्य पुरुषप्रयत्नोत्तरमुपलभ्यमानत्वेन उपलब्धस्य द्रागेव तिरोभावेन चोत्पत्तिनाशशालित्वनिश्चयात् । नच, स एवायं शब्द इति प्रत्यभिज्ञावलान्नित्यत्वं शङ्क्यम् । शब्दं कुरु, मा शब्दं कार्षीरितिसार्वजनीनव्यवहारदर्शनान्नित्यत्वे तदयोगात् । नचायं व्यवहार उच्चारणविषय इति वाच्यम् । नित्यस्य परिच्छिन्नस्यैकदेशस्थत्वेन नानादेशावस्थितवक्त्रुच्चारणेनाऽभिव्यक्त्ययोगात् । अभिव्यक्तिपक्षे च यावानस्ति तावत एवाभिव्यक्तिरिति बहुभिरुच्चारणेऽपि महाशब्दश्रवणाऽयोगाच्च । तस्मादुत्पन्नो गकारो विनष्टो गकार इत्यादिप्रतीतीना जागरूकत्वेन प्रत्यभिज्ञाप्रामाण्य तस्य नित्यत्वासिद्धिः । तदेवौषधमित्यादौ साजात्यमादाय प्रत्यभिज्ञावदत्रापि वक्तुं शक्यत्वात् । नचात्र विनिगमकाभावः । उत्पत्तिविनाशप्रतीत्योरेव तत्त्वात् । सार्वदिकत्वादर्शनात् तादृक्प्रतीतिभ्यां विना प्रत्यभिज्ञाया एवानुदयात् । अत एतयोः प्रत्यभिज्ञाऽऽध्यत्वं भ्रान्तित्वं च निरस्तम् ॥

यत्त्वार्हता, वर्णानां पुद्गलाख्यानवयवानङ्गीकृत्य सावयवत्वादनित्यत्वमाहुः ॥ तन्न ॥ प्रत्यक्षविरोधात् । वर्णेषु साकल्यवैकल्यप्रत्ययाभावाच्च । न चानुमानेन सिद्धिः । हेत्वभावात्। न च वस्तुमात्रस्य सावयवत्वदर्शनाद्वस्तुत्वं हेतुः। परमाणुषु व्यभिचारात् । तेष्वप्यवयवाङ्गीकारेऽनवस्थाप्रसक्तेश्च । तस्माद् द्रुतविलम्बितप्लुतमध्यमोदात्तानुदात्तस्वरितानुनासिकाननुनासिकभेदेन व्यक्तिभेदस्य गत्वादिना साजात्यस्य चोपलम्भात्तदादायेव प्रत्यभिज्ञेति पूर्वोक्तप्रतीतिबलादेवानित्यत्वम्। सिद्धे चैव शब्दस्याऽनित्यत्वे संबन्धस्याप्यनित्यत्वं सिद्धमेव । सम्बन्धस्य पदार्थाधीनत्वात् । शब्दं निर्माय तस्माच्छब्दादयमर्थो बोद्धव्य इत्येवमीश्वरेण सङ्केतकरणाच्चेत्याहुः॥

तदसङ्गतम् । श्रुतिपुराणयुक्तिविरुद्धत्वात् । तथाहि । वाचा विरूपनित्ययेति श्रुत्या, वेदो नारायणः साक्षात् स्वयम्भूरिति शुश्रुम, शब्दब्रह्म सुदुर्बोधम्, स्वयम्भूरेष भगवान् वेदोगीतस्त्वया पुरा * शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारका इत्यादिभिः पूर्वोक्तैश्च पुराणवाक्यैर्वेदस्वरूपस्य नित्यत्वबोधनेन तदङ्गानां वर्णादीनामपि नित्यत्वमर्थतः सिद्धमेव । प्रतीतितदभावौ तु तदाविर्भावतिरोभावहेतुकौ । तथाहि । एकादशस्कन्धे, स एष जीवो विवरप्रसूतिरिति शब्दब्रह्म सुदुर्बोधमिति च भगवद्वाक्यात्, समाहितात्मनो ब्रह्मन्नित्यादिद्वादशस्कन्धवाक्याच्च ब्रह्मणो भगवतो वा हृदयाकाशे आसन्येन करणेन स्वयमेव भगवानादात्मनाऽऽविर्भवति। स पूर्वमव्यक्त एव । ततो नानावर्णादिसङ्कल्पकमनोमयं सूक्ष्मं रूपं प्राप्य भगवन्मुखतो ब्रह्ममुखतो वा प्रकटः सन्, मात्रास्वरवर्णाऽऽत्मना स्थूलरूपेण शब्दब्रह्मात्मकवेदरूपः प्रकाशते।स च नादो व्यापकत्वादस्मदादिष्वपि प्राणघोषरूपेण वर्तते । श्रोत्रवृत्तिनिरोधे कृते भगवतैव जीवस्त शृणोति। अन्यथा तच्छ्रवणं न स्यात्।

द्वारस्य निरुद्धत्वात्। द्वाराभावे जीवस्य स्वतः कार्याक्षमत्वात्। स एव नादः स्फोटपदवाच्यः। स्फुटति वागनेनेति व्युत्पत्तेः। अतः स एव सुषुम्णामार्गेणाधारहृत्कण्ठमुखेषु, परापश्यन्तीमध्यमावैखरीरूपेण प्रकटीभवति। ब्रह्मणः सच्चिदानन्दा इव शब्दब्रह्मणो वर्णपदवाक्यानि नामानि। यथा तेषां वस्तुतो भेदाभावेऽपि सत्ताप्रकाशप्रीतिधर्मकत्वाद्भेद एवमेतेषामपि तत्तदर्थप्रज्ञापकत्वात् स्वरूपैक्याच्च भेदाभेदौ। तेषामिवैतस्यांशानामपि वर्णानां पूर्णत्वं परब्रह्मधर्मत्वं च। तत्रैश्वर्यादय इवात्र सूक्ष्मत्वनित्यत्वव्यापकत्वपरिच्छिन्नत्वानन्तरूपत्वबहुरूपत्वानि। तत्र सूक्ष्मत्वं तु हृत्कण्ठयोः स्वयमनुभूयमानत्वेऽपि परानुभवायोग्यत्वाज्ज्ञेयम्। शब्दस्य नित्यत्वव्यापकत्वे तु जैमिनिनैव सूत्रिते॥ तत्र गुरवः—*नित्यः शब्दो, व्योमैकगुणत्वात्। तत्परिमाणवदिति। भाद्रास्तु*—श्रावणत्वाच्छब्दत्ववदिति, निःस्पर्शद्रव्यत्वादात्मवदिति, वर्णो नित्यो ध्वन्यन्यशब्दत्वात् स्फोटवदिति च प्रयुञ्जानाः प्रत्यभिज्ञाबलादनुमानस्याऽप्रयोजकत्वं निरस्य, नित्यत्वं साधयन्ति। ननु प्रत्यभिज्ञायाः सजातीयत्वात्र तथा अप्रयोजकत्वनिरास इति वाच्यम्। तस्यास्तथात्वे मानाभावात्। वर्णेषु कत्वादिजातेरेवासिद्धेः। यथैकस्य पुंसो बालकुमारयुवद्धस्थूलकृशभावेष्ववस्थाभेदेऽपि न साजात्यमङ्गीक्रियते तथा द्रुताद्यवस्थाभेदेऽपि शब्देष्वप्येवं, न तु साजात्यमिति निश्चयात्। अनेनाकारो द्रुतमुच्चारितोऽनेन विलम्बेनेति धर्ममात्रभेदावगाहात्। खण्डमुण्डगोव्यक्त्यांरित्वायमकारो द्रुतोऽयं विलम्बित इति धर्मिभेदानवगाहाच्च॥

ननु बाल्यकौमारादीनां क्रमिकत्वाद्युक्त एकस्मिन् पुंसि समावेशः, उदात्तादीनां तु युगपदनेकैरुच्चारिते वर्णे समवेतानामितरेतरविरुद्धानामेकस्मिन् समावेशो न वक्तुं शक्य इति विरु-

द्धर्मैः सिद्धे धर्मिभेदे सुखेन जातिसिद्धिरितिचेन्न। एतेषां ध्वनिधर्मत्वेन वर्णधर्मत्वाभावात्। नच वर्णधर्मत्वप्रसङ्गानुपपत्तिः। अल्पे महति च दर्पणे युगपद् दृश्यमान एकस्मिन्नेव मुखे युगपन्महत्त्वाऽल्पत्वप्रतीतिवदुपपत्तेः। ननु सिद्धे वर्णव्यक्त्यैक्य उदात्तत्वादीनां ध्वनिधर्मत्वसिद्धिर्न तु ततः पूर्वं, तत्तूक्तप्रतीत्या बाधेन पूर्वं सिद्ध्यतीति कथमेतत्सिद्धिरितिचेन्न। अर्थप्रत्यायकत्वेनैव तस्य सिद्धत्वात्। त्रिक्षणावस्थायित्वेन प्रत्युच्चारणमन्यस्यान्यस्य क्रियमाणत्वेन शक्तिग्रहणासम्भवात्। अगृहीतशक्तिकस्य चाऽप्रत्यायकत्वात्। अतश्चिरस्थायित्वमङ्गीकार्यम्। ततश्च सिद्धे स्थायित्वे नाशकस्याभावादनश्वरत्वसिद्धिः। अनश्वरभावत्वेन चानुत्पन्नत्वसिद्ध्या नित्यत्वसिद्धिरिति। नच गृहीतशक्तिकसदृशोऽन्यः प्रत्याययिष्यतीति वाच्यम्। विकल्पासहत्वात्। तथाहि। स किमवगतसादृश्यः प्रत्याययिष्यत्युतानवगतसादृश्यः। नाद्यः। ज्ञातसम्बन्धेनोच्चारितमात्रेऽर्थवति शब्दे नष्टे वीचीतरङ्गवत् कर्णपथमागतस्य तत्सन्तानस्यानर्थकस्य सदृशत्वेऽपि व्युत्पित्सुना सादृश्यानवगमेन ततोऽर्थप्रत्ययासम्भवात्। ग्रहणदशायां तस्य नष्टत्वादावापोद्वापाभ्यामेकस्य द्विस्त्रिरुपलम्भाभावेनान्वयव्यतिरेकानवधारणे शक्तिग्रहस्याप्यसम्भवाच्च। नच व्युत्पत्तिसमये बहुषु शब्देषु सदृशेषु यः पश्चाच्छ्रूयते स शक्तिग्रहं लभते। ततो गृहीतायां शक्तौ ये तदुत्तरकालास्तेऽर्थं तत्सादृश्यादर्थं प्रत्याययिष्यन्तीति वाच्यम्। व्युत्पन्नानां व्यवहारकालस्यैव व्युत्पित्सुव्युत्पत्तिकालत्वेन तदानीमुपलभ्यमानस्यैकस्यैव शब्दस्य व्युत्पित्सुं प्रति मुख्यमर्थवत्त्वमन्यान् प्रत्यर्थवत्सादृश्याद् गौणमितरान् प्रत्यनर्थकत्वमिति विरोधापत्तेः। पाश्चात्यस्यैव शक्तिग्रहलाभे मानाभावाच्च। परबोधनार्थं शब्दोच्चारणादुक्तरीत्या चाऽबोधप्रसङ्गादनुच्चारणा-

पत्तेश्च । न द्वितीयः । गोशब्दाद्प्यश्वबोधापत्तेः । ननु तत्र वैसादृश्यप्रतीतिर्बाधिकेत्यदोष इति चेत्तर्हि यत्र न बाधिका प्रतीतिस्तत्र कीदृशी सेति पूर्वं निर्णेयम्। तत्र न तावत्, स इत्याकारिका तव प्रत्यभिज्ञा । ऐक्यापादकत्वात् ।

नाऽपि, तत्सदृश इति। तदनवगमात्। नापीतरा। उक्ताभ्यामितस्याः इतरस्या अनिर्वाच्यत्वात् । अथानवगते सादृश्ये सादृश्यं मन्वानस्यार्थप्रत्यय इति चेन्न । वदतो व्याघातादुन्मत्तप्रलापत्वापत्तेश्च । अतोऽर्थप्रत्ययबलादेव वर्णव्यक्त्यैक्यसिद्ध्या निष्प्रत्यूहं शब्दस्य नित्यत्वसिद्धिः । नित्यत्व एव चाकृतिरूपेणार्थेन सम्बन्धः । आकृतिं निर्दिश्य कर्त्रा सम्बन्धकरणस्य भवदभिमतत्वात् । अनित्यत्वे एकस्यामेव गोव्यक्तौ बहूनामाकृतीनां सत्त्वाद्गोशब्दं विना तद्वाच्यामाकृतिमितरपार्थक्येन कथं वा कर्तोपदिशेत् । नित्यत्वे तु तस्यैव शब्दस्य बहुधा उच्चारणाद् व्युत्पित्सोः समानासमानव्यक्तिष्वन्वयव्यतिरेकाभ्यामाकृतिवचनत्वं गमयेदतोऽपि नित्य इति॥

शङ्करभाष्ये तु, सिद्धे नित्यत्वे यत्रैकशब्दस्यानेककृत्व उच्चारणं तत्राऽष्टकृत्वो गोशब्द उक्तो दशकृत्व उक्त इति लोकोक्तिः सार्वजनीना सङ्गता भवति । तेन प्रत्यभिज्ञापि तत्तद्व्यक्तिविषयत्वादबाधितैव । यदि च तथाष्टौ गोशब्दान् प्रतीयुरष्टौ गोशब्दा इति वदेयुः । नचात्र सादृश्येन तथोक्तिरिति वक्तुं शक्यम् । सदृश इति प्रत्ययाभावात् । अन्यत्वावगमकप्रमाणाभावेन तदनवगतौ सादृश्यस्याप्यपरिचनत्वात् । नच नाशप्रत्यय एव मानमिति वाच्यम् । पुनः पुनरुपलम्भेन तस्य भ्रमत्वात् । अनुपलम्भमात्रेण नाशकल्पनस्य मूर्खगोचरत्वादित्यप्युक्तम् । नच नित्यत्वेऽपि परिच्छिन्नत्वाद् युगपन्नानादेशावस्थितनानुच्चारणेनाभिव्यक्त्ययोग इति शङ्कनीयम्। तस्य सर्वगतत्वेन नानादेशावस्थितयानुप्रयत्न-

निष्पन्नैर्ध्वनिभिः स्वस्वदेशेऽभिव्यज्यमानत्वेन सुखेनैवोपपत्तेः । नच सर्वगतत्वे मानाभावः । अबाधितप्रत्यभिज्ञाया एव तत्रापि मानत्वात् । अन्यथाऽन्यत्वस्यापि प्रसक्त्यापत्तेः । नन्वऽभिव्यक्तिपक्षोऽनुपपन्नः। अभिव्यक्तिर्हि प्रतिबन्धकनिरासेन संस्कारविशेषाऽऽधानेन वा भवति। अत्र च प्रतिबन्धकानुपलम्भाद् यत्किञ्चित्कल्पनेऽपि तन्निवारणे सर्वेषां शब्दानां व्यापकत्वेन सर्वश्रोत्रेष्वव्यवस्थितत्वात् सर्वे सर्वस्य प्रत्यक्षाः स्युः। अतः संस्काराधानपक्षो ग्राह्यः । तत्र कौष्ठ्यवायवः प्रयत्नोत्थापिताश्चेच्छब्दं संस्कुर्युस्तर्हि तस्यैकस्यानवयवस्य व्यापकस्य स्त्रुघ्नस्थकौष्ठ्यवायुभिः संस्कारे पाटलिपुत्रेऽप्युपलम्भापत्तिः । श्रोत्रं चेत् संस्कुर्युस्तर्हि काणादकापिलवैदिकानां मते व्योमाहङ्कारदिगात्मकस्य तस्यापि व्यापकत्वादिधर्मकत्वाद् यत्रकापि संस्कारे सर्वत्र तथात्वात् पूर्वोक्त एव दोष इत्यभिव्यक्तिपक्षोऽनुपपन्न इतिचेन्न । कर्णशष्कुल्यवच्छिन्नस्यैव नभआदेः श्रोत्रत्वेन तस्याः प्रतिशरीरं भेदात् तदवच्छिन्नस्य श्रोत्रस्यापि भिन्नत्वाद् यस्यैव संस्कारस्तत्रैवाभिव्यक्तिरित्यदोषात् । ध्वनीनां च ताल्वादिस्थानविशेषेण विलक्षणसामर्थ्यानामेवोत्पन्नत्वात् तेन तेन ध्वनिना तत्तच्छब्दश्रवणानुगुणसंस्कारस्याधानात् । तत्तच्छब्दस्यैव संस्काराद्वा न सर्वशब्दश्रवणमित्युपपत्तेश्च । तस्मान्नाभिव्यक्तिपक्षे काश्चिदपि दोष इत्युव्यापकत्वमुपपन्नमेव । व्यापकत्वादेव च सूर्यवद्युगपदनेकदेशेषूपलम्भः सूत्र उक्तः । विन्ध्यकामरूपहिमवद्रैवतादिस्थितैः, उद्यन् प्राच्यां, मध्याह्न उपरि, अस्तं यन् प्रतीच्यां भास्वानवलोक्यते । तेषाञ्च प्राच्यादयो भिन्नाः । तत्र सर्वत्र युगपदेव सर्वैरीक्ष्यमाणोऽपि न स भिन्नस्तथा शब्दोऽपीति ॥ नैयायिकान् प्रति [illegible] नानादर्शेषु युगपदुपलभ्यमानं मुखमपि शास्त्रदीपिकायां दृष्टान्तितम् ।तथाच,

वर्णः सर्वत्रैकः, नानादेशेषु युगपदुपलभ्यमानत्वात् । सूर्यवत् । नानादेशोपलभ्यमानमुखत्वव्यंसनुमानादपि तत्सिद्धिः ॥

ननु जैमिनीयरीत्या शब्दनित्यत्वव्यापकत्वे न शक्यवचने। वर्णैक्यसाधकानां हेतूनां शिथिलत्वात् । तथाहि । विमतं देवदत्तशरीरं प्रतिक्षणोत्पादविनाशशालि, प्रतिक्षणमन्यान्यावस्थाकत्वात् । दीपज्वालावत् । प्रतिक्षणमन्यान्यावस्थाकं, स्थूलकालिकविशेषावस्थाभिस्तथात्वेन प्रमितत्वात् । वियद् गच्छज्ज्योतिर्गणवदित्यनुमानाभ्यां परिमाणभेदेन च सिद्धे पुंशरीरस्यान्यान्यत्वे तत्रापि साजात्यमेवाङ्गीकार्यम् । तथाच, सोऽयं देवदत्त इति प्रत्यभिज्ञा साजात्यावलम्बिनी । सजातीयावगाहित्वात् । दीपार्चिःस्रोतोजलवनस्पतिफलौषधादिप्रत्यभिज्ञावदित्यनुमानसिद्धत्वात् सापि सजातीयविषयेति नोक्तदृष्टान्तप्रत्यभिज्ञाभ्यां वर्णैक्यसिद्धिः। नाप्यर्थप्रत्यायकत्वेन। सादृश्यप्रयुक्तैक्यभ्रमादेवार्थप्रत्ययस्यापि सिद्धेः। नच शक्तिग्रहासम्भवः शङ्क्यः । कर्णपथमागतस्य शक्तिग्राहकत्वे बाधकाभावात्। नच व्युत्पन्नाना व्यवहारेत्यादिनोक्तो विरोध एव बाधक इति वाच्यम् । प्रतियोगिभेदेनैकस्मिन्नेव पितृत्वपुत्रत्वभ्रातृत्वपतित्वभृत्यत्ववदेकस्मिञ्छब्देऽपि श्रोतृभेदेन सार्थकत्वानर्थकत्वादेरप्यविरोधात् । नच पाश्चात्यस्य शक्तिग्राहकत्वे मानाभावः । बोधरूपफलादेवानुमेयत्वात्। नचानित्यत्वे आकृतिरूपेणार्थेन सम्बन्धो न शक्यवचन इति वाच्यम् । तस्या अप्यनित्यत्वात् । आकृतिपदेन जातेरभिमतत्वेऽपि द्वादशेऽहनि नामकरणवद् व्यक्त्युत्पत्त्युत्तरं जातिविशिष्टे सम्बन्धकरणेऽपि बाधकाभावात् । एवं निरस्ते नित्यत्वे व्यापकत्वमप्यनवसरेणैव पराहतम् । तद्विचारस्य स्थित्यधीनत्वात् । कण्ठताल्वादिस्थाननिर्देशानुपपत्तेश्च । अतो न जैमिनीयाऽनुसारेण नित्यत्वव्यापकत्वयोः सिद्धिरि-

तिचेत्‌ ॥ अत्रोच्यते ॥ नैवं कुयुक्तिभिर्वर्णस्य नित्यत्वव्यापकत्वे प्रतिक्षेप्तुं शक्ये । उक्तदृष्टान्तादिभिस्तत्सिद्धेरप्रत्यूहत्वात्‌ । पुरुषशरीरक्षणिकत्वसाधकस्य हेतोरुपाहितत्वात्‌। अनित्यत्वजन्यत्वादीनां तत्रोपाधित्वात्‌ । अन्यथा क्षणिकत्वादप्रसक्त्या नित्यद्रव्योच्छेदप्रसङ्गात्‌ । विशेषणभूतैर्नानाज्ञानेच्छाप्रयत्नैर्नानाशब्दैर्नानासंयोगैरात्माकाशपरमाणुमनस्सु नानावस्थानां सिद्धत्वात्‌। तत्रात्मत्वादिवैशिष्ट्येन नित्यत्वाबाधोपगमे तत्रापि पुरुषत्वादिवैशिष्ट्येन स्थिरत्वाबाधस्य शक्यवचनत्वाच्च। अन्यथा निषेकजननसामायिकशरीराभावेन पितृपुत्रादिभावाभावात्‌ तत्र यथेच्छाचारापत्त्या पुत्रासंस्काराद्यापत्त्या वैवाहिकशरीरयोर्नष्टत्वेन स्वपत्नीगमनादावपि व्यभिचारादिप्रसक्त्या च सर्वधर्मोपप्लवव्यवहारलोपयोः प्रसङ्गाच्च। नापि परिमाणभेदनान्यत्वसिद्धिः। भस्त्रावत्‌ संकोचविकाशात्यरूपपरिमाणवत्त्वस्यापि शक्यवचनत्वात्‌ । कर्षणबृंहणचिकित्साभिस्तथा दर्शनात्‌। शब्दे तदभावेन शङ्काया एवानुदयाच्च। नच नित्यप्रलयबोधकपुराणविरोधः शङ्कनीयः।तत्रारम्भारम्भकवादाभावेनोक्तदोषाभावात्‌। परिणामवादे उत्पत्तिप्रलययोर्बहिरन्तर्भावरूपत्वेन कारणान्त कार्यस्य सत्त्वात्‌ कारणस्यैव वा तेन रूपेण सत्त्वाद्वस्तुनाशाभावात्‌। अत एव, आत्मा वै पुत्रनामासि त्वं जीव शरदः शतमिति, स एव भगवान्‌ द्रोणः प्रजारूपेण वर्तत इत्यादिश्रुतिस्मृतयोऽपि सङ्गच्छन्ते । तस्मात्‌ पुरुषे धर्ममात्रभेदेन प्रत्यभिज्ञाया न सजातीयविषयत्वमिति निश्चयः । एवं शब्देऽपि बोध्यम्‌॥

यत्तु शब्दोत्पत्त्यादिक्रमः ॥ शङ्खादिवायुसंयोगान्निमित्तात्‌ शङ्खाद्याकाशसंयोगादसमवायिकारणात्‌ केचन ध्वनय उत्पद्यन्ते, केचन तु ध्वनयो वेण्वादौ पाट्यमाने दलद्वयविभागान्निमित्ताद्दलाकाशसंयोगादसमवायिकारणादुत्पद्यन्ते। वर्णास्तु स्मृतिविक्षेपसहकृतादा-

त्ममनःसंयोगादात्मनि वर्णोच्चारणेच्छायां ततः प्रयत्ने चोत्पन्ने प्रयत्नवदात्मसंयोगात् प्राणादिवायोः कर्म। ततस्तेन कर्मणा ऊर्ध्वं गच्छन् प्राणादिः कण्ठताल्वाद्यभिघातान्निमित्तात् कण्ठाकाशसंयोगाद् असमवायिकारणाद् अकारादिक्षकारान्तानाम् अनुक्तानां चोत्पत्तिं करोतीति कण्ठादिस्थाने ते उत्पद्यन्ते। शब्दश्चाकाशस्यैव गुण इति तत्तदवच्छिन्न आकाश एवोत्पद्यते। उक्तेषु द्विविधेषु ध्वनिषु वर्णेषु चाद्या एव संयोगासमवायिकारणकाः। द्वितीयादयस्तु पूर्वपूर्वशब्दासमवायिकारणकाः। प्रथमतः संयोगाद्विभागाद्वा एकः शब्द उत्पद्यते। स च निमित्तवाय्वाद्यनुसारेण कदम्बगोलकन्यायादशदिक्षु दशशब्दानुत्पादयति। तैश्च प्रत्येकं द्दश दश शब्दा उत्पाद्यन्त इति। वीचीतरङ्गन्याये त्वेकैकशब्दस्यैवाऽऽरम्भ इति। विभुविशेषगुणानामसमवायिकारणप्रादेशिकत्वनियमेनाव्याप्यवृत्तित्वमेषाम्, अग्रिमाग्रिमशब्दनाश्यत्वञ्च। कदम्बमुकुलक्रमेण वीचीतरङ्गक्रमेण वा कर्णशष्कुल्यवच्छिन्ने नभस्युत्पद्यमानः शब्दः श्रोत्रेण प्रत्यासन्नत्वाद् गृह्यते। भेरीशब्द एवाऽयमिति प्रत्यभिज्ञा तु, सोऽयं दीपस्तदेवौषधमित्यादाविव सजातीयत्वपुरस्कारादिति नैयायिकादिभिरुच्यते। तदसङ्गतमेव। अव्याप्यवृत्तित्वार्थमसमवायिप्रादेशिकत्वस्य कदम्बमुकुलादिन्यायाविरुद्धत्वात्। प्रदेशान्तर एव कदम्बमुकुलवीचीतरङ्गयोर्दर्शनात्। किञ्च, कदम्बमुकुलन्यायेन दूरपर्यन्तमुत्पत्तौ तत्तदवान्तरदेशस्थानामश्रवणापत्तिर्यावदन्तमेकैकश्येन दशशब्दारम्भे चाप्रामाणिकानन्तशब्दतत्प्रागभावविरामकल्पनागौरवापत्तिः। वीचीतरङ्गन्यायेन च मन्दोच्चारणेऽपि तारश्रवणापत्तिः। प्रथमवीचीत उत्तरोत्तरं द्वितीयादीनामाधिक्यदर्शनात्। शब्दे च तारत्वातिरिक्तस्याधिक्यस्याऽशक्यवचनत्वात्। बहुदेशव्यापित्वस्य परिमाणप्रसञ्जकत्वेन गुण-

स्वदानिद्रव्यत्वयोरापत्तेश्च । किञ्च, आद्यमध्यमशब्देषु कार्यशब्दनाश्यत्वस्यान्तिमशब्दे च सुन्दोपसुन्दवत् परस्परनाश्यत्वोपान्त्यध्वंसनाश्यत्वयोरन्यतरस्याग्रिमानुत्पादनेन चाऽन्त्यत्वस्य वक्तव्यत्वात् तन्निर्वाहायोत्पादनप्रतिबन्धकादृष्टादेश्च गुरुतराप्रामाणिकानन्तकल्पनापत्तिः । तस्मान्नायं क्रमः । कथं तर्हि शब्दश्रवणमिति चेत । उच्यते । अन्तर्बहिश्च शब्दोत्पत्तौ वायुरेव प्रायशो निमित्तम् । क्वचिद् घर्षणादिनापि ध्वनिदर्शनात् । समवायिनस्तु पञ्चापि भूतानि । स ह्याकाशस्य वैशेषिकोऽन्येषां तु कारणतः प्राप्तत्वात् सामान्यः । एवं सति ध्वनिर्यत्रोत्पद्यते ततः कियद्दूरं स्वभावत एव चतुर्दिक्षु गच्छति विसारित्वात् । तेन निकटस्थाः शृण्वन्ति । मध्यतारादयस्तु वहिर्वायुना नीयन्ते । तृतीयस्कन्धे नेतृत्वं द्रव्यशब्दयोरिति वायोः कर्मलक्षणेनानुवातप्रतिवातश्रवणाश्रवणाभ्यां च तथा निश्चयात् । वायूढः शब्दोऽपि सर्वेषां शब्दानां श्रोत्रमेकायनमिति श्रुतेस्तत्तच्छ्रोत्रैष्वंशतो लीयमान एव गच्छतीति सर्वोत्रैलीनोऽग्रे न श्रूयते । दाह्याभावे वह्नेरिव स्वभावतः कालादिना च तस्य नाशः । एवं भेर्यादिशब्देऽपि तदवगाहिन्येव प्रत्यभिज्ञा, बाधकाभावात् । न तु सजातीयावगाहिनी। प्रमाणाभावात् । ननु विसरणं नाम स्वाश्रयाधिकदेशवृत्तित्वम् । तच्चाकाशीये शब्दे न सम्भवति । आकाशस्य व्यापकत्वात् । नापि भौमादिशब्दे । गुणसत्त्वे द्रव्यसत्त्वस्य नियामकत्वात् । अन्यथा रसादेरप्यतिरेकापत्तेरितिचेन्न । आकाशस्य व्यापकत्वेऽपि तत्तद्देशानामव्यापकत्वेनानुपपत्त्यभावात् । शब्दचैतन्यभास्वररूपगन्धातिरिक्तगुणसत्त्व एव द्रव्यसत्त्वस्य नियामकत्वाङ्गीकारेण भौमादिशब्देऽपि तदभावात् । कल्पनाया दृष्टानुसारित्वाद्यानच शब्दस्य निरवयवत्वाद् गमनासम्भव इति वाच्यम् । अप-

योजकत्वात् । परमाणौ त्वयापि तदङ्गीकारात् । व्यापकत्वस्यैव तत्पानिबन्धकत्वात् । अंशतो नाशदर्शनेन निरवयवत्वस्य विमतिपन्नत्वाच्च । नच सावयवत्वेन स्पर्शवत्त्वेन व्याप्तेः शब्देऽपि स्पर्शवत्त्वापत्तिरिति वाच्यम् । व्याप्तेर्द्रव्यगर्भत्वात् । सावयवद्रव्यस्यैव स्पर्शवत्त्वदर्शनात् । इदमपि गुणत्वमूरीकृत्योक्तम् । द्रव्यत्वाङ्गीकारे तु तत्रापीष्टापत्तिरिति दिक् ॥ तस्माद् ध्वनिरपि घटादिवच्चिरस्थायी वायुना नीयते। स एव मुखादिजन्यो वर्णं व्यञ्जयतीति तस्यैव श्रवणमिति तदैक्यज्ञानस्य न भ्रमत्वमिति जैमिनीयमतस्योपपन्नत्वाद्वर्णादीनां नित्यत्वं सुस्थिरमेव । ततश्च प्रत्यभिज्ञाबलादेव व्यापकत्वेऽपि सिद्धे तदुपलम्भ आदित्यदृष्टान्तोऽपि युक्त एव । तथा मुखदृष्टान्तोऽपि । प्रतिबिम्बानभ्युपगन्तृमते स्वस्थानस्थस्यैव मुखस्य दर्पणपराहतचक्षुषा ग्रहणवदिहापि स्वस्थानस्थवर्णादेर्ध्वनिसंस्कृतश्रोत्रेण ग्रहणस्य सुवचत्वात् । नच व्याकरणे कण्ठताल्वादिस्थाननिर्देशात् परिच्छिन्नत्वं शङ्क्यम् । अशरीरिण्या आकाशवाण्या वाक्ये व्यभिचारात् । नच निर्देशविरोधः शङ्क्यः । व्यापकाऽऽत्मवादिमते शरीरस्यात्मनस्तल्लाभस्थानत्ववत् कण्ठादीनां वर्णाभिव्यक्तिस्थानत्वेनाप्युपपत्तेः ॥

ननु श्रोत्रस्य माप्यप्रकाशकारित्वेन कर्णशष्कुल्यवच्छिन्नस्य तस्य ध्वन्युत्पत्तिदेशाप्राप्त्या कथं देशविशिष्टवर्णग्रहणमिति चेत् ॥ अत्र पार्थसारथिमिश्राः ॥ ध्वनिसामर्थ्यादिति ब्रूमः । ध्वनीनां श्रोत्रदेशमागत्य शब्दं व्यञ्जतां स्वोत्पत्तिदेशाभिव्यक्तशब्दभासनदर्शनेन सामर्थ्याध्यवसायात् । अनिलनादिनोऽपि श्रोत्रगतस्यैव शब्दस्य ग्रहणाचादृशप्रत्ययोपपादने गत्यन्तराभावेन तीव्याभिसाहुः॥

वयं तु— देशप्रतीतिस्तु न तदभिव्यञ्जकध्वनिमात्रसामर्थ्यात् किन्तु ध्वन्युत्पादकशक्तसामर्थ्यात् । नेतृत्वं द्रव्यशब्दयो-

रिति तृतीयस्कन्धे वायोः कार्यलक्षणादनुवातप्रतिवातश्रवणाश्रवणाभ्यां च वायुरेव ध्वनिं नयन् देशमपि प्रत्याययतीति निश्चयादिति वदामः ॥

एवञ्च दिशः स्वातन्त्र्येण श्रोत्रग्राह्यत्वाभावेऽपि शब्दे गृह्यमाणे तद्विशेषणतया दिगपि श्रोत्रेण गृह्यत इति दृष्टबलादङ्गीक्रियते । कालवत् । यथा कालो न स्वातन्त्र्येणेन्द्रियैर्गृह्यते विषयेषु गृह्यमाणेषु तु सर्वैरपीन्द्रियैर्गृह्यते तद्वत् ॥

यत्तु सौगताः— श्रोत्रस्य प्राप्यप्रकाशकत्वमाहुः ॥ तन्न ॥ सन्निकृष्टविप्रकृष्टयोर्युगपदुपलम्भापत्तेः । एवञ्च शब्दाभिव्यञ्जकाध्वनयः श्रोत्रागता गृह्यन्त इति बहुभिरुच्चारणे भूयांसस्ते समायान्तीति शब्दोऽपि महानिवाभासते । न तावता तत्राल्पत्वभूयस्त्वे । तस्य देशज्ञानवद् भ्रमत्वात् । एवमेवोत्पत्तिनाशप्रत्ययोऽपि तदभिव्यञ्जकध्वनिगोचरः प्रत्ययः शब्दे तौ प्रसञ्जयति, न तु तत्र तौ । अनुपपत्तेरुक्तत्वात् । तस्माच्छब्दस्य नित्यत्वं व्यापकत्वं चाव्याहतमेव ॥

ननु व्यापकत्वं तथापि दुर्वचमेव । श्रोत्रसंस्कारपक्षे ध्वनिसंस्कृतश्रोत्राभिव्यक्तशब्दनिष्ठकत्वादीनामिव तद्व्यापकत्वस्यापि श्रोत्रेण ग्रहणे बाधकाभावात् । दृगयोग्याकाशधर्मस्याप्यकाशभूयस्त्वाल्पत्वादेर्दृशा ग्रहणवत् । नच प्रदेशत एवाभिव्यज्यत इति वाच्यम् । तथा सति खण्ड इव श्रूयेत । एवं शब्दसंस्कारपक्षेऽपि बोध्यम् । नच ध्वनिषु तदभिव्यञ्जनसामर्थ्याभावः कल्पनीय इति वाच्यम् ।

तथा सति खण्ड इव श्रूयेत । एवं शब्दसंस्कारपक्षेऽपि बोध्यम् । नच ध्वनिषु तदभिव्यञ्जनसामर्थ्याभावः कल्पनीय इति वाच्यम् । तथा सति परिच्छेदप्रतीतौ भ्रमत्वस्य तज्जनकदोषस्य च कल्पनीयतया अतिगौरवादिप्रसङ्गात् । परिच्छेदाभावे-

ऽपि विनिगमकाभावाच्चेतिचेत्। उच्यते। न दुर्वचम्। प्रादेशमात्रत्वेऽप्यभिविमाने परब्रह्मणीव शब्दब्रह्मण्यपि विरुद्धधर्माश्रयत्वस्य सुघटत्वेन तदंशानां वर्णादीनामपि तथात्वाद् व्यापकत्वपरिच्छिन्नत्वयोरविरोधेनादोषात्। नचांशत्वं बाधकमिति वाच्यम्। आत्मवदुपपत्तेः। एकः शब्दोऽक्षरो नित्यः सर्वव्यापी तथा पुमान्* सोऽप्यंशः सर्वभूतस्य मैत्रेय परमात्मन इति विष्णुपुराणे विभोरपि पुरुषस्य नभस्तलकल्पस्य ब्रह्मांशत्वकथनात्। प्रकृतेऽपि शब्दब्रह्म प्रकृत्य, भूतेषु घोषरूपेण विसेपूर्णेव लक्ष्यते* इति श्रीभागवते कथनात् तदनुभवाच्च सर्वत्र शब्दब्रह्मसत्त्वस्य अबाधितप्रत्यभिज्ञया तदंशभूतवर्णादिसत्त्वस्याबाधितपरिच्छेदप्रतीत्या परिच्छिन्नत्वस्य च प्रत्यक्षत्वसिद्धत्वात्। अतो भाट्टमते आकृतेर्भिन्नाऽभिन्नत्ववद्वर्णानामप्युभयविधत्वे न कोऽपि विवादलेशः॥

ननु पूर्वं मीमांसकमतेन प्रत्यभिज्ञाबलाच्छब्दस्य नित्यत्वादिकमङ्गीकृतं, प्रत्यभिज्ञायास्तदेकविषयत्वं च शब्दस्यार्थप्रत्यायकत्वबलात्। अतो नित्यत्वादिप्रयोजकमर्थप्रत्यायकत्वं वर्णादीनां त्रयाणामुतान्यतरस्येतरस्य वेति विचारणीयम्। तत्र प्राञ्चो वैयाकरणास्तु— न वर्णानाम्। गौरित्युक्ते केवलैर्गकारौकारविसर्जनीयैरर्थाप्रतीतेः। नाऽपि पदवाक्यरूपात् तत्समुदायात्। वर्णानां क्रमिकत्वेन तस्यैवाभावात्। नापि पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहकृतान्तिमवर्णात्। अनेकादृष्टसंस्कारकल्पनागौरवप्रसङ्गात्। अतो वर्णाभिव्यङ्ग्योऽतिरिक्तः स्फोटाख्यः शब्दोऽर्थप्रत्यायकोऽङ्गीकार्यस्तदेव पदवाक्यस्फोटावयवीत्याहुः॥

मीमांसकास्तु— श्रोत्रग्राह्ये वस्तुनि शब्दशब्दप्रयोगाद् गौरित्यत्र गकारौकारविसर्जनीयातिरिक्तस्यान्यस्याश्रवणाद् वर्णा एव शब्द इत्युपवर्षमतमङ्गीकृत्य वर्णातिरिक्तस्य शब्दान्तरस्या-

ऽनुपलम्भाद्वर्णानामनित्यत्वेन क्रमिकत्वे पूर्वपूर्वमित्यस्या ऽर्थप्रत्यायकत्वेनाभिमतस्य स्फोटात्मकशब्दस्याप्यभिव्यक्त्ययोगात् तदाहितसंस्कारकल्पनायाः स्फोटपक्षेऽप्यावश्यकत्वेन प्रत्युत गौरवाधिक्याच्च वर्णा एव शब्दः । तेषां नित्यत्वेऽपि तज्जनितानुभवस्यानित्यत्वेनार्थप्रतीतिस्तु पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतान्तिमवर्णाद्वा स्वारोपितस्वाभिव्यञ्जकध्वनिक्रमशालित्वेन स्मर्यमाणेभ्यो वर्णेभ्यो वेत्याहुः ॥

एवं पूर्वमते न कस्याप्यर्थप्रत्यायकत्वं, द्वितीये च न पदवाक्ययोरिति, तदभावात् त्रयाणां द्वयोर्वा नित्यत्वव्यापकत्वे दुर्वचे एवेति चेद्, अत्र नव्यवैयाकरणाः— न वयं वर्णाभिव्यङ्ग्यं स्फोटं वदामः, किन्तु स्फुटत्यर्थोऽनेनेति व्युत्पत्त्या वाचकं शब्दं स्फोट इति वदामः । स चाबाधितप्रत्यभिज्ञाबलाद् यथा वर्णरूपोऽभ्युपगतस्तथा तदेवेदं पदं, तदेवेदं वाक्यमिति प्रत्यभिज्ञाबलात् पदवाक्यरूपोऽपि । नचेयमौपाधिकी सेति वाच्यम् । घटादिप्रतीतेरपि तथात्वापत्तेः । शब्दे एकार्थबोधकत्ववद् घटादौ सावयवे जलाहरणादिरूपैकार्थजनकत्वस्योपाधेः सत्त्वात् । बोधकत्वस्यैवोपाधित्वे नियामकाभावात् । यत्तु स्थान्यादेशभेदेन द्विविधेषु वर्णेषु केषां वाचकत्वं—स्थानिनामुतादेशानाम् ? इति संशये भवतीत्यादावादेशानां तिबादीनां बहुत्वेन तेषु शक्तिकल्पने गौरवात् । स्थानिभूतलकारनिष्ठैव शक्तिः । नचैवं सति, भू—ल् इत्यतः शाब्दबोधापत्तिः शङ्कनीया । समभिव्याहारस्यापि सहकारित्वात् । अन्यथा तिब्—इत्यतोऽपि स्यादिति दर्शनान्तराभिनिवेशिन आहुः ॥

तदप्यसङ्गतम् ॥ भवतीत्यादौ प्रयोगसमवेतानां तिबादीनामेव कर्त्रादिवाचकत्वं, न तु स्थानिभूतानां लादीनाम् । व्यवहारेण तेष्वेव शक्तेर्ग्राहणात् । स्थानिनो वाचकत्वे अनिष्कृष्टादपि शा-

न्दबोधापत्तेर्वारणाय समभिव्याहारविशेषस्य कारणताया अवश्यवक्तव्यत्वे, तद्धेतोरेवेति न्यायेन समभिव्याहारहेतूनां वर्णानामेव वाचकत्वं लाघवाच्च । एवमादेशानामादेशिस्मारकत्वपक्षेऽपि शक्तिद्वयकल्पनापत्त्या आदेशानां वाचकत्व एव लाघवाच्च । एवमादेशानां वाचकत्वे सिद्धे पदस्याऽपि वाचकत्वं सिद्धमेव । गौरित्यादौ केवलेन विसर्गादिना गवादिरूपाऽर्थावबोधादर्शनात् समुदाय एवार्थबोधानुकूलशक्तिनिश्चयात् । नच वर्णानां वाचकत्वहानिः । प्रत्येकावृत्तिनः समुदायाऽवृत्तित्वनियमेन पदशक्त्यैव तत्सिद्धेः । अत एव प्रकृतिप्रत्ययादावपि व्यासज्यवृत्तिरेव शक्तिर्न तु प्रत्येकवर्णपर्याप्तेति युज्यते । एवं वाक्याऽर्थबोधाऽनुकूला शक्तिरपि पदसमुदायरूपे वाक्य एव निश्चेया। वाक्यादेव तादृशाऽन्वयोपस्थितेः । नच वाक्यानां तदर्थानामन्वयानां चापूर्वत्वाच्छक्तिग्रहासम्भवेन वाक्यार्थस्यान्वयस्य लक्ष्यत्वमेव साधीय इति वाच्यम् । सम्पूर्णवाक्यश्रवणात् पूर्वमन्वयानुपस्थितेस्तत्र लक्षणाया अपि ज्ञातुमशक्यत्वेन तादृशपदानुपूर्वीश्रवणोत्तरं तत्तल्लक्षणाया इव शक्तेरपि सुग्रहत्वेन तौल्यात् । नच हरिद्रायां नद्यां घोष इति वाक्ये श्रुते नदीविशेषस्य हरिद्रेत्याख्यामजानतोऽपि नदीपदसमभिव्याहारात् । तदानीमेव हरिद्रापदस्य नदीविशेषे शक्तिग्रहो नदीलिङ्गात् तत्सम्बन्धित्वेन तीरप्रत्ययश्च द्रागेव जायते, एवमन्यप्रत्ययोऽपि भविष्यतीति वाच्यम् । तादृशपदसमभिव्याहारेण तदानीमेव वाक्यशक्तिज्ञानस्य तेनान्वयज्ञानस्य च तद्वदेव शक्यवचनत्वेन तौल्यात् । अनुपपत्त्यभावेन लक्षणाया अशक्यवचनत्वाच्च । यदि च पदानामन्विताभिधायित्वं स्वीकृत्य पदशक्तिः पदार्थांशे ज्ञाता, अन्वयांशे चाज्ञातैवोपयुज्यत इति कुब्जशक्तिवादोऽङ्गीक्रियते तदापि वाक्यशक्तिरज्ञाता पदशक्तिश्च ज्ञातोपयु-

ज्यत इत्यपि वक्तुं शक्यत्वेन समभिव्याहारादेव शाब्दबोधदर्शनेन च तस्याप्रयोजकत्वात्। कुब्जशक्त्यनङ्गीकर्तृमाध्वमते च घटादिपदमितरान्विते घटादौ शक्तमिति व्युत्पन्नस्य घटमानयेत्यादौ घटपदाऽम्पदयोः प्रत्येकं गृहीतशक्तिकस्य तादृशाऽनुपूर्वीज्ञानतात्पर्यज्ञानादिमतः समभिव्याहारकारणताया अज्ञानेऽपि घटकर्मकमानयनमिति शाब्दबोधापत्तिः। समभिव्याहारस्य कारणताऽनङ्गीकारात्। न चेष्टापत्तिः कर्तुं शक्या। विशेषणविशेष्यभावे विनिगमनाविरहात् सामान्यत इतरान्वितो घट इतरान्वितं कर्मत्वमित्येवं ज्ञानापत्तेश्च। अथ तादृशविशेषान्वयबोधं प्रति पदान्तरसमभिव्याहारस्य घटपदोत्तरं द्वितीयायास्ततो धातोस्तत आख्यातस्येत्यादिरूपस्यापि कारणताङ्गीकृता चेत् सिद्धैव वाक्ये शक्तिः। पदसमुदायस्यैव वाक्यत्वात्, तन्निष्ठबोधकारणताया एव च शक्तित्वात्। एतेनैव कार्यान्विते पदानां शक्तिरित्यप्यपास्तम्॥

यत्तु नृसिंहाश्रमाः— वृत्तिं विना वाक्यार्थस्य शाब्दबोधविषयत्वासम्भवात् तद्विषया वृत्तिः स्वीकार्या। तस्याश्चातिरिक्तत्वे गौरवात् क्लृप्तपदार्थशक्तिरेव तद्विषयिणी कल्प्यते। पदानामन्वयसामान्ये शक्तौ सामान्यशक्तेर्विशेषमविषयीकृत्य अपर्यवसानात्तत्तत्पदसामान्यशक्तिभिरेव समभिव्याहृतपदोपस्थापितपदार्थविशेषनिरूतोऽन्वयविशेषो विषयीभविष्यतीत्येकशक्तिकल्पनालाघवात्। एकपदप्रयोगेऽप्यन्वयविशेषस्य नियमेन जिज्ञासादर्शनात् तस्याश्च सामान्यज्ञानपूर्वकत्वात् तस्य शब्दादन्यतोऽसम्भवादेष्वेवान्विताभिधायित्वनिश्चयाच्चेत्याहुः॥ तन्न॥ दृष्टे जम्बीरफलाऽऽदौ रसविशेषजिज्ञासावत् सामान्याऽज्ञानेऽप्यन्वयविशेषजिज्ञासोपपत्तेः। नचैवं सति तद्वदेव जिज्ञासाया अवाप्यनियमः स्यादिति वाच्यम्। इष्टापत्तेः। जिज्ञासानुरोधेनान्वयस्य पदशक्य-

त्वाङ्गीकारे जिज्ञासाया विशेषविषयत्वेनान्वयस्यापि विशेषरूपेण गम्यत्वापत्तेश्च । ज्ञानेच्छयोः समानप्रकारकत्वेन हेतुहेतुमद्भावात् । अन्यथा द्रव्यत्वादिरूपेण ज्ञाते वस्तुनि सुवर्णत्वादिनाऽज्ञातेन रूपेणेच्छापत्तेः । नच येन रूपेण ज्ञानं वृत्तं तेन रूपेण सिद्धिसत्त्वाद् येन च रूपेण ज्ञानमेव नास्ति तेन रूपेण कारणाभावाच्चेच्छाया असम्भवेन जिज्ञासोच्छेदापत्तिरिति वाच्यम् । सिद्धत्वज्ञानस्यैव प्रतिबन्धकत्वेन तस्याभावादेव जिज्ञासोपपत्तेः । तस्मान्नान्वयः पदानामर्थः ॥

यत्तु, पदार्थाः पदार्थस्मृतिर्वा शाब्दबोधे हेतुर्न तु पदज्ञानं वाक्यज्ञानं वेति मतम् ॥ तन्न ॥ चक्षुरादिना पदार्थोपस्थितावपि शाब्दबोधापत्तेः । शाब्देनाऽयमर्थो बुद्ध इत्यनुभवविरोधापत्तेश्च । तस्माद्वाक्यमेव पदसमुदायात्मकमन्वयस्य वाचकम् । यद्वा । पदं वाक्यं चाखण्डमेव, एकः पट इतिवदेकं पदं वाक्यं चेत्यबाधितप्रतीतेः । तत्र वर्णपदयोः प्रतीतिस्तु ऋलृएओमभृतिवर्णेष्ववयवप्रतीतिवद् भ्रान्ता । नच ककारादिकं शृणोमीत्यादिप्रतीतिविरोधः । तत्तद्वर्णोत्पादकत्वादिनाऽभिमतेन वायुसंयोगविशेषेण तत्तवाखण्डपदवाक्ययोर्व्यञ्जनेनाविरोधात् । तत्र ककारादिप्रत्ययस्य वर्णेषु तारत्वादिप्रत्ययवद् भ्रान्तत्वात् । अन्यथा तत्राऽनन्तवर्णादिकल्पने गौरवप्रसङ्गात् । यत्तु आकाङ्क्षादिसहकारेण पदान्येव वाक्यार्थबोधं जनयन्तीति मतम् । तन्न । गुरुभूताकाङ्क्षायोग्यतादिज्ञानस्य कारणत्वे मानाभावात् । नचाकाङ्क्षाज्ञानस्य अकारणत्वे, घटः कर्मत्वमित्यतोऽपि बोधापत्तिः । अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ राजपदस्य पुरुषपदेन सहान्वयाऽनुभवाकाङ्क्षाणामपि पुत्रपदेनान्वयापत्तिरिति वाच्यम् । घटः कर्मत्वमित्यादौ शक्तिग्रहणत्वे बोधस्येष्टत्वात् । विपरीतव्युत्पन्नस्येव

दुष्टत्वात् । समीचस्तु शक्तिग्रहाभावादेव वारणसम्भवात् । अय-मेतीत्यादौ तु तात्पर्यज्ञानाभावे बोधाभावादेव न पुत्रेणान्वयः । तात्पर्यज्ञाने तु तत एव निवृत्तिः । तस्य तत्राप्यावश्यकत्वात् । तद्घटिताया आकाङ्क्षाया दुर्वचत्वात् । एतस्यैवं ज्ञानं भवत्वि-त्यभिसन्धायैव परस्परसंसर्गयोग्यार्थवाचकपदप्रयोगात् । अथ घट-मानयेत्यादौ घटकर्मकानयनबोधकपदसमभिव्याहारस्यैव कारण-तादर्शनात् स एवाऽऽकाङ्क्षा । तात्पर्यज्ञानं तु हेत्वन्तरमित्युपेयते, तदा तु समभिव्याहारस्य वाक्यधर्मत्वात् पदविशेषसमभिव्या-हारधर्मकशक्यगतं बोधनसामर्थ्यमेवाकाङ्क्षेति सिद्धं वाक्यस्यैव वाक्यार्थबोधजनकत्वम् । परिभाषामात्रं परमवशिष्यते । तदपि तस्या आकाङ्क्षाया वृत्तित्वोक्तौ न विरुद्ध्यते । अत एतदनुरोधेना-ऽन्वयस्य शक्यत्वनिरसनमयुक्तमेव । नन्वस्त्वेवं, तथापि वाक्यनिष्ठ-बोधकत्वस्य शक्तित्वे किं मानमिति चेत् । उच्यते । विषयता सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तेनैव सम्बन्धेन वृत्तिजन्योप-स्थितेर्हेतुतैव मानम् । अन्यथा घटमानयेत्यत्र घटपदशक्यज्ञान-वतोऽपि तज्ज्ञानवत इव बोधापत्त्या घटशाब्दबोधे घटार्थकपद-वृत्तिजन्यज्ञानत्वेन कारणता वाच्येत्यर्थभेदेनाऽनन्तकोटिकार्यकार-णभावकल्पनागौरवापत्तेः । किञ्च । वाक्यनिष्ठबोधकत्वस्याशक्ति-त्वे पदनिष्ठबोधकत्वस्याप्यशक्तित्वं सुवचमिति वाक्यार्थवत् पदा-र्थस्याप्यशक्यत्वापत्तिः । तथा सति शब्दस्यार्थेन सम्बन्ध एव हीयेत । तस्माद्वाक्यस्य वाचकत्वं निर्बाधमिति - वर्णादयस्त्रयोऽपि वाचका इत्याहुः । तेन त्रयाणां नित्यत्वादिकमपि निर्बाधमेव । ननु पदवाक्ययोर्वर्णातिरेकसिद्धौ पदादीनां स्वरूपेण वाचकत्व-सिद्धिर्न तु तदभावे । अतिरेकस्तु न प्रत्यभिज्ञामात्रेण सिद्ध्यति । तस्या एकार्थबोधकत्वोपाधिकृतत्वात् । नचात्र मानाभावः । तत्रास-

करवालकुरुभवादिपदेष्ववयवार्थस्य भिन्नस्य स्फूर्तौ पदभेदस्फूर्तेः । तदभावे च पदैक्यस्फूर्तेस्तस्योपाधित्वनिश्चयात् । अन्यथा पदभेदपदैक्यस्फूर्त्यनापत्तेः । नच घटादिमलभिन्नाया औपाधिकत्वापत्तिः । तत्रैकार्थजनकत्वेऽप्यवयवभेदेन भिन्नार्थजनकत्वाभावाद् घटभेदस्फूर्त्यभावेनैकार्थजनकस्योपाधिताया वक्तुमशक्यत्वात् । एवं सिद्ध एकार्थबोधकस्यस्योपाधित्वे मलभिन्नया पदवाक्ययोर्वर्णादतिरेकसाधनं वैयाकरणानामसमञ्जसमेवेति तन्नित्यत्वादिकमपि तथेतिचेन्न । पर्यायाणामेकार्थबोधकत्वेऽपि पदैक्यबुद्ध्यभावेन तस्योपाधिताया वक्तुमशक्यत्वात् । एवं भिन्नार्थबोधकत्वस्यापि न पदभेदधीजनकत्वम् । नानार्थस्थले व्यभिचारात् । अतः मलभिन्नाया अतिरेकसाधकत्वे न कोऽपि दोषः । तर्हि कथं भेदस्फूर्तिरितिचेत् । उच्यते ।पदानामनन्तरूपत्वात्तानि विकारवन्ति पदरूपाण्यन्यान्येव नानाभोगभोक्तृयोगिकायव्यूहवत्। तानि च मयोस्तृप्रभृतीनामिच्छाविशेषादिना व्युत्पत्तिविशेषस्फूर्तौ प्रतिभान्तीति तत्सहकृतात् स्वरूपादेवेति बुद्ध्यस्व। अत एव भट्टवार्तिकेऽपि—

पदाऽवधारणोपायान् बहूनिच्छन्ति सूरयः ।

क्रमन्यूनातिरिक्तत्वस्वरवाक्यश्रुतिस्मृती।रिति प्राथमिकप्रथमपादे वाक्याधिकरणे भेदाऽवधारणोपाया उक्ताः । ईदृशा च प्रयोजनं श्लेषः । वेदे परोक्षवादार्थं लोके चमत्कारविशेषाद्यर्थं च तस्यावश्यकत्वात् । प्रजायेयेतीच्छया रूपसृष्टाविव नामसृष्टावपि लीलार्थं वैचित्र्याय तस्यापेक्षणात् । अतो न काप्यनुपपत्तिः । एवं वाक्यविशेषेष्वपि विकारवत्त्वमूहनीयम् । नन्वस्त्वेवं पदवाक्ययोरतिरेकस्तथापि न त्रयाणां वाचकत्वम् । पदैः पदार्थोपस्थापने वाक्यार्थत्वेनाभिमतस्यान्वयस्य संसर्गमर्यादया पदैरेव भानसम्भ-

वेन वाक्यानां वाचकत्वकल्पनस्याप्रयोजकत्वादिति चेन्न । संसर्गस्य समभिव्याहारविशेषेण भानात्तस्यैव वाक्यत्वात् तेन भाने वाक्य एव शक्तेः पर्यवसानस्य वैयाकरणैरेवोपपादितत्वात् । नापि पदोपस्थापितपदार्थानामेव करणत्वं साधीयः । सम्पूर्णवाक्यश्रवणोत्तरं जायमानस्य बोधस्य पूर्वपदानां नष्टत्वेन निरासपक्षे व्यञ्जकनाशात्तिरोहितत्वेन चोपस्थापकाभावात् पदार्थानुपस्थितावनुत्पत्तिप्रसङ्गात् । अविद्यमानानां प्रकारान्तरेण बोधकत्वस्याप्रामाणिकत्वात् । न च पूर्वपदानां निवृत्तत्वेऽपि संस्कारेण तेषामुपस्थितौ तदुपस्थापितानां करणत्वमिति युक्तम् । गौरवात् । वाक्यार्थबोधस्याशाब्दत्वापत्तेः । चाक्षुषादिपदवच्छाब्दपदस्याऽपि करणार्थकपदप्रकृतिकत्वेन तत्समाख्याविरोधापत्तेश्च । नापि वृत्तिमत्पदज्ञानमेव करणमिति युक्तम् । एवमप्यशाब्दत्वस्यापत्तेः । नच वाक्यज्ञानकरणत्वपक्षेऽप्ययं दोष इति वाच्यम् । ज्ञायमानवाक्यस्यैव करणत्वाङ्गीकारात् । नच मौनिश्लोकादौ व्यभिचार इति शङ्क्यम् । तत्रापि लिप्यादिना ज्ञायमानस्य तस्यैव करणत्वात् । अन्यथा श्रवणाग्राह्यत्वेन तत्र शाब्दबुद्धेरप्यनुत्पत्तिप्रसङ्गात् । ज्ञानात्तस्य चिरस्थायित्वोपगमेन तस्य करणत्वे बाधकाभावाच्च । नाप्यन्वये शक्तिरिति युक्तम् । कल्पनागौरवात् । एकस्यापि पदस्य श्रवणेऽन्वयबोधापत्तेर्गौरश्वः पुरुषो हस्तीत्यादावपि तदापत्तेश्च । समभिव्याहारविशेषस्याऽपि कारणत्वे वाक्य एव शक्तिपर्यवसानाच्च । एकशक्तिपक्षेऽपि अभ्युपगन्तृणामन्विते शक्तिरित्यादिवाक्याच्चेत्तस्या ग्रहणं तदा तद्वाक्यार्थं विचारयतो जातस्य बोधस्य भ्रमत्वापत्तिः । सर्वेषामन्विते शक्तौ अन्वितपदस्याप्यन्विते स्वार्थे शक्तेरेकत्वेन आत्माश्रयानवस्थान्यतरापत्त्या तदर्थनिश्चयेन तत्प्रामाण्याऽवधारणात् । ततश्चान्विते शक्ति

रिति वाक्यात्त्वच्छक्तिग्रहस्य दुरतिक्रान्तत्वाज्जन्त्वितशक्त्यापत्तिः। केषांचि-दन्विते शक्तौ अन्विताशक्तपदघटितवाक्ये तदन्वयबोधकाभावेन तस्यानन्वितप्रतीत्यापत्तिः। तदन्वितप्रतीतौ हेत्वन्तरस्य वक्तव्य-त्वे तेनैव सर्वत्र निर्वाहादन्विते शक्त्यसिद्धिश्च। व्यवहारेण शक्ति-ग्रहे च तस्य सर्वसाधारणत्वात् सर्वेषामेव तत्र शक्तिग्रहेण विवादानुदयप्रसङ्गः। व्यवहारस्य वाक्यमूलकत्वेन तत्रैव शक्तिप-र्यवसानं च। अतः सर्वपक्षाणामनुपपन्नत्वाचदभ्युपगमे वाक्या-र्थसमाख्याविरोधाद्वाक्यरूपाणां मन्त्रप्रकरणशास्त्राणामनर्थकत्वप्र-सङ्गाच्च वाक्यमेव वाचकम्। एतावान् परं विशेषः। पदादिभिः स्वार्थबोधजनने शक्तिस्मृतिरभ्युपायः। वाक्येन शाब्दबोधजनने तु तदवयवभूतपदजन्या पदार्थस्मृतिः सहकारिणी। एवं महा-वाक्येऽवान्तरवाक्यजन्या तदर्थस्मृतिरपीति। नच महावाक्येषु यस्मिंश्चित् पदविस्मरणे वाक्यार्थबोधो न स्यात् अभ्युपायाभावा-दिति वाच्यम्। इष्टत्वात्। विवक्षितशाब्दबोधस्य तदा अभावात्। नच वाचकत्वस्य ज्ञातस्यैव शाब्दबोधजनकत्वेन वाक्यानां चा-नन्त्यात् तच्छक्तिग्राहकानुशासनकोशाद्यभावेन तद्ग्रहो दुर्लभः। तदभावे च तेन शाब्दबोधाभावाद्वाचकत्वासिद्धिरिति वाच्यम्। उक्तरीत्या वाक्यस्य संसर्गवाचकत्वे एकत्र निश्चिते वाक्यप्रवाह-स्य संसर्गप्रवाहवाचकत्वमिति ज्ञानस्य सुलभत्वात्। समाननाम-रूपत्वेन सामर्थ्यसामान्यस्य तत्र निश्चयात्। पदादाववयवभेदेन भिन्नत्वेऽपि तथा दर्शनात्। वाक्यस्य पदान्तरप्रवेशेनेव अधिक-संसर्गान्तरप्रवेशेन वाक्यार्थरूपसंसर्गस्य भेदेऽपि वाक्यत्वसंसर्ग-त्वयोः स्वरूपयोस्ततोऽनपायात्। किञ्च। तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकान्वितेति कोशेनोभयत्र वाक्यपदशक्तिग्राहणात्। कारकान्वितक्रियापदविशिष्टेऽवयविनि वाक्यपदशक्तौ निश्चितायां

यथा वाक्यपदश्रवणे तादृक् पदविशिष्टवाक्यस्वरूपस्फूर्तिस्तथा तादृशवाक्यश्रवणे तत्स्वरूपमहिम्ना तच्छरीरप्रविष्टस्यान्वयस्यापि स्फूर्तिः परम्परया वाक्यपदशक्तिज्ञानादपि सुलभा । समभिव्याहारविशेषाच्च । पदविशिष्टतद्विशेषाच्च तद्विशेषस्य ज्ञानमिति न काचिदनुपपत्तिः । अत एव व्युत्पित्सवो बाला एकत्र क्रियाकारकान्वयमवगत्यान्यत्रापि तथा प्रतियन्ति । व्युत्पन्नाश्च श्रुतमात्रेण वाक्यादयमर्थोऽवगत इति प्रतियन्ति, वदन्ति च तथेति युज्यते । पदसमूहात्मके तस्मिन् कोशाग्ज्ञाते श्रुते च सर्वेषामेव आकाङ्क्षाराहित्यात् ततः पदार्थमात्रबोधः । यथा दशदाडिमानीत्यादौ । नच वाक्यकरणपक्षे वाक्याधिकरणविरोधः शङ्क्यः। तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वादिति तदीयासिद्धान्तसूत्रस्य तद्भूतानां वाक्यावयवभूतानां पदानां क्रियार्थेन पदेन समाम्नायः समभिव्याहारो वाक्यरूपः, वाचक इति दोषः । तत्र हेतुः— अर्थस्य वाक्यार्थस्य तन्निमित्तत्वात् समभिव्याहारनिमित्तत्वादिसपि व्याख्यातुं शक्यत्वात् । अतस्त्रयाणां वाचकत्वं सूपपन्नम् । एवं त्रयाणां वाचकत्वेऽपि तदर्थबोधानुकूला शक्तिस्तेषु तेष्वेवेति पदाद्यवयवभूतानां वर्णानामनर्थकत्वाद्गौणमुख्यभेदेन वर्णानामनन्तरूपत्वमपि सिद्धं बोध्यम् । नच प्रत्येकावृत्तिनः समुदायाऽवृत्तित्वनियमात् पदानामप्यवाचकत्वापत्तिः । हरिद्राचूर्णयोः प्रत्येकावृत्तिनः शोणत्वस्य तत्समुदाये कुङ्कुमे, धान्याद्यवृत्तिनो महत्त्वस्य धान्यादिराशौ च दर्शनेन नियमस्याप्रयोजकत्वात् । नचैवं वर्णानित्यत्वापत्तिः । पदानां बोधकत्वेन नित्यत्वे सिद्धे तदवयवनित्यत्वस्य तत एव सिद्धेः । ननु, पदे वर्णा न विद्यन्ते वर्णेष्ववयवा न च * वाक्यात् पदानामसत्त्वं प्रविवेको न कश्चनेति वाक्यपदीयादखण्डस्फोटपक्षे पदे वर्णा एव न सन्तीति यथाऽयं

विभाग इतिचेन्न । ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्ब- ले * देवदत्तादयो वाक्ये तथैव स्युरनर्थका इति वदता वाक्ये पदानां सार्थकत्वेनासत्त्वस्य बोधनात् पदे सार्थका न विद्यन्त इत्यर्थस्यापि वक्तुं शक्यत्वात् । सर्वथा असत्त्वाङ्गीकारे वर्णव्य- ञ्जकवायुसंयोगादेर्वर्णातिरिक्तस्फोटव्यञ्जकत्वस्य वर्णप्रतीतेर्भ्रम- त्वस्य वर्णापलापस्येत्याद्यप्रामाणिकानेककल्पनापत्तेः । कृपो रो ल इत्यत्र पाणिनिना ऋवर्णावयवत्वेन रेफाङ्गीकारात्तद्विरोधाप- त्तेः । माण्डूक्यादावोङ्कारासरे अकारादिमात्रारूपावयवानां श्रुत्यै- वाङ्गीकारात्तद्विरोधापत्तेश्च । ओमित्येकाक्षरं ब्रह्मेत्यत्रानङ्गीकारेण विरुद्धधर्माश्रयत्वस्य बोधनाच्च नोभयरूपत्वानुपपत्तिः । नचोपा- सनार्थमवयवोक्तिरिति वाच्यम् । तथाऽपि कल्पनोपदेशत्वाभावा- दनुभूयमानत्वान्माण्डूक्ये वेदनस्यैवोक्तत्वात् तत्प्रतीतौ भ्रमत्वक- ल्पनस्य गुरुत्वाप्रामाणिकत्वाभ्यां च तद्बाधात् । ऌकारादौ शिक्षायामवयवानङ्गीकारोऽप्येतेनैव व्याख्यातः। एवं पदे, घृणि- रिति द्वे अक्षरे इत्यादिश्रुत्या, तस्मादहमिति सर्वाभिधानं, तस्या- दित्यमकार इति श्रुतौ कारप्रत्ययेनाप्याद्यावयवे वर्णत्वबोधनेन चावयवात्मकास्ते ज्ञापिता बोध्याः । एवं कवतीषु रथन्तरं गाय- तीति श्रुतेर्नृसिंहमन्त्रराजोद्धारे उग्रं प्रथमं स्थानं जानीयादित्या- दितापनीयश्रुतेश्च वाक्येऽपि वर्णपदयोरवयवत्वं बोध्यम् । अतो- ऽखण्डत्वमवयवैकल्याभावाभिप्रायकमेव माचाम् । तेनैकं पदमि- त्यस्याः प्रतीतेर्हस्तीतिवद्विशिष्टबुद्धित्वात् । समुदायपक्षेऽपि तस्या- तिरिक्तत्वाच्च भ्रान्तत्वम् । वस्तुतस्तु, अइउएओ—इत्यादौ पदबु- द्ध्युदयान्न समूहस्य पदत्वं, किन्तु विशिष्टस्यैव तदवयवाश्च ते अन- र्थका एव । अन्यथा वर्णपदाभ्यां युगपत्क्रमेण वा स्वस्वार्थबोधने शाब्दबोधदौर्घट्यम् । नैराकाङ्क्ष्याद्विवक्षितार्थाबोधव्यवहाररोधौ

चापद्येयाताम् । नच तेष्वपि वैयाकरणादिभिर्वाचकत्वस्याङ्गीकाराद्नानर्थकत्वमिति वाच्यम् । शक्तेर्व्यासज्यवृत्तित्वाङ्गीकारेण प्रत्येकमबोधकत्वेन गौणत्वानपायात् । नच तद्वत् केवलानामनर्थकत्वं शङ्क्यम् । एकाक्षरकोशे तदर्थकथनात् । नच तेषां सुबन्तत्वेन पदत्वात् तत्प्रयुक्तमेवार्थवत्त्वमिति शङ्क्यम् । एकाक्षरकोशसमाख्याविरोधात् । सम्बुद्ध्यन्तेषु तेषु समुदायलक्षणस्य पदत्वस्याभावेन पदावयवरूपत्वाभावेन च केवलत्वानपायाच्च । एवं सिद्धे द्वैविध्ये पदानामनन्तरूपत्वादनारब्धत्वाच्च तदवयवभूतानां वर्णानामनन्तरूपत्वं निर्बाधमेवेति तेषां गौणमुख्यभावोऽप्युपपन्न एव । एवं पदवाक्ययोरपि बोध्यम् । नन्वस्तु वर्णेषु तथात्वम् । न तु पदवाक्ययोरपि । वाक्यावयवभूतानामपि पदानां वाचकत्वस्यावश्यकत्वेन गौणत्वस्याशक्यवचनत्वात् । अन्यथा वर्णवत् पदेष्वपि सङ्केतग्रहस्यानवश्यकत्वात् विनापि वाक्यार्थबोधापत्तेः । नच तेषु स्मारकत्वाङ्गीकारान्न दोष इति युक्तम् । अतिरिक्तशक्तिकल्पनागौरवप्रसङ्गात् । एवं महावाक्यावयवभूतवाक्यानामपि वाचकत्वमावश्यकमेव । अन्यथा अङ्गाङ्गिभावदौर्घट्यप्रसङ्गात् । तदभावे महावाक्यस्याप्यबोधकताप्रसङ्गाच्चेतिचेन्न । अबाधितया परिच्छिन्नत्वप्रतीत्या वर्णवत्पदेष्वपि रूपभेदसिद्धौ स्वतन्त्रपदसादृश्यस्यापि सिद्धेस्तन्महिम्नैवार्थस्मरणेन शक्त्यन्तरकल्पनागौरवाभावात् । एवं सङ्केतग्रहस्यापि सहकारित्वसिद्धेश्च । अन्यथा युगपद् वृत्तिद्वयापत्तेः ॥

नन्विदमसङ्गतम् । वक्त्रा वाक्यार्थं बोधयितुं वाचकानामेव प्रयुज्यमानत्वादितिचेन्न । तेषां निराकाङ्क्षाणां प्रयोगे स्वार्थं प्रतिपाद्य कृतार्थत्वाद् गौरश्वः पुरुषो हस्तीत्यादाविव तैर्वाक्यार्थबोधानुत्पत्तिप्रसङ्गात् । प्रकृतेः स्वार्थं प्रतिपाद्य तथात्वे प्रत्ययानपेक्ष-

णात् तयोरेकार्थवाचकत्वभङ्गप्रसङ्गात् प्रसयाप्रयोगप्रसङ्गाच्च। आकाङ्क्षादिमता प्रयोगे च स्मारकत्वस्यैव सिद्धेः। वक्ता स्वबुद्धिकल्पितस्य संसर्गस्य बोधनार्थमर्थस्मरणे तेषां शब्दपूर्वकमेव स्मृतावारोहेण स्मारकाणामेव पदानां प्रयोगात्। घटपदेन स्वार्थस्मारिते तन्निरूपितकर्मत्वबोधकाद्वितीयाया, धातुपदेन स्मारिते तादृगाख्यातस्य च प्रयोगः क्रियत इत्यस्यानुभवसिद्धत्वेन तत्र मानान्तरानपेक्षणात्। अतो न पदानां गौणत्वासिद्धिः। नापि वाक्यानां महावाक्यस्थानामवान्तराणां तेषां श्रवणदशायां स्वार्थं प्रतिपाद्य कृतार्थानामप्यङ्गाङ्गिभावाद्यपेक्षायां स्वार्थस्मारकतयैव बुद्धावारोहात्। नच लौकिकवाक्येषु पदानुपूर्वीनानात्वेन तदर्थस्य संसर्गस्यापूर्वत्वेन बुद्ध्या रचनां कृत्वैव तादृशानुपूर्वीनिर्माणेन चाऽनित्यत्वस्य दृष्टत्वात् प्रतिज्ञाहानिः। व्यवहारे वेदापेक्षया तेषां हीनत्वाय तेष्वनित्यत्वस्येष्टत्वेऽपि वस्तुतो बुद्ध्या रचनां कृत्वैवोच्चारणदर्शनाच्च। तेषां ज्ञानेनैवोत्पत्तिस्थिती निश्चीयेते इति सर्वप्रतीतिनाश एवानुपूर्वीनाशः। ज्ञानस्य चिरस्थायित्वमादौ व्युत्पादितमेवेति तेषामपि त्रिक्षणाऽवस्थायित्वानङ्गीकारेण अदोषात्। रूपसृष्टिमध्यपातिना क्रियात इव नामसृष्ट्यन्तःपातिनां ज्ञानतश्चिरकालस्थितेरिष्टत्वात्। काव्यादीनामन्येषां च वाक्यानां तद्विषयकप्रतीत्यादिविलय एव विलय उपचारात्। अन्यथा स एवायं श्लोक इत्यादिप्रतीतिबाधापत्तेः। नचेयं साजात्यादिति वाच्यम्। तथा सति तत्प्रतीत्यापत्तेः। तस्य वाक्यस्य नष्टत्वेन पुनः कथनेऽनुकरोतीति प्रतीत्यापत्तेः। राजवाक्यानुवादकदूतादेरनुकरणप्रयुक्तदण्डाद्यापत्तेश्च। पूर्वोक्तवर्णाद्यनुभवविरोधापत्तेश्च। वैदिकाना तु ततोऽपि चिरकालस्थायित्वम्। महर्षीणा संस्कारस्य महाप्रलयपर्यन्तमवस्थानात्। तदुत्तर तु भगवत्येव

निःश्वसितरूपेण स्थितिः । वस्तुतस्तु अस्मदादिमुखेन क्रीडार्थं भगवानेव वाक्यं वदतीति सर्ववाक्यानि भगवद्वाक्यत्वाद्वेदतुल्यान्येवेत्यपि, स एष जीव इत्यत्रैकादशस्कन्धे सिद्धमिति तस्य नित्यत्वे कोऽपि न संदेहः। नन्वेवं सति वाक्येषु वेदवन्निर्दुष्टत्वं स्यात् । तथा सति साकाङ्क्षयुक्तानाकाङ्क्षायुक्तादिविभागोऽपि न स्यादितिचेन्न। रूपसृष्टौ योग्यावयवैरेव पदार्थनिर्माणे प्राचीननिर्मातृव्यवहारस्येव नामसृष्टौ वाक्यार्थयोग्यावयवैरेव वाक्यनिर्माणेऽपि प्राचीनवक्तृव्यवहारस्य नियामकत्वात् तदनादरे घोटकशृङ्गनिर्माणवदनाकाङ्क्षादिवाक्यनिर्माणे उपालम्भाच्च व्यवहारार्थं तस्यावश्यकत्वात् । अत एवार्थादिधर्मस्य योग्यत्वादेस्तत्रारोपो वक्ष्यमाणवृत्तिभेदश्च युज्यते। अन्यथा विवक्षितार्थप्रतीतिबाधापत्तेः । नच प्रमाणाप्रमाणविभागभङ्गापत्तिः। तस्यापि व्यवहारार्थमावश्यकत्वात् । अन्यथा तद्भङ्गापत्तेः । वस्तुतस्तु सरस्वत्याः सर्वतोमुखत्वादर्थस्य भगवद्रूपत्वाद्दुर्घटपदवाक्यैः सर्वैरेव भगवन्तं वदतीति न कस्याप्यप्रामाण्यम्। ननु तथापि पुरुषाणां भ्रमप्रमादविप्रलिप्साकरणापाटवादिदोषवत्त्वात् तत्सम्बन्धेन लौकिकवाक्येष्वप्रामाण्यमितिचेन्न। तस्यारोपितत्वेन शब्दाऽदूषकत्वात् । फलाभावे अवादेऽतिवादे अन्यथावादे च पुरुष एव दोषात्। अतो न काचिदनुपपत्तिः। तस्मान्निर्बाधं नित्यत्वमनन्तरूपत्वं च। किञ्च। वेदे स्ववयवभूतानां वाचकत्वमपि परस्पराविरोधेन सर्वेषां भगवदर्थकत्वात् । नच शाब्दबोधे तदनुपयोगात् तथाभ्युपगमस्य वैयर्थ्यं शङ्क्यम्। अदृष्टार्थं तथाङ्गीकारात्। नच प्रमाणाभावः शङ्क्यः । वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः * तावन्ति हरिनामानि कीर्तितानि न संशय इति वाक्ये अर्थवादत्वनिरासपूर्वकं भगवन्नामत्वकथनात् । स्मृतेश्चाप्र-

वाक्यत्वात् । नन्वनेन वर्णानां नार्थवत्त्वसिद्धिः । वाक्ये अक्षर-पदाद् वर्णाक्षरपदयोश्च पर्यायताविरहात् । घृणिरिति द्वे अक्षरे, सूर्य इति त्रीणि, अष्टाक्षरा गायत्री इत्यादिश्रुतावज्झलसमुदाय एवाक्षरत्वप्रतीत्या तथा निर्णयात् । समुदायस्य च पदत्वादिति-चेन्न । आदित्य इति त्रीणि, ओश्रावयेति चतुरक्षरमस्तु श्रौष-डिति चतुरक्षरम्, ओमित्येकाक्षरं ब्रह्म अक्षराणामकारोऽस्मीत्या-दिश्रुतिस्मृतिषु केवलाकारादौ, येनाऽक्षरसमाम्नायमित्यादौ केव-लव्यञ्जनेषु चाक्षरपदप्रयोगेण, अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा * स्वरतः कालतः स्थानात् प्रयत्नानुप्रदानतः * इति वर्णविदः प्राहुरित्यादौ केवलेषु वर्णपदप्रयोगेण पूर्वसूत्रे वर्णस्याऽक्षरमिति संज्ञा क्रियत इति फणिभाष्येण, वर्णं तु चाक्षर इति कोशेन च वर्णाक्षरपदयोः पर्यायतानिश्चयात् । नच सुपूश्रव-णप्रसङ्गः शङ्कनीयः । सुपां सुलुगिति लुगादेश उक्तत्वादश्रवण-सिद्धेः । वस्तुतस्तु, ॐमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानमि-त्यादिश्रुतेरकारो वै सर्वा वागित्यादिश्रुतेश्च सर्वस्य वाङ्मात्रस्य ॐङ्कारादिविकृतित्वाल्लौकिकवैदिकवर्णपदयोर्भगवद्वाचकत्वमेव । बीजस्य तथात्वात् । अत एव, सर्वे सर्वार्था इति वैयाकरणसिद्धा-न्तः । भगवतः सदात्मकत्वात् । नचैवं शाब्दबोधदीर्घघटघादिदूष-णापत्तिः । व्यवहारार्थकशक्तिसंकोचाद्वर्णपदयोर्वाचकशक्तिकौ-ण्ठयेन प्रतिनियततदर्थबोधनेन च दोषाभावात् । नचात्र माना-भावः । सर्वाणि रूपाणि विचिन्त्य धीरः नामानि कृत्वाभिवदन् यदास्ते, वेदेन नामरूपाणि विषमाणि समेष्वपि * धातुष्वद्व कल्पन्त एनेषां स्वार्थसिद्धय इति श्रुतिस्मृत्योः करणकल्पनकथ-नेन तथा निश्चयात् । यत्र च व्यवहारस्य न नियामकत्वं तत्र तु वाचकत्वमेव। श्रुतौ योगियाज्ञवल्क्यस्मृतौ च प्रणवमात्रार्थकथन-

दर्शनेन तथा निश्चयात् । नन्वबाधितप्रत्यभिज्ञया वर्णपदयोरैक्यनिश्चयादयं लौकिकवैदिकविभागोऽनुपपन्नः । न च छान्दसप्रक्रियाया नियतस्वरवर्णाऽऽगमतल्लोपविकरणव्यत्ययादिदर्शनात्तद्भेदसिद्धिः । अर्थभेदाभावे तदेवेदं गोपदमित्यादिप्रत्यभिज्ञया पदभेदाभावे च सिद्धे तेषां तदसाधकत्वात् । वाक्याधिकरणवार्तिकोक्तहेतुनार्थभेद एव पदभेदकत्वोपगमात् । न च स्वरुयूपादिशब्दानां लोके अप्रयोगादश्ववालादिशब्दानामर्थभेदस्यापि स्पष्टत्वात् । उत्ताना वै देवगवा वहन्ति, हिरण्यपर्णः प्रदिवस्ते अर्थमित्यादावर्थस्वरूपस्याप्यन्यविषत्वात् सोऽप्यस्तीति वाच्यम् । तावताऽपि क्वाचित्कदेव भेदसिद्धेः । सर्वथा भेदस्याप्रमाणकत्वात्। उत्तानादिवचनस्यान्यपरत्वेनार्थभेदानापादकत्वात् । अन्यथा तदुपायाभावात्तेभ्योऽर्थानवगमप्रसङ्गात् । अत एव भट्टपादैर्लोकवेदाधिकरणे,लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक इत्यादिना लोकवेदस्थशब्दयोरभेद एव प्रतिपादित इतिचेन्न । लोकवेदाऽधिकरणस्य काल्पनत्वेनाऽप्रामाणिकत्वात् । जैमिनिनाऽनुक्तत्वेन तथात्वावसायात् । आकृत्यधिकरणस्यैव तत्र दर्शनात् । न च वैदिकपदानामन्यत्वे तदर्थस्याप्यन्यस्य वक्तव्यत्वात् तेषा सम्बन्धग्रहणोपायाभावेनाकृत्यधिकरणानारम्भप्रसङ्गः । उपायस्य वक्ष्यमाणत्वात् । स्वमतेनापि पदपदार्थसम्बन्धनित्यत्वाय तस्यावश्यकत्वात् । उत्तानादिवाक्यस्यान्यपरत्वेऽपि लोकानधिगतार्थबोधकत्वेन स्वार्थे प्रामाण्यानपायात् । अन्यथा प्रतारकवाक्यवदप्रामाण्यप्रसङ्गात् । केषाञ्चिद्भेदेऽभ्युपगते तदर्थस्येतरेषामप्यर्थस्य सुखेनैव बोद्धुं शक्यत्वात् । निनादनिनदध्वनिध्वानकुतुककौतुकद्वदावादिशब्देष्वर्थभेदाभावेऽपि पदभेदस्य कोशेऽङ्गीकारेण तथोपगमस्याप्रयोजकत्वात् । प्रत्यभिज्ञाया वस्त्वैक्याविषयत्वेन रूप-

भेदाबाधकत्वात्। पातञ्जलमहाभाष्येऽपि, केषां शब्दानां लौकिकानां वैदिकानां चेति भेदमुपन्यस्य गौरश्वः पुरुषो हस्तीति लौकिकानां, शन्नो देवीरभिष्टये, इषे त्वेत्यादीनां वैदिकानां च भिन्नतयोदाहरणात्। मयङ्वैतयोर्भाषाया, द्व्यचश्छन्दसि, सर्वत्र विभाषा गोरित्यादिसूत्रेषु पाणिनिनापि रूपभेदस्यैव बोधनाद्वैदिकानि तानि भिन्नान्येवेति निश्चयः। नचोदात्तादीनां ध्वनिधर्माणां वर्णेष्वारोपितत्वेनावास्तवत्वान्न वर्णादिभेदकत्वं युक्तमिति वाच्यम्। विधानवैयर्थ्यापातात्। आरोपस्योच्चारणविशेषादेव सिद्धेः। नचैवमपि कृत्रिमत्वानपायादवास्तवत्वमेवेति शङ्क्यम्। विधानस्य व्युत्पत्तिमात्रार्थत्वेन वास्तवत्वानपायात्। दुष्टः शब्दः स्वरतो वर्णतो वेत्यत्र पद एव स्वराङ्गीकाराच्च। नच, यज्ञकर्मण्यजपन्यूङ्खसामस्वित्यादावेकश्रुतेरपि विधानादेवमिति वाच्यम्। विरुद्धधर्माश्रयत्वेनोभयथापि सत्त्ववचनेन तथा पाठनियमनाददोषात्। नच, दृष्टं सामेत्यधिकृत्य पठितानां, कलेर्ढक्, वामदेवाड्ड्यड्ड्यावितिसूत्राणां, यदकालयत् तत् कालेयस्य कालेयत्वं, वाम वा इदं देवेभ्योऽजनि तस्माद्वामदेव्यमित्यादिश्रुतिविरोधेनाप्रामाण्यमिति शङ्क्यम्। अत्र तद्विरोधादर्शनात्। काले वामदेव्यस्य चेऽपि श्रुतिनिरुक्तो यः कालनसाधकत्वादेयत्वाभत्वरूपो धर्मस्तत्पुरःसरमेव साम्नः कलिना वामदेवेन च दृष्टत्वस्य शास्त्रवचनत्वेन श्रुतौ प्रकृत्यानिर्देशेन च विरोधाभावाच्च। एवं यत्र तत्र विरोधाङ्गीकारे तस्याद्रस्वमङ्गप्रसङ्गाच्चेति न किञ्चिदेतत्। अतो लौकिकवैदिकभेदेनापि युक्त एव पदवर्णस्वरभेदः। एवं वैदिकवाक्यान्यपि भिन्नानि बोध्यानि। आनुपूर्वीभेदात्। छन्दःशास्त्रे वाक्यधर्माणां लौकिकवैदिकच्छन्दसां पृथङ्निरूपणात्। अध्यापनाध्ययनादिनियमभेदात्। सर्वे वेदा यत्प-

दनागमन्ति, वेदैश्च सर्वैरहमेव वेद्यः, मां विधत्तेऽभिधत्ते मामि-त्यादिश्रुतिस्मृतिभ्योऽर्थभेदावसायाच्च। ननु लौकिकवैदिकवर्ण-पदवाक्यानां भेदो न युक्तः। तथा सति तादृशानुपूर्वीस्वरयोगेन तत्तदृशवाक्यपाठे शूद्रादेः पापाभावादपशूद्राधिकरणविरोधाप-त्तेरिति चेन्न। शूद्रादीनां वैदिकसदृशस्यापि वाक्यादेर्वेदबुद्धया पाठेऽपि दोष इत्यभिप्रायकत्वात्। उक्तहेतुभिः सिद्धभेदस्यापल-पितुमशक्यत्वात्। व्याकरणस्मृतेस्तामिन्द्रो मध्यतोऽपक्रम्य व्याकरो-दिति श्रुत्या वेदमूलकत्वाच्छन्दःशास्त्रस्याऽपि तथात्वाच्च। तस्मा-न्न विवादलेश इति वर्णादित्रयेऽपि पद्धर्मत्वममत्यूह्म॥

ननु वेदवाक्याना भगवद्वाचकत्वं न युक्तम्। मन्त्राणां तत्र तत्र विनियुक्तानां तत्तत्प्रकाशकत्वात्। ब्राह्मणस्यापि तत्तदा-ख्यायिकापुरावृत्ततत्तत्कर्मबोधकत्वात्। वाक्यानां संसर्ग एव शक्त्युपगमाच्च। तदनङ्गीकारे यज्ञादिप्रतिरोधप्रसङ्गात्। सर्वे वेदा इत्यादीनां तात्पर्यद्वारयाप्युपपत्तेरितिचेन्न। मां विधत्तेऽभिधत्ते मां विकल्प्याऽपोह्यते ह्यहम् * एतावान् सर्ववेदार्थः शब्द आस्थाय मा भिदाम् * मायामात्रमनूद्यान्ते प्रतिषिद्ध्य प्रसीदतीत्यत्र, मां विधत्त इत्यादिना विधेयाभिधेयविकल्प्यापोह्यानामर्थानां स्वस्वरू-पेनेन तत्तद्रूपस्यैव स्वस्य वेदार्थत्वबोधनाच्छिष्टाना मन्त्रादिवेदा-न्तेषु सर्वेषु वाक्येषु पूर्णत्वव्यवहाराद्भगवतस्तद्रूपस्यापि पूर्णत्वात्। अत एव वेदस्य सर्वत्र वर्णादिरूपेण वाचकत्वान्मन्त्रादीना तत्त-त्प्रकाशकत्वेऽपि भगवद्वाचकत्वस्याऽबाधात्। तावता यज्ञादिनि-र्वाहेण दूषणान्तराभावाच्च। एवमुत्तरकाण्डेऽपि ज्ञानशेषाणा भ-गवत्त्वात्तन्निरूपकवाक्येष्वपि द्रष्टव्यम्। ज्ञानकर्मणोः परस्परोप-कारकत्वेन शास्त्रैक्यम्। षडङ्गविशिष्टस्य पुरुषस्य प्रतिशाखं नि-रूपणाच्च। शाखापि पूर्णत्वम्। नच यज्ञादेर्लौकिकक्रियात्मक-

त्वादपूर्वात्मकस्य जन्यत्वाच्च न ब्रह्मत्वमिति शङ्कनीयम्। लौकिकक्रियायास्तदभिव्यञ्जकत्वेन तत्र यज्ञादिव्यवहारात्। अतो वेदस्य सर्वत्र भगवद्वाचकत्वे न काऽप्यनुपपत्तिः। एवं, पुराण हृदय स्मृतमिति वेदहृदयत्वाद्, इतिहासपुराणाभ्यां वेदं समुपबृंहयेदिति वेदार्थनिश्चायकत्वाच्च वेदवदेव नित्यो भगवानेव वाक्यार्थ इति तत्रापि पूर्वोक्तैव व्यवस्था। तदितरत्र तु वाक्यार्थस्य बुद्धिकल्पितत्वात्त तद्रूपत्वम्। अतो व्याकरणवैयासदर्शनभगवन्मतरीत्या ब्रह्मवादमनुसृत्य शब्दादिस्वरूपविचारे शब्दस्य नित्यसम्बन्धो वस्तुतो भगवद्रूपेणैवार्थेन। व्यवहारे तु पदाना प्रवाहरूपेण नित्यो, वाक्यानां तु यत्तबलिन्यायेन काल्पनिक इति सिद्धम्॥

अथ प्रसङ्गादिदं विचार्यते—वैदिकपदपदार्थाना भिन्नत्वात् कथं तत्र सम्बन्धग्रहः। कस्य वा सम्बन्धस्य ग्रह इति। लोके च कथमिति। तत्र भगवदयया वृद्धव्यवहारादिनेति ब्रूमः। कथमिति चेत्। उच्यते। यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै * तं वै देवमात्मबुद्धिप्रकाशमिति श्रुतौ ब्रह्मणे वेदपाठनस्यात्मबुद्धिप्रकाशनस्य चोक्तेः। पुरुषसूक्ते च, पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यमित्यादिना भूतादिरूपेण व्यवह्रियमाणस्यापि पुरुषात्मकत्वेन नित्यत्वमुक्त्वा ततस्तस्माद्विराडजायतेत्यादिना सर्वपदार्थानामृगादीना मन्त्राणां चोत्पत्तिमुक्त्वा, तेन देवा अयजन्त, सर्वाणि रूपाणि विचिन्त्य धीरः नामानि कृत्वाऽभिवदन् यदास्ते, तानि धर्माणि प्रथमानीति चोक्तेः। श्रीभागवते च, एव पुरा धारणयात्मयोनिर्नष्टां स्मृतिं प्रत्यवरुध्य तुष्टात् * तथा ससर्जेदममोघदृष्टिर्यथाप्ययात् प्राग्व्यवसायबुद्धिरिति कथनाच्च। भगवान् पाठयन् ब्रह्मबुद्धिं प्रकाशयति, युगपत्सृष्टौ च सर्वेषां बुद्धिम्। तदा प्रश्ना वा एते वा यागे प्रवर्तन्ते। यागसम्भाराः पुरु-

पावयवात्मका एवेति प्रथमं तेष्वेव तेषां सम्बन्धयोर्ग्रहः। तत्समाननामरूपत्वेन लौकिकेषु चैकस्य सः। ततो वृद्धव्यवहारेण ईश्वरप्रकाशितबुद्धीनां बालानामप्यदूरप्रकर्षात्तथैवावगमः। विच्छिन्नपरम्पराणां तु वैदिकपदार्थस्यातीन्द्रियत्वाल्लोके पूर्वं ततो वाचकशब्देन भगवदनुगृहीतपूर्वाचार्यग्रन्थादिना च लौकिकसमानाकारत्वेनावगमः। तत्राप्याश्रयाश्रयिभावस्यासत्त्वं पारोक्ष्येण अतीन्द्रियेषु स्वर्गमेरुसुपर्णप्रभृतिषु सान्द्रतमप्रसिद्धेषु सिंहशरभादिषु च यथा भवति तद्वत्। येषां पुनरसत्त्वं परम्पराविच्छेदस्तेषामपि भगवत्कृपया सुखेनावगमः कल्पते। कल्पयद्भ्रागसौरभसनाथपवनसंसर्गेण धर्मस्येव। येषां पुनर्न सा तेषां तूपायाभावात् तदभाव एव। प्रत्युत गुणक्षोभकृतस्वभाववैचित्र्याद्विपरीतज्ञानमपि। नचेदमप्रयोजकम्। अविच्छिन्नपरम्पराणामपि तथा श्रवणात्। यथा एष आत्मेति ब्रह्मवाक्येन विरोचनस्य देह आत्मपदशक्तिग्रहः। एकादशस्कन्धे च, वदन्ति कृष्ण श्रेयांसि बहूनि ब्रह्मवादिनः * तेषां विकल्पप्राधान्यमुताहो एकमुख्यतेति प्रश्ने भगवतोक्तम्। कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता * मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः॥ तेन प्रोक्ता च पुत्राय मनवे पूर्वजाय सा * ततो भृग्वादयोऽगृह्णन् सप्तब्रह्ममहर्षयः॥ तेभ्यः पितृभ्यस्तत्पुत्रा देवदानवगुह्यकाः * मनुष्याः सिद्धगन्धर्वाः सविद्याधरचारणाः॥ किंदेवाः किन्नरा नागा रक्षःकिम्पुरुषादयः * बह्व्यस्तेषां प्रकृतयो रजःसत्त्वतमोभुवः॥ याभिर्भूतानि भिद्यन्ते भूतानां मतयस्तथा * यथाप्रकृति सर्वेषां चित्रा वाचः स्रवन्ति हि॥ एवं प्रकृतिवैचित्र्याद्भिद्यन्ते मतयो नृणाम् * पारम्पर्येण केषाञ्चित् पाखण्डमतयोऽपरे॥ मन्मायामोहितधियः पुरुषाः पुरुषर्षभ * श्रेयो वदन्त्यनेकान्तं यथाकर्म यथारुचीति॥ अतो

विधित्वादध्यापनेऽध्ययनेऽपि चेदेवम्भावस्तदेदानीन्तनानां तदभावे कः सन्देह इति न तेनास्माकं काचन हानिः ॥

या तु प्राथमिकशक्तिग्रहे परेषां प्रनाडी—घटमानयेति प्रयोजकवृद्धेनोक्तः प्रयोज्यवृद्धस्तदर्थमवगत्य घटमानयति।तत्पश्यन् बालस्तया क्रियया तस्य प्रयत्नं, तेनेच्छां,तया च तद्विषयकं ज्ञानं स्वदृष्टान्तेन अनुमिनोति। ततस्तत्र हेत्वाकाङ्क्षायामुपस्थितत्वाच्छब्दमेव कारणत्वेन कल्पयति । ततो घटादिपदानां प्रत्येकमावापोद्वापाभ्यां घटपदं घटधीजनकमित्यादि कल्पयति । क्लृप्ते च तस्मिन्नतिप्रसङ्गभङ्गाय तज्जननानुकूलं शक्तिरूप सम्बन्धं कल्पयति । तदुत्तरं च क्वचिद् व्यवहारात्,क्वचिदुपमानात् क्वचिच्छब्दाद् व्याकरणादिरूपाद्भवतीति ॥ सा तु नास्माकं रोचते ॥ प्रत्यक्षविरोधात् । तथाहि । य एतावत्कल्पकः स नातिबालः, किन्तु प्रगल्भ एव वाच्यः । तथा सति वृत्तान्तान्तरमिवेदमपि स्ववृत्तान्तं स्मरेत् । अथातिबालस्तदा तु तावत्प्रनाडीज्ञानादिकमेव तस्य दुर्लभमिति दूरापास्तं कल्पकत्वम् । व्याप्तिज्ञानादिवैधुर्याच्च । किञ्च । तस्य यज्ज्ञानं तत् किमुपेक्षाबुद्धिरूपं ग्राहकबुद्धिरूपं वा । नाद्यः ।तथा सत्यग्रे शक्तिं न स्मरेत् संस्कारानुदयात्।उपेक्षान्यसंशयान्यज्ञानस्यैव संस्कारजनकत्वात् । द्वितीयं चेत्तर्हि प्रनाडीमपि स्मरेत् । किञ्च । सादिसृष्टिवादे प्राथमिको बालश्चतुर्मुख एव वाच्यः । तदुपशिक्षणाय चेश्वरेण रूपं विधीयत इत्यपि वाच्यम् । तदपि नोचितम् । तथा सति नानाश्रुतिपुराणेषु नानावृत्तान्तवदिदमपि क्वचिदुपलभ्येत । तस्मान्नेदं साधीय इति ॥

अथेदं विचार्यते ॥ शब्दार्थयोः प्रत्याय्यप्रत्यायकभावः पूर्वमुक्तस्तत्र प्रत्याय्यत्वमर्थगतं, प्रत्यायकत्वं शब्दगतं प्रतिपादकत्वापरपर्यायम् । तच्च शक्तिलक्षणागौणीसंकेतशक्तिभ्रमा-

न्यतरेण बोधकत्वम् । तस्य नित्यत्वं तु न शक्यवचनम् । तथा सति तच्छरीरप्रविष्टमकाराणामपि नित्यत्वापत्त्या शक्तिलक्षणादिकृतगौणमुख्यपर्यायविभागवैयर्थ्यापत्तेः । नच शक्त्या बोधकत्वमेव प्रसायकत्वमिति वाच्यम् । मकारान्तरेण बोधके शब्दे प्रसायकत्वव्यवहारबाधापत्तेः । शक्त्यवच्छेदकानिर्वाच्यतापत्तेश्च । तथाहि । न तावच्छ्रोत्रग्राह्यत्वं शक्त्यवच्छेदकम् । तस्य ध्वनावपि तौल्यात् तत्रापि शक्त्यापत्तेः । नाऽपि तथात्वे सति प्रसायकत्वम् । विभागवैयर्थ्यापत्तेः । अपभ्रंशेष्वपि शक्त्यापत्त्या अनेकशक्तिकल्पनाप्रसङ्गाच्च । नापि माधुर्यं तथा । तस्यैवानिर्वाच्यत्वात् । गाव्याद्यपभ्रंशसाधारण्यात् । अर्थप्रत्ययप्रयोगाभ्यां तत्रापि तदवगमात् । नच तेषां लाक्षणिकत्वमिति युक्तम् । तेषां क्वापि शक्त्यभावे तत्र लक्षणाया अप्यशक्यवचनत्वात् । नाप्यऽदृष्टसाधनत्वं तत् । तस्य प्रसक्षाद्यविषयत्वेन प्रयोगनियामकविध्यनुपलम्भेन च तथात्वस्य निश्चेतुमशक्यत्वात् । नाप्यनादिवाचकत्वं तत् । मीमांसकादिमते सम्बन्धुरस्मरणस्य नैयायिकादिमते ईश्वरसंकेतस्यापभ्रंशेष्वपि तौल्याच्छब्दापशब्दविभागभङ्गापत्तेः । अतः शक्त्यवच्छेदकस्यानिर्वाच्यत्वादीश्वरसंकेतातिरिक्तशक्त्यभावात् तदुपगमस्य गौरवग्रस्तत्वाच्च कथं सम्बन्धस्य नित्यत्वमिति । अत्रोच्यते । न तावच्छक्त्यवच्छेदकानिर्वाच्यत्वं, येन सम्बन्धानित्यता इष्येत । अनादेः शब्दस्वरूपस्यैव तदवच्छेदकत्वात् । नचापभ्रंशेषु तदापत्तिः । तेषां देशनियतत्वेन देशानां भूमिविभागोत्तरभावित्वेन भूमेश्च जन्यत्वेन तेषामप्यर्वाचीनत्वात् । प्रत्यद्शाया वेदवत्तत्सत्त्वावबोधकप्रमाणाभावात् ।

नच ततः पदार्थबोधानुपपत्तिः । आद्यानामिन्द्रादिशब्देनेन्द्रादेरिव तच्छक्तेर्वाचकशक्तिजन्यतया तेन तन्मूलशब्दोपस्थापनादर्वाची-

नाम्नां तु परम्परया तत्रैव संकेतग्रहादुपपत्तेः । अत एव प्रयोगमात्रयोर्वाचकत्वानियामकतया तदसिद्धेर्न तत्र साधुत्वम् । वाचकत्वं चार्थप्रतीतिजननानुकूलानादिशक्तिमत्त्वं बोध्यम् । एवञ्च शक्त्या बोधकत्वस्यौत्पत्तिकत्वेनाभिमेतत्वान्न तस्य नित्यत्वे किमपि बाधकम् ॥

शक्तिस्तु, अर्थसापेक्षं शब्दस्वरूपमेव वाचकत्वाऽपरनामकं कारणत्वादिवदिति वैयाकरणाः । वस्तुतस्तु साधुत्वापरपर्याया अनादिवाचकत्वरूपा अर्थबोधाविर्भावकशक्तिरतिरिक्तैव । नचातिरिक्तशक्तिकल्पने गौरवं शङ्क्यम् । आविर्भावकशक्तेः पूर्वं साधितत्वेन तस्या एवार्थबोधार्थं शब्देऽपि सत्त्वेनातिरेकाभावात् । तदाधारत्वस्य च बोधरूपकार्यादेव सिद्धत्वात् । न त्वीश्वरेच्छारूपः संकेतः । शब्दाद्यवृत्तित्वात् । शब्दनिष्ठशाब्दबोधानुकूलपदपदार्थसम्बन्धस्य वृत्तित्वेनेच्छायाश्च वैयधिकरण्यात्तद्व्याप्यत्वाऽभावेन तद्विशेषत्वाभावापत्तेश्च । किञ्च, परेच्छायाः परेण ज्ञातुमशक्यत्वादीश्वरेच्छायाः पुनरां तथात्वात् तज्ज्ञापको व्यवहारप्रवर्तकोऽभिलापनियमः सर्वथाङ्गीकार्यः । तथा सति स एव संकेतोऽस्तु, नेच्छा । सोऽपि पूर्वोक्तश्रुत्यादिना ज्ञाप्यत इति संस्कृतशब्देषु संकोचिकैव सा । श्रुत्यनुरोधात् । अत एतद्देशकालविभेदेनास्माभिरुच्चार्यमाणोऽयं शब्द इममेवार्थं बोधयतु, न त्वन्यमितीश्वरकृतनियमरूपः शक्तिसंकोच एव संकेतपदेनोच्यते । लोके व्यवहारार्थं संस्कृते व्याकरणादीना तद्व्यवस्थापकत्वम् । यत्र पुनर्व्याकरणादिभिर्न व्यवस्था तत्र पूर्वोत्तरतन्त्रस्थैर्न्यायैः । एवं सति लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियम इति व्याकरणस्मृत्याऽनुमातव्ये प्रयोगनियमविधौ प्रतिपदवाक्यकल्पनाया गुरुत्वात् साधुशब्दमेव प्रयुञ्जीत नापशब्दमित्येव नियमो-

ऽनुमीयते। तेन पर्यायस्थले प्रयोगानियमो यद्यपि न दुष्टस्तथाप्यन्यायश्चानेकशब्दत्वमिति जैमिनिस्सूत्रा एकस्यार्थस्यैकशब्दवाच्यत्वनियमाऽवधारणात् पर्यायाणामपि धर्मविशेषपर्यवसानं न्याय्यः। विकल्पव्यवस्थासिद्ध्या षड्दोषासद्भावात्। अन्यथाऽष्टदोषापत्तेः। अत एव घटकलशशब्दयोः सत्यपि पर्यायत्वे माङ्गल्येषु कलशपदमेव प्रयुञ्जते। कलशस्थापनमिति। अमाङ्गल्ये च घटशब्दम्। घटस्फोट इति। करहस्तादिषु त्वन्याय्याप्यनेकशब्दता आर्यप्रयोगसाधारण्यदर्शनेन गत्यन्तराभावादङ्गीक्रियते। एवमनेकार्थप्रयोगस्थलेऽपि बोध्यम्। अनेकेष्वर्थेषु कस्यापि गङ्गापदात्तीरस्येवार्थान्तरप्रतीतिपूर्वकप्रतीतिकल्पादर्शनात् सर्वासामाकृतीनां तुल्यतया एकत्रैकस्येतराभावेन सत्त्वाभावादाकृत्यधिकरणन्यायेनाक्षेपलभ्यत्वासम्भवात् सर्वप्रवाहनील्येन समाननामरूपसूत्रस्यापि तूष्णीकत्वाच्चार्यप्रयोगसाधारण्यात्। विशेषलाभे गुणस्योक्तत्वाच्चेति॥ विकल्पदोषाणां त्वयं संग्रहः—

यदा वाक्यद्वयात् कल्पो विकल्पो ह्यव्यवस्थितः।
तदैकादरणेऽन्यस्य प्रामाण्यत्याग आपतेत्॥
अप्रामाण्योररीकारश्चैवं द्वौ तद्विपेतरत्।
आदृते चेत्तदा त्यक्तप्रामाण्यस्य परिग्रहः॥
स्वीकृताऽप्रमाणतात्यागस्तस्मिन् पूर्वत्र चोभयम्।
पूर्वोक्तमिति चत्वारस्तद्विधया पूर्वे आदृते॥
दोषद्वयं द्वितीयोक्तमेवं दोषाष्टकं भवेत्।
वाक्यये प्रयोगेणेत्थं तु मम भासते॥
चतुर्थादिप्रयोगे तु ते ततो नोद्धरः पुनः।
इत्येनमव्यवस्थाया विकल्पस्य व्यवस्थितौ॥
एकावाक्ये भवेद्दोषद्वयं तेनायमुत्तमः।

१२

बोध्यः सुधीभिः पूर्वस्मादिति शास्त्रविनिश्चयः ॥

अत्रोदाहरणं व्रीहियवशास्त्रे। तद्यथा । व्रीहिवाक्यार्थोपादाने यववाक्यप्रामाण्यत्यागाप्रामाण्यारोपौ । यववाक्यार्थोपादाने व्रीहिवाक्यस्य स्वीकृतप्रामाण्यत्यागसक्ताप्रामाण्यारोपौ । यववाक्यस्य व्रीहिवाक्यार्थग्रहणदशायां सक्तप्रामाण्यारोपारोपितप्रामाण्यत्यागाविशेषं चत्वारः । व्यवस्थाभावात्पुनर्व्रीहिवाक्यार्थोपादाने व्रीहिवाक्यस्य यववाक्यार्थग्रहणदशायां सक्तारोपारोपितत्यागाविशेषं पर्यायत्रयेण वाक्यद्वये प्रत्येकं चत्वार इत्यष्टौ ॥ साम्प्रदायिकमीमांसकास्तु, व्रीहिवाक्यार्थोपादाने यववाक्यप्रामाण्यत्यागाऽप्रामाण्यारोपौ, व्रीहिवाक्यप्रामाण्योज्जीवनारोपिताप्रामाण्यत्यागाविति चत्वारः । एवं यववाक्याऽर्थोपादाने शास्त्रद्वयविपर्ययेण चत्वार इति पर्यायद्वयेनाष्टावित्याहुः ॥ तन्नास्माकं रोचते ॥ प्रथमं त्यागस्वीकारयोरभावेनोज्जीवनारोपयोर्वक्तुमशक्यत्वात् । अप्रामाण्यस्याच फलकृतत्वेन प्रयोगदशायामेव तन्निर्द्वारेणापि पूर्वं तदनयगमाच्चेति । तत्त्वं तु सक्तप्रामाण्योज्जीवनस्य स्थूणाखननतुल्यतया आरोपितप्रामाण्यत्यागस्य चास्तित्वसम्पादकतया गुणत्वेन तयोर्दोषत्वं न युक्तम् । यदि चैतयोः शास्त्रतात्पर्यगोचरतया अप्रामाणिकत्वं विभाव्यते तदा त्वग्नीषोमीयपशुहिंसादेरपि दोषत्वम् । एतयोर्दोषत्वेन शास्त्रगोचरताया अप्रामाणिकत्वादित्यतश्चत्वार एव व्यवस्थितेऽपि दोषाः । तेऽप्यनुष्ठापकवाक्येऽननुष्ठापके

पदार्थोपस्थितिर्युज्यते । नच तत्र शक्तिभ्रमात् पदार्थोपस्थित्या-दिकमिति युक्तम् । भ्रमत्वविनिगमकस्याभावात् । पर्यायशब्दे-ष्विव तेष्वपि पूर्वोक्तरीत्या सङ्केतस्य सिद्धौ तद्ग्रहस्य प्रमात्वसं-भवे भ्रमत्वकल्पनाया अन्याय्यत्वात् । अग्रे बाधाभावाच्च । न च तत्र लक्षणा । तेषां कुत्रापि शक्त्यभावे शक्यसम्बन्धरूपाया लक्ष-णाया अप्यसम्भवेनाऽशक्यवचनत्वात् ॥

अत्र साम्प्रदायिकनैयायिकाः— संस्कृतपदानां सकलदेश-कालसाधारण्येन परिगणिततया चाल्पत्वम् । अपभ्रंशानां तु त-त्तद्देशकालभेदेनानन्त्यमिति तदेव विनिगमकमिति नापभ्रंशे श-क्तिः । पर्यायेषु तु विनिगमकाभावात् सर्वत्र शक्तिरेवेत्याहुः ॥

त एव नव्यास्तु— संस्कृतत्वापभ्रंशत्वाभ्यामल्पत्वानन्तत्व-सम्भवेऽपि प्रत्येकमेकैकत्वेन संस्कृततुल्यतया विनिगमकासम्भवात् संस्कृतत्वेनापभ्रंशत्वेन वा शक्त्यभावाद् घोचरटत्वादिना प्रत्येक-मेव तस्याः सर्वत्र सिद्धत्वात् । तथाच घटघइलाशब्दयोः प्रत्येकं सर्वत्रैकवाच्छक्तौ कोऽपि न विशेषः । नच शक्तौ सत्यां तत्पदा-द् तद्देशीयानामिवान्यदेश्यानामपि बोधः स्यादिति वाच्यम् । शक्तितदभावयोः पदार्थोपस्थितितदभावौ प्रति स्वरूपतो निया-मकत्वाभावात् । शक्तिग्रहाग्रहयोरेव तथात्वात् । अत एव चागृ-हीतशक्तिक द् घटादिपदादपि नान्युत्पन्नानां पदार्थोपस्थित्या-दि, गृहीतशक्तिकाद् घइल.पदादपि पाश्चात्यानां पदार्थोपस्थि-त्यादीति युज्यते । अत उक्तयुक्तेरप्रयोजकत्वाच्च न किञ्चिदेतत्। किन्तु कोशाद्यभावादेव नापभ्रंशे शक्तिः। अत एव प्राकृतसञ्जी-विन्यादिभिः प्राकृतव्याकरणैः परिगणितानामपि प्राकृतानां न शक्तिरित्युपपद्यते । नच व्यवहार एव तत्र शक्तिग्राहक इति वाच्यम् । शक्तिभ्रमलक्षणादिभिरपि व्यवहारसम्भवेन तस्य

शक्तिप्रमापकत्वाभावात्। अनन्यलभ्यस्यैव शक्यत्वाभ्युपगमात्। अत एव प्राकृतव्याकरणैः प्राकृतेषु साधुत्वबोधनेऽपि न तेषां शक्तत्वम्। कोशस्यैव प्राधान्येन शक्तिप्रमापकत्वात्। व्याकरणव्यवहारादीनां त्वनन्यलभ्यत्वसहकृतानां शक्तिपरिच्छेदकत्वस्यैव युक्तत्वात्। तथाचाऽव्युत्पन्नानां शक्तिभ्रमाद्, व्युत्पन्नानां शक्तपदस्मारणात् पदार्थोपस्थित्यादिसम्भवेन प्राकृतेऽपभ्रंशे च न शक्तिकल्पनमित्याहुः ॥ इदमप्यापातरम्यमेव ॥ अग्रे बाधाभावेन तत्र भ्रमत्वकल्पनाया अयुक्तत्वात्। संस्कृते गृहीतशक्तीनामगृहीतशक्तीनां वा स्वस्वभाषाशब्देषु शक्तिबाधादर्शनात्। प्रत्युत बाल्ये भाषया गृहीतशक्तीनां पौगण्डादिषु पठिते कोशादौ भाषाशब्दैरेव विवरणे तत्परिच्छित्तिरिति वैपरीत्यस्यापि दर्शनाच्च। अप्रतारकीयप्राथमिकव्यवहारादेर्भ्रमप्रयुक्तत्वे मानाभावाच्च। कुत्रापि तेषां शक्त्यभावे लक्षणायोगादेव तथापि व्यवहारासम्भवाच्च। अतस्तेषु शक्तिपक्ष एव साधीयान्। यत्पुनः फणिभाष्ये अपभ्रंशेषु न शक्तिरिति प्रतिपादितं, तत्त्वनादिवाचकत्वरूपशक्त्यभावाभिप्रायम्। तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो वा एष यदपशब्द इति श्रुत्यनुरोधात्। यज्ञेषु तादृशशब्दोच्चारस्यानिष्टाधायकत्वात् तन्निवृत्त्यर्थं च। अतो यच्छ्रीभागवते, तद्वाग्विसर्गो जनताघविप्लवो यस्मिन् प्रतिश्लोकमबद्धवत्यपि * नामान्यनन्तस्य यशोऽङ्कितानि यच्छृण्वन्ति गायन्ति गृणन्ति साधव इत्यपशब्दवतोऽपि वाग्गुम्फस्याऽघनाशकत्वमुक्तम्। तदपि भगवन्नामभिः सह पाठादेव, न तु स्वरूपत इति युज्यते। शक्तिश्च पर्यायेष्विव तेष्वपि तत्तदानुपूर्व्यावच्छिद्यते। ते विकृता इति तदुच्चारणे फलमपि विकृतमेव भवति। लौकिकेषु देवदत्तादिपदेष्वपि भाषावदेव भगवदिच्छा

ज्ञेया। तेन न काचिदनुपपत्तिः। सा च शक्तिर्नामलीलानिर्वाहाय व्यवहारे मुख्या–गौणी–तात्पर्यवृत्तिभेदेन त्रिधा वर्तमाना मुख्या-तात्पर्यवृत्तिभेदेन द्विधा वर्तमाना वा वृत्तिरित्युच्यते । तत्र वाचकत्वरूपेण वर्तमाना मुख्या । साऽपि रूढियोगयोगरूढिभेदेन त्रिधा । तासु यत्र प्रकटो व्यवहारोऽभिमेतस्तत्र पूर्वोक्ता शक्तिसंकोचलक्षणा रूढिः । यथा कपित्थमण्डपादिपदे । यत्रैवत्तिरोधानेनाभिमेतपदभङ्गेन श्लेषो वा तदवयवशक्तिमादाय कल्पिता स योगः । पाचकविश्वामित्रादिपदे । यत्र किञ्चिदर्थाऽपवादेन कश्चिदर्थो दृष्टीकर्तुमिष्टस्तत्रोभयशक्तिमादाय योगरूढिः । यथा पङ्कजादिपदे । यत्तु उद्भिदादिपदे उद्भेदकर्तृस्तरुगुल्मादेर्यौगिकस्य यागविशेषस्य रूढस्य च स्वातन्त्र्येण बोधाद्यौगिकरूढिरतिरिक्तेति मुक्तावलीकारः । तन्न । समुदायशक्त्यनवधारणेऽवधारणे च पङ्कजपदसमानकक्षत्वेन स्वातन्त्र्यस्य वक्तुमशक्यत्वात् । एवं मुख्या व्याख्याता । शक्यसम्बन्धेन बोधिका गौण्यपि द्विधा। फललक्षणागौणीभेदात् । तयोर्मध्ये यत्र किञ्चित्फलार्थं पारोक्ष्येणैवार्थो बुबोधयिषितस्तत्र शक्यसम्बन्धरूपा प्रयोजनलक्षणा । यथा गङ्गायां घोष इत्यादौ गङ्गापदे । एवमुपचारार्थं सादृश्यात्मकशक्यसम्बन्धरूपा गौणी । यथा गौर्वाहीक इत्यादावित्यूह्यम् । अतो नानाविधव्यवहारसिद्ध्यर्थं शक्तेर्नानाप्रकारेण वर्तनमिति वृत्तीनां भेदः। निरूढलक्षणा न युक्ता। कर्मणि कुशल इत्यत्र कुशान् लातीति योगस्य बाधं परिकल्प्य विवेकादिसम्बन्धात्मकलक्षणाकल्पनस्य योगापहारिकया रूढ्या बाधात्। कृती कुशल इत्यपीत्यादिकोशेन शक्तेरेव ग्राहणात् । चित्रतुरगादौ तुरगादिपदानां गौण्यैवोपपत्तेः । ध्वस्तघटादौ घटव्यवहारस्य सूक्ष्मघटसत्ता कारणनिष्ठामादाय शक्त्यैवोपपत्तेश्च । यत्तु द्विरेफशब्दे शक्यार्थस्य परम्परास-

म्बन्धरूपा लक्षितलक्षणेति मतम् । तन्न । द्विरेफपदेन भ्रमरपदीयरेफद्वयसम्बन्धे ज्ञायमाने रेफद्वयवतां बर्बर–बर्कर–शर्करा–रुचिरादिशब्दानां व्युदासस्यापि प्रसक्त्यापत्तेरित्यादि बोध्यम् । अत एव न यौगिकरूढिरपि । फललक्षणभेदास्तु ग्रन्थविस्तरभिया नोच्यन्ते । एवं गौण्यपि, यजमानः प्रस्तरः, अग्निर्ब्राह्मणः, आदित्यो यूप इत्यादिषु न गुणयोगात्, किन्तु विधेयस्तुत्यर्थोपचारत एव । तावद्गुणयुक्तधर्मिरूपेण धर्म्यन्तरस्यैवोपचारात् । धर्मस्फुरणं तु धर्मिज्ञानादेव । अन्यथा बाधमतिसन्धानमन्तरेण पूर्वं धर्म एव स्फुरेत् । एवं गोऽश्वा एवपशवोऽन्ये त्वपशवः, सृष्टीरुपदधाति, प्राणभृत उपदधाति, छत्रिणो यान्तीत्यादावप्यश्वादिधर्मिस्फूर्त्यनन्तरं बाधमतिसन्धाने गवाद्यन्यसंसार्थमजादिष्वारोपितमपशुत्वं सृष्ट्यसृष्ट्यादिसङ्गे भूमालिङ्गेन चोपलक्षणविधया आरोपितं सृष्टित्वं प्राणभृत्त्वं च प्रतीयत इति षड्विधापि गौणी उपचारादेवेत्यपि ज्ञेयम् । सादृश्यस्य षड्विधत्वं च, तत्सिद्धिजातिसारूप्यप्रशंसालिङ्गभूमभिः * षड्भिः सर्वत्र शब्दानां गौणीवृत्तिः प्रकल्पितेति पूर्वतन्त्रग्रन्थेषूक्तम् ॥

तात्पर्यं च तत्प्रतीतीच्छया उच्चारितत्वम् । सङ्केतशक्तिभ्रमौ शक्तिरूढ्यतिरिक्तत्वाद् रूढावेवान्तर्भवतः । तेन रूढियोगयोगरूढिफललक्षणागौणीतात्पर्यवृत्तिभेदाः षोढा पदवृत्तयः ॥

आलङ्कारिकास्तु– नैता एव वृत्तयः । व्यञ्जनाया आभ्योऽतिरिक्तत्वात् । तथाहि । गङ्गायां घोष इत्यादौ तटादिगतातिशयितशैत्यपावनत्वादिर्न प्रयोजनप्रतीतौ नाऽभिधाव्यापारः । तत्र गङ्गादिपदसङ्केताभावात् । नापि लक्षणागौण्यौ । शक्यार्थेन सह संबन्धसादृश्ययोरभावात् । नच प्र पावनत्वादिविशिष्टे लक्षणेति वाच्यम् । लक्ष्यप्रयोजनयोरत्यन्तभेदाभावेन फलाभावे फललक्षणात्वहानिप्र-

सद्भावः । घोषादिपदान्वयानुपपत्त्या मुख्यार्थबाधेऽनुसंहिते गङ्गापदस्य तटे लक्षणाप्रतिसन्धानवत् पावनत्वादिविशिष्टतटे तत्प्रतिसन्धानबीजाभावाच्च । नच तत्र वृत्तिं विनैवार्थबोध इति वाच्यम् । शाब्दबोधे शब्दोपस्थापित एव पदार्थो भासत इति नियमभङ्गप्रसङ्गात् । किञ्चानेकार्थस्थले संयोगाद्यैः शब्दस्य वाचकत्वे नियमिते या अवाच्यविषयाबुद्धिः सा वृत्त्यन्तरं विना नोदेतीत्यतो वृत्त्यन्तरं स्वीकार्यम् । तेन लक्षणास्थले फलप्रत्यायिका नियतशक्त्यनेकार्थस्थले विवक्षितातिरिक्तप्रत्ययप्रत्यायिका वृत्तिर्व्यञ्जना । सा अतिरिक्तैवेत्याहुः ॥ तन्न ॥ लक्षणामूलव्यञ्जनास्थले गङ्गायां घोष इत्यादौ घोषपदार्थे वक्तुरप्रतारकत्वे च निश्चितेऽन्वयाऽनुपपत्त्यादिना तटे लक्षणानुसन्धाने किमर्थं लक्षयतीत्याकाङ्क्षायां तात्पर्यवृत्त्या शैत्यपावनत्वादि प्रतीयते । तात्पर्यं च तादृशवक्योच्चारणमहिम्ना । लक्षणा यथा अर्थगता शब्द आरोप्यते तथा तात्पर्यं वक्तृगतं तत्रारोप्यत इत्यारोपितत्ववृत्तित्वमुभयोर्वादिनोस्तुल्यम् । व्यञ्जनाया व्यापारत्वे तदश्लीलस्थल इवात्रापि केशवालुकादेरपि प्रतीत्यापत्तिः । तन्नियमनाय तात्पर्यवृत्तेस्तत्राप्यावश्यकत्वात् तद्धेतुन्यायेन व्यञ्जनाया अजागलस्तनप्रायत्वम् । गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः ॥ ममापि जन्म तत्रैव भूयाद्यत्र गतो भवानित्यत्रापि प्रायेण वियोक्ष्यमाणायास्तदभावाय गमनाभावे तात्पर्यं तादृशवक्योचारणमहिम्नैव ज्ञायत इति तत्रापि नातिरिक्ता व्यञ्जना । यत्तु तात्पर्यानुपपत्त्याऽत्र लक्षणेति मञ्जरीकारः । तन्न । ममाऽपीत्यादिप्वेकस्मिंस्तदभावेन वाक्ये च शक्त्यनङ्गीकारेण तन्मते तस्या अनुपपन्नत्वात् । यदपि गङ्गायां घोष इत्यत्र लक्ष्यप्रतीतिरेव प्रयोजनं, न तु शैत्यपावनादिप्रतीतिरित्युक्तम् । तदपि न । तादृशवाक्यवक्तु-

मूर्खेनापत्तेः । ऋजुमार्गे विद्यमाने एवं द्रविडमण्डकस्याप्रयोजकत्वात् । अतः फलप्रतीतिरेव प्रयोजनत्वेनादरणीया । अतस्तन्मते न कथमपि व्यञ्जनां विना निर्वाह इति तात्पर्यमनादरणीयम् ॥ नच व्यञ्जनानुपगमे बोधशैघ्र्यानुपपत्तिरिति वाच्यम् । उक्तवाक्यस्य प्रसिद्धत्वेनाभ्यासपाटवादेवोपपत्तेः । नूतनवाक्ये बोधविलम्बस्यानुभवसाक्षिकत्वेन सुमेधसस्तच्छैघ्र्यस्य तात्पर्यज्ञानादेवोपपन्नत्वेन च व्यञ्जनासाधनासामर्थ्याच्च । किञ्च । मुखं विकसितस्मितमित्यादिगूढव्यङ्गयस्थले टीकाकारैस्तेषां तेषां व्यङ्गयानां विवरणात्‌ उत्तराणिचलेत्यत्र काव्यप्रकाशेऽपि व्यङ्गयद्वयविवरणाच्च। सर्वेषां नैकं व्यङ्गयं भासत इति निश्चीयते । एवं सति तृतीयोल्लासे वक्तृबोद्धव्यवैशिष्ट्यादिभिरर्थव्यञ्जकतया स्वीकृतेनार्थधर्मेणैव यथासम्भवं व्यङ्गयार्थबोधनिर्वाहे शब्दगतधर्मान्तरस्वीकारः सर्वथा न न्याय्यः। एवमभिधामूलव्यञ्जनास्थलेऽप्यभिधैव व्यापारो, नातिरिक्ता व्यञ्जना । वक्त्रा स्वविवक्षितबोधोत्पादनाय प्रयोगाद्यैस्तस्या एकत्र नियमनेऽप्यभिधेयान्तराऽभिधाविषयकसंस्कारस्य सदृशादिभिरुद्बोधे तयैवाभिधेयान्तरस्फूर्तिसिद्धौ वृत्त्यन्तरकल्पनस्य व्यसनमात्रत्वात्‌ । नच संयोगादीनां संस्कारोद्बोधप्रतिबन्धकत्वं शक्यवचनम्। अस्याननं योनिरुदारवाच्यामत्र पदान्तरसाहचर्येऽपि अश्लीलानुसन्धानजन्यजुगुप्साया अनुभूयमानत्वात्‌ । नच शब्दबुद्धिकर्मणां विरम्य व्यापाराननङ्गीकारादभिधानलक्षणातात्पर्याख्यानां तिसृणां वृत्तीनां स्वस्वार्थं बोधयित्वोपक्षये कथं व्यञ्जनां विना निर्वाह इति वाच्यम् । अस्य महारस्य नैयायिकभीषकत्वात्‌ । शब्दबुद्ध्योर्विनाशस्माकं मते शब्दस्याविरतत्वेन वृत्तीनां सत्त्वात्‌ तद्भीतेरभावात् । अतो यथा मम्मटं तात्पर्यवृत्त्यर्थधर्माभिधास्वन्तर्भावा-

शातिरिक्ता व्यञ्जना। तेन सुबोधिन्यां, भण्यते, व्यज्यत इत्यादिप्रयोगाणां तात्पर्यविषयीक्रियते इत्यर्थो बोध्य इति न किञ्चिदनुपपन्नम्। तस्मादेता एव पदवृत्तयः। तत्प्रतीतीच्छया उच्चारितत्वं तात्पर्यमिति त्रेधावृत्तिपक्षप्रपञ्चः। द्वेधावृत्तिपक्षे तु तात्पर्यं नाम बुभुत्सितताबाचकत्वेऽपि तत्प्रतीतिजनकत्वमेव, न तु तत्प्रतीतीच्छया उच्चारितत्वम्। तेन फललक्षणादिव्यञ्जनान्तानां तात्पर्य एव निवेशात् सुखेन संग्रहः। उक्ता वृत्तय आकाङ्क्षादयश्च ज्ञाता एवोपयुज्यन्ते॥

आलङ्कारिकास्तु— तत्प्रतीच्छया उच्चारितत्वं तात्पर्यम्। तच्च च.र्थवृत्तिः। वाक्यमेवाकाङ्क्षायोग्यताऽऽसत्तिसहकृतं सत् तात्पर्याख्यवृत्तिव्यापारेण स्वार्थमन्वयं बोधयतीत्याहुः। तत्र प्रतीत्यपर्यवसानमाकाङ्क्षा। बाधाभावो योग्यता। पदानां सन्निधिरासत्तिः। अर्थो ह्यनान्वितावस्थः पदेनाभिहितो यतः * अन्विताऽऽत्मनोऽवस्था लक्षितामेव लक्षयेदित्यादौ भट्टवार्तिके तात्पर्यवृत्तिरेव लक्षणापदेनोच्यते। मुख्यार्थबाधाभावेन पूर्वोक्तलक्षणाया अवस्तुप्रवाक्यत्वादिति वदन्ति॥

भट्टास्तु— पदज्ञानानां पदार्थज्ञानानां चास्थायित्वाभ्युपगमेऽक्रमन्वयबोधसामग्रीत्वम्। क्रमिकत्वान्न मिलितानां तथात्वम्। नाप्यन्त्यपदार्थज्ञानकाले पूर्वसंस्कारसहितेन तत्कारणेन जनितस्य सकलपदार्थसमूहालम्बनस्य तत्सामग्रीत्वम्। तद्विशिष्टोपस्थितिं विना विशिष्टवैशिष्ट्यज्ञानात्मकवाक्यार्थबोधानुपपत्तेः। नच गामानयेत्यत्र सुपा स्वार्थबोधनकाले गोविशिष्टं कर्मत्वं बोध्यते। ततो धातुना तादृशकर्मत्वविशिष्टमानयनं तत आख्या। तेन तादृशानयनविशिष्टा भावना बोध्यत इति विशिष्टवैशिष्ट्यज्ञानात्मकवाक्यार्थबोधानुपपत्तिरिति वाच्यम्। नैयायिकमते प्रकृत्यर्थवि-

शिष्टबुद्धि प्रति मुख्यजन्योपस्थितेः कारणत्वेन प्रमजन्यकर्मत्वोपस्थितिकाले गोविशिष्टबुद्धेस्तदनन्तरपदान्तरजन्यकर्मत्वविशिष्टानयनादिबोधकाले च तादृशकर्मत्वादिविशिष्टबुद्धेश्चाऽसम्भवेन वाक्यार्थज्ञानात्मकविशिष्टवैशिष्ट्यबुद्धेरशक्यवचनत्वात्। तस्मादाकाङ्क्षादिसचिवाः समुचितानुपूर्वीविशिष्टपदोपस्थापिताः पदार्था एव वाक्यार्थबोधं जनयन्तीति तादृशाः पदार्था एव सामग्री । नचास्यापित्वादिकृतानुपपत्तिः । आकृत्यधिकरणे गवादीनां पदानां नित्याकृतिवाचितया अरुणाधिकरणे शुक्लादीनां नित्यगुणवाचितया अभ्यासाधिकरणे समिदादीनां यज्यादीनां च यागैकत्वसिद्ध्यागैकत्वतदनेकत्वपक्षेषु नित्यार्थतया व्यवस्थापनात् । नाप्यन्या । अभिहितान्वयवादिभिरपि प्रकृतिप्रत्ययस्थलेऽन्विताभिधानं स्वीकृत्य प्रमादिप्रत्ययेन कर्मत्वाभिधानकाल एव विशिष्टप्रत्ययनाभ्युपगमात् । नच तथापि धातुना कर्मत्वादिविशिष्टोपस्थित्यनङ्गीकारादस्त्येवानुपपत्तिरिति वाच्यम्। वाक्यार्थे निरूढलक्षणाया अङ्गीकारात् तस्याश्च जातिव्यक्त्यादौ युगपदेव शक्यलक्ष्यार्थबोधकत्वदर्शनाद् धातुनापि कर्मत्वादिविशिष्टोपस्थितिसम्भवेन वाक्यार्थज्ञानात्मकविशिष्टवैशिष्ट्यबुद्धावनुपपत्त्यभावात् । नच पदधीव्यवधानोत्तरपदार्थजन्यधीसमये पूर्वपदार्थधीर्वर्तेत इति कथं विशिष्टादिबुद्धिरिति शङ्क्यम् । तत्तत्पदान्त्यक्षणे तादृशधियोऽनुभवमहिम्नैव पूर्वपदार्थज्ञानकारणतायाः संस्कारसाधारणरूपेण स्वीकारात् । नचैवं सति पदार्थज्ञानानामेव कारणत्वं कुतो नाङ्गीक्रियत इति वाच्यम् । अनन्तज्ञानव्यक्तीनां हेतुत्वापेक्षया स्वविषयकज्ञानसम्बन्धेनैकव्याक्तिकगोत्वस्यैव गोत्वान्वयबोधकत्वे लाघवात् । ईदृशसम्बन्धस्वीकारेणैव घटं करोतीत्यादौ घटकारकत्वादेर्निर्वाह्यत्वात् । अत एव वाक्यार्थप्रतीतेर्न स्वाप्नप्रतीतिवन्निर्मूल-

त्वम्। तस्मादुक्तरूपाः पदार्था एव ज्ञानद्वारा वाक्यार्थरूपमन्वयं बोधयन्तीत्याहुः॥

नैयायिकास्तु— आकाङ्क्षादिसहकृतं क्रमिकपदानुभवजन्यानेकसंस्कारैर्युगपदुत्पन्नं सकलपदस्मरणमेव युगपत्सर्वपदार्थोपस्थितिद्वाराऽन्वयं बोधयति। तादृशानि पदानि वा तथा। अन्वयस्त्वपदार्थोऽपि संसर्गमर्यादया भासते इत्याहुः। आकाङ्क्षादयस्त्वाकाङ्क्षायोग्यतासत्तयः। तत्र पदविशेषसमभिव्याहृतवाक्यगतमन्वयबोधसामर्थ्यमाकाङ्क्षा। संसर्गविरोधिरूपराहित्यं योग्यतेति भवदेवठक्कुराः। यत्पदं यत्पदेन सह यादृशान्वयबोधजनकं तत्पदस्य तत्पदसमभिव्याहारस्तादृशान्वयबोधे आकाङ्क्षा। एकपदार्थे अपरपदार्थस्य प्रकृतसंसर्गवत्त्वं योग्यता। अर्थधर्मः पदेष्वारोप्यते। प्रकृतान्वयबोधाननुकूलपदाव्यवधानमासत्तिः। दूरान्वये श्लोकादौ तु पदान्नान्वयबोधः। किन्तु योजनावाक्यादिति प्राञ्चः॥ नव्यास्तु आकाङ्क्षादिमत्त्वे सति तात्पर्यज्ञाने व्यवहितेऽप्यन्वयबोधात् तद्विलम्बे विलम्बाच्च तात्पर्यमेवासत्तिः। तच्चैतत्पदमेतत्पदोत्तरमन्वेतीत्यभिसंधातुरिच्छा। एतत्त्रयं ज्ञानहेतुः। मञ्जरीकारस्तु— त्वरया पदजन्यपदार्थोपस्थितिरासत्तिः। सा तु स्वरूपसती हेतुरित्याह। अन्विताभिधानवादिमतेऽन्वयः पदार्थ इति विशेषः॥

वैयाकरणास्तु— पदसमुदायरूपमखण्डवाक्यमेव वक्तृतात्पर्यज्ञानासत्तिसचिव पदविशेषसमभिव्याहारात्मकाकाङ्क्षापरनामकबोधनसामर्थ्यात्मकस्ववृत्ति व्यापारीकृत्य स्वार्थमन्वयं बोधयतीत्याहुः॥ इदमेव युक्तम्॥ गङ्गायां घोष इतिवद् वह्निना सिञ्चतीत्याद्ययोग्यवाक्येऽपि लक्षणया बोधसम्भवेन योग्यताज्ञानस्य तात्पर्यज्ञानपर्यवसन्नत्वाद् आसत्तेः पदगतस्मारकशक्तिरूपत्वाद् आकाङ्क्षाया वाक्यसामर्थ्याऽनतिरिक्तत्वाच्चैतावतैव निर्वाहात् पदस्मरणकरण-

पदार्थकरणपक्षयोर्वाक्यार्थाऽशाब्दत्वादिदोषग्रासात् पदकरणपक्षेऽप्येकेन पदेनान्वयबोधाभावेन पदसमूह एव पर्यवसानाद्वाक्यादयमर्थो बुद्ध इत्यनुभवाच्च। सिद्धान्ते तु– स्वभावत एव सस्वरप्रस्तस्वरैर्वायूपनीतैर्वा ध्वनिभिः श्रोतृकर्णशष्कुलीषु अभिव्यक्त पूर्वोक्तरीत्या निष्कृष्ट वैयाकरणोक्तरीतिकं वाक्यमेव चिरस्थायिना ज्ञानेन हृदि वर्तमानं पदजन्यपदार्थस्मृतिसचिवं वैयाकरणमनाद्या स्वार्थमन्वयम् अनुभावयति। तस्या ज्ञानस्य ज्ञानान्तरादिना स्थूलाऽवस्थातिरोभावेन संस्काराऽवस्थया स्थितौ तद्वाक्यमप्यभिभूतमिव तिष्ठति। उद्‌बुद्धे तु संस्कारे हृद्येव प्रकटं सत् स्वार्थं स्मारयति। वैदिकं कृपाविषयाणा तु सर्वतो भगवन्तमेव सलीलं सहजशक्त्या बोधयतीत्येष सग्रहः॥

नन्वेवं सति वेदस्य सिद्धार्थवाक्यत्वमित्यागतम्। तथाच विधिनिषेधाभ्यां प्रवृत्तिनिवृत्ती नोपपद्येयाताम्। क्रियार्थत्व च जैमिनीयदर्शनसिद्ध विरुद्ध्येत। उन्मार्गवर्तित्वापत्त्या त्रैलोक्यसंकरोऽपि स्यादितिचेन्न।एपउ एव साधु कर्म कारयतित यमेभ्यो लोकेभ्य उन्निनीषति एप उ एवासाधु त यमधो निनीषतीत्यादिश्रुत्या भगवत एव नियामकत्वेन सकराभावात्। जैमिनीयदर्शनस्य मन्दाधिकार्यर्थत्वेन तद्विरोधेऽपि वैयासदर्शनाविरोधेन दोषाभावात्। नच विधिप्रतिषेधानर्थक्यम्। तत्तत्साधनफलनिरूपणमात्रेणैव तयोश्चरितार्थत्वात्॥

ननु प्रवृत्तेः शब्दश्रवणानन्तरभावित्वाच्छब्दस्वरूपस्याभिप्रायज्ञानस्य वा विध्यर्थभूताया भावनाया अभिधाया नियोगस्येष्टसाधनत्वस्य कृतिसाध्यत्वस्य वा ज्ञातस्य प्रवर्तकत्वमुचितम्। एवमेव निवर्तकत्व, न तु भगवतः। शब्दश्रवण विनापि तथा सति प्रवृत्त्याद्यापत्तेरितिचेन्न॥

ध्यातिरिक्ता व्यञ्जना। तेन सुबोधिन्यां, व्यज्यते, व्यज्यत इत्यादिप्रयोगाणां तात्पर्यविषयीक्रियते इत्यर्थो बोध्य इति न किञ्चिदनुपपन्नम्। तस्मादेता एव पदवृत्तयः। तत्प्रतीतीच्छयोच्चारितत्वं तात्पर्यमिति नैयायिकपक्षप्रपञ्चः। द्वैधवृत्तिपक्षे तु तात्पर्यं नाम बुभुत्सितवाचकत्वेऽपि तत्प्रतीतिजनकत्वमेव, न तु तत्प्रतीतीच्छया उच्चारितत्वम्। तेन फललक्षणादिव्यञ्जनान्तानां तात्पर्य एव निवेशात् सुखेन संग्रहः। उक्ता वृत्तय आकाङ्क्षादयश्च ज्ञाता एवोपयुज्यन्ते॥

आलङ्कारिकास्तु— तत्प्रतीच्छया उच्चारितत्वं तात्पर्यम्। तच्च वाक्यवृत्तिः। वाक्यमेवाकाङ्क्षायोग्यताऽऽसत्तिसहकृतं सत् तात्पर्याख्यवृत्तिव्यापारेण स्वार्थमन्वयं बोधयतीत्याहुः। तत्र प्रतीत्यपर्यवसानमाकाङ्क्षा। बाधाभावो योग्यता। पदानां सन्निधिरासत्तिः। अर्थो ह्यनन्वितावस्थः पदेनाभिहितो यतः * अन्विताात्मनोऽवस्थां लक्षितामेव लक्षयेदित्यादौ भट्टवार्तिके तात्पर्यवृत्तिरेव लक्षणापदेनोच्यते। मुख्यार्थबाधाभावेन पूर्वोक्तलक्षणाया वक्तुमशक्यत्वादिति वदन्ति॥

भट्टास्तु— पदज्ञानानां पदार्थज्ञानानां चास्थायित्वात्प्रसेकमन्वयबोधसामग्रीत्वम्। क्रमिकत्वाच्च मिलितानां तथात्वम्। नाप्यन्त्यपदार्थज्ञानकाले पूर्वसंस्कारसहितेन तत्कारणेन जनितस्य सकलपदार्थसमूहालम्बनस्य तत्सामग्रीत्वम्। तद्विशिष्टोपस्थितिं विना विशिष्टवैशिष्ट्यज्ञानात्मकवाक्यार्थबोधानुपपत्तेः। नच गामानयेत्यत्र सुपा स्वार्थबोधनकाले गोविशिष्टं कर्मत्वं बोध्यते। ततो धातुना तादृशकर्मत्वविशिष्टमानयनं तत आख्या। तेन तादृशानयनविशिष्टा भावना बोध्यत इति विशिष्टवैशिष्ट्यज्ञानात्मकवाक्यार्थबोधानुपपत्तिरिति वाच्यम्। नैयायिकमते प्रकृत्यर्थवि-

विशिष्टबुद्धिं प्रति मुञ्जन्योपस्थितेः कारणत्वेन अमजन्यकर्मत्वोपस्थितिकाले गोविशिष्टबुद्धेस्तदनन्तरपदान्तरजन्यकर्मत्वविशिष्टानयनादिबोधकाले च तादृशकर्मत्वादिविशिष्टबुद्धेश्चाऽसम्भवेन वाक्यार्थज्ञानात्मकविशिष्टवैशिष्ट्यबुद्धेरशक्यवचनत्वात्। तस्मादाकाङ्क्षादिसचिवाः समुचितानुपूर्वीविशिष्टपदोपस्थापिताः पदार्था एव वाक्यार्थबोधं जनयन्तीति तादृशाः पदार्था एव सामग्री । नचाख्यापित्यादिकृतानुपपत्तिः । आकृत्यधिकरणे गवादीनां पदानां नित्याकृतिवाचितया अरुणाधिकरणे शुक्लादीनां नित्यगुणवाचितया अभ्यासाधिकरणे समिदादीना यज्यादीनां च यागैकत्वसमिद्यागैकत्वतदनेकत्वपक्षेषु नित्यार्थतया व्यवस्थापनात् । नाप्यन्या । अभिहितान्वयवादिभिरपि प्रकृतिप्रत्ययस्थलेऽन्विताभिधानस्वीकृत्य अमादिप्रत्ययेन कर्मत्वाभिधानकाल एव विशिष्टप्रत्यायनाभ्युपगमात् । नच तथापि धातुना कर्मत्वादिविशिष्टोपस्थित्यऽनङ्गीकारादस्त्येवानुपपत्तिरिति वाच्यम्। वाक्यार्थे निरूढलक्षणाया अङ्गीकारात् तस्याश्च जातिव्यक्त्यादौ युगपदेव शक्यलक्ष्याऽर्थबोधकत्वदर्शनाद् धातुनापि कर्मत्वादिविशिष्टोपस्थितिसम्भवेन वाक्यार्थज्ञानात्मकविशिष्टवैशिष्ट्यबुद्धावनुपपत्त्यभावात् । नच पदधीव्यवधानोत्तरपदार्थजन्यधीसमये पूर्वपदार्थधीर्वर्त्तत इति कथं विशिष्टादिबुद्धिरिति शङ्क्यम् । तत्तत्पदान्त्यक्षणे तादृशधियोऽनुभवमहिम्नैव पूर्वपदार्थज्ञानकारणतायाः संस्कारसाधारणरूपेण स्वीकारात् । नचैवं सति पदार्थज्ञानानामेव कारणत्वं कुतो नाङ्गीक्रियत इति वाच्यम् । अनन्तज्ञानव्यक्तीना हेतुत्वापेक्षया स्वविषयकज्ञानसम्बन्धेनैकव्यक्तिकगोत्वस्यैव गोत्वान्वयबोधकत्वे लाघवात् । ईदृशसम्बन्धस्वीकारेणैव घट करोतीत्यादौ घटकारकत्वादेर्निर्वाहत्वात् । अत एव वाक्यार्थप्रतीतेर्न स्वाप्रतीतिवन्निर्मूल-

त्वम् । तस्मादुक्तरूपाः पदार्था एव ज्ञानद्वारा वाक्यार्थरूपमन्वयं बोधयन्तीत्याहुः ॥

नयायिकास्तु— आकाङ्क्षादिसहकृतं क्रमिकपदानुभवजन्यानेकसंस्कारैर्युगपदुत्पन्नं सकलपदस्मरणमेव युगपत्सर्वपदार्थोपस्थितिद्वाराऽन्वयं बोधयति । तादृशानि पदानि वा तथा । अन्वयस्त्वपदार्थेऽपि संसर्गमर्यादया भासते इत्याहुः॥ आकाङ्क्षादयस्त्वाकाङ्क्षायोग्यतासत्तयः । तत्र पदविशेषसमभिव्याहृतवाक्यगतमन्वयबोधसामर्थ्यमाकाङ्क्षा । संसर्गविरोधिरूपराहित्यं योग्यतेति भवदेवठक्कुराः । यत्पदं यत्पदेन सह यादृशान्वयबोधजनकं तत्पदस्य तत्पदसमभिव्याहारस्तादृशान्वयबोधे आकाङ्क्षा । एकपदार्थे अपरपदार्थस्य प्रकृतसंसर्गवत्त्वं योग्यता । अर्थधर्मः पदेष्वारोप्यते । प्रकृतान्वयबोधाननुकूलपदाव्यवधानमासत्तिः । दूरान्वये श्लोकादौ तु पदान्नान्वयबोधः । किन्तु योजनावाक्यादिति प्राञ्चः ॥ नव्यास्तु आकाङ्क्षादिमत्त्वे सति तात्पर्यज्ञाने व्यवहितेऽप्यन्वयबोधात् तद्विलम्बे विलम्बाच्च तात्पर्यमेवासत्तिः । तच्चैतत्पदमेतत्पदोत्तरमन्वेतीत्यभिसन्धातुरिच्छा । एतत्त्रयं ज्ञानहेतुः । मञ्जरीकारस्तु—वृत्त्या पदजन्यपदार्थोपस्थितिरासत्तिः । सा तु स्वरूपसती हेतुरित्याह । अन्विताभिधानवादिमतेऽन्वयः पदार्थ इति विशेषः ॥

वैयाकरणास्तु— पदसमुदायरूपमखण्डवाक्यमेव वक्तृतात्पर्यज्ञानासत्तिसचिवं पदविशेषसमभिव्याहारात्मकाकाङ्क्षापरनामकबोधनसामर्थ्यात्मकस्ववृत्ति व्यापारीकृत्य स्वार्थमन्वयं बोधयतीत्याहुः ॥ इदमेव युक्तम् ॥ गङ्गायां घोष इतिवद् वह्निना सिञ्चतीत्याद्ययोग्यवाक्येऽपि लक्षणया बोधसम्भवेन योग्यताज्ञानस्य तात्पर्यज्ञानपर्यवसन्नत्वाद् आसत्तेः पदगतस्मारकशक्तिरूपत्वाद् आकाङ्क्षाया वाक्यसामर्थ्याऽनतिरिक्तत्वाच्चैतावतैव निर्वाहात् पदस्मरणकरण-

पदार्थकरणपक्षयोर्वाक्यार्थाऽशाब्दत्वादिदोपग्रासात् पदकरणपक्षेऽप्येकेन पदेनान्वयबोधाभावेन पदसमूह एव पर्यवसानाद्वाक्यादयमर्थो बुद्ध इत्यनुभवाच्च। सिद्धान्ते तु— स्वभावत एव सस्वरमस्वरैर्वायूपनीतैर्वा ध्वनिभिः श्रोतृकर्णशष्कुलीषु अभिव्यक्तं पूर्वोक्तरीत्या निष्कृष्टं वैयाकरणोक्तरीतिकं वाक्यमेव चिरस्थायिना ज्ञानेन हृदि वर्तमानं पदजन्यपदार्थस्मृतिमाचितं वैयाकरणमनाद्यं स्वार्थमन्वयम् अनुभावयति । तस्या ज्ञानस्य ज्ञानान्तरादिना स्थूलाऽवस्थातिरोभावेन संस्काराऽवस्थया स्थितौ तद्वाक्यमप्यभिभूतमिव तिष्ठति । उद्बुद्धे तु संस्कारे हृद्येव प्रकटं सत् स्वार्थं स्मारयति । वैदिकं कृपाविषयाणां तु सर्वतो भगवन्तमेव सलीलं सहजदास्या बोधयतीत्येष संग्रहः ॥

नन्वेवं सति वेदस्य सिद्धार्थवाक्यत्वमित्यागतम् । तथाच विधिनिषेधाभ्यां प्रवृत्तिनिवृत्ती नोपपद्येयाताम्। क्रियार्थत्वं च जैमिनीयदर्शनसिद्धं विरुध्येत । उन्मार्गवर्तित्वापत्त्या त्रैलोक्यसंकरोऽपि स्यादितिचेन्न।एष उ एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु तं यमधो निनीषतीत्यादिश्रुत्या भगवत एव नियामकत्वेन संकराभावात् । जैमिनीयदर्शनस्य मन्दाधिकार्यर्थत्वेन तद्विरोधेऽपि वैयासदर्शनाविरोधेन दोषाभावात् । नच विधिप्रतिषेधानर्थक्यम् । तत्तत्साधनफलनिरूपणमात्रेणैव तयोश्चरितार्थत्वात् ॥

ननु प्रवृत्तेः शब्दश्रवणानन्तरभावित्वाच्छब्दस्वरूपस्याभिप्रायज्ञानस्य वा विध्यर्थभूताया भावनाया अभिधाया नियोगस्येष्टसाधनत्वस्य कृतिसाध्यत्वस्य वा ज्ञातस्य प्रवर्तकत्वमुचितम्। एवमेव निवर्तकत्वं, न तु भगवतः । शब्दश्रवणं विनापि तथा सति प्रवृत्त्यापत्तेरितिचेन्न ॥

उक्तेषु सर्वपक्षेषु व्यभिचारस्य दर्शनात्।
न प्रवर्तकता लोके नापि वेदे फलोन्मुखी॥

तथाहि। न तावत् शब्दस्वरूपं प्रवर्तकम्। शब्दस्य सर्वाऽधिकारिसाधारणत्वेन श्रवणोत्तरं सर्वेषामपि प्रवृत्त्यापत्तेः।नाप्यभिप्रायज्ञानम्। ज्ञातेऽप्यभिप्राये घृणूनां प्रवृत्त्यदर्शनात्। अत एव न भावनादयः। नापीष्टसाधनताज्ञानं कृतिसाध्यताज्ञानं वा। अनिष्टसाधनत्वकृतसाध्यत्वप्रमितावपि विषभक्षणयुद्धाऽऽदिभ्यो निवृत्त्यदर्शनात्। तयोः प्रवर्तकत्वे तद्विपरीतज्ञानेन निवृत्तेरावश्यकत्वात्। तादृशस्थले भ्रमात् प्रवृत्तेर्वक्तुमशक्यत्वात्। तुष्यतु दुर्जनन्यायेन भ्रमात् प्रवृत्त्यङ्गीकारेऽपि तस्य क्वचिदुत्पत्तौ क्वचिदनुत्पत्तौ कारणविमर्शे शब्दस्य सर्वसाधारणत्वेन तत्कारणताया अशक्यवचनत्वेनादृष्टादेरेवाङ्गीकार्यत्वेन व्यापकात्मवादिनां चादृष्टनियमस्यापि दुर्वचत्वेनेश्वरेच्छायामेव पर्यवसानाच्च। नच भगवति वैषम्यादिदोषप्रसङ्गः। आत्मस्पृष्टयुपगमेनैव निरस्तत्वात्। वैषम्यनैर्घृण्ये न सापेक्षत्वादितितु लोकबुद्ध्यनुसारीति भगवानेव प्रवर्तकः। तादृशभ्रमाद्युत्पादकोऽपि स एव। एष उ वेत्यादिश्रुतेः। नन्वेवं सत्यर्थवादानां वैयर्थ्यापत्तिः। प्ररोचनां विनापीश्वरेच्छयैव प्रवृत्तिसिद्धेः। एवं निन्दार्थवादेऽपि। अतो विधिनिषेधाभ्यामेवार्थवादसचिवाभ्यां प्रवृत्तिनिवृत्ती अङ्गीकार्ये। उक्तश्रुतिस्त्वीश्वरेच्छायाः सहकारित्वमात्रं वेदयन्ती न विरोत्स्यत इति चेत्। उच्यते। न ताभ्यां प्रवृत्तिनिवृत्ती सम्भवतः। साधारणत्वात् सर्वेषामेव ततो विहिते प्रवृत्तौ निषिद्धाच्च निवृत्तौ नरकः कस्यापि न स्यात्। तथा सति तद्बोधकशास्त्रवैयर्थ्यापत्तिः। नच सोऽर्थवाद एवेति वाच्यम्। तथापि रोगाद्यनुत्पत्तिप्रसङ्गः। पातकिदर्शनविरोधो राजदण्डादिविषयाभावप्रसङ्ग-

स्तम्भनविधायकशास्त्रवैयर्थ्यापत्तिश्च सर्वथा दुष्परिहरा एवेति न ततः प्रवृत्तिनिवृत्ती ॥

अर्थवादास्तु विधेयनिषेध्यस्वरूपं निरूपयन्ति ज्ञापनार्थम् । ज्ञानस्य कर्माङ्गत्वात् । यदेव विद्यया करोति तदेवास्य वीर्यवत्तरं भवतीतिश्रुतेः । ज्ञात्वा ज्ञात्वा च कर्माणि जनोऽयमनुतिष्ठति * विदुषः कर्मसिद्धिः स्यात् तथा नाऽविदुषो भवेदिति स्मृतेश्च । तत्रापि, वायुर्वै क्षेपिष्ठा देवतेत्याद्युक्तं देवतायाः क्षिप्रकारित्वादिकं वषट्कारो वै गायत्रिया इत्याद्युक्तं खादिरादिस्वरूपमेवमन्यत्रापि तत्तत्प्रकरणोक्ततत्तत्पदार्थस्वरूपं ज्ञात्वैव तत्तत्कर्म कर्तव्यमिति विशेषतः प्रकरणादवगीयते । तथा निन्दादिस्थले यथासम्भवं निषेध्यस्वरूपं ज्ञात्वा न कर्तव्यमित्यादि ज्ञेयम् । तदैव सम्यक् फलसिद्धेः । अतः सर्वसाधनफलस्वरूपनिरूपणमात्रेणैव चेत् प्रवर्तकत्वं निवर्तकत्वं चाङ्गीक्रियते तदा त्वोमिति ब्रूमः । विशिष्यफलमुखं तु तत्र वक्तुमुचितम् । दृष्टादृष्टदोषाणामुक्तत्वात् । तस्मात् प्रवर्तकत्वं निवर्तकत्वं च भगवत एवेति निश्चयम् । नच फलश्रुतिरियं नृणां न श्रेयो रोचनं परम् * श्रेयोविवक्षया प्रोक्ता यथा भेषज्यरोचनमित्यादिषु श्रुतेः प्ररोचकत्वोक्त्या तदेकवाक्यतापन्नस्य विध्यर्थस्य प्रवर्तकत्वमप्यर्थायातमिति न पूर्वोक्तं साधीय इति शङ्क्यम् । प्रवर्तनव्यापारमात्रसत्तायाः एव तावतापि सिद्ध्या फलमुखस्य तस्य प्रतिपादयितुमशक्यत्वात् । वस्तुतस्तु परोक्षवादो वेदोऽयं बालानामनुशासनम् * कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथेत्यादिवाक्यान्तराद् वैद्यके भेषजनिष्ठानां सतामेव गुणानां रोगिणो रोगनिवृत्त्या तदौषधत्यागार्थं यथा कीर्तनं तद्वदत्र कर्मत्यागार्थं कर्मणि सतामेव गुणानां फलकीर्तनमित्यवसीयते । अत एवमभिप्रायवेदकशास्त्रान्तरेऽपि पद्वेदतात्पर्याज्ञानं

तत्र तादृगीश्वरेच्छैव हेतुरिति तद्विपरीतेच्छैव तात्पर्यज्ञानेऽपि हेतुः। तस्माद्विधिनिषेधयोर्न फलमुख्यत्वं, किन्तु द्वारत्वमित्येव निश्चयः। किञ्च वेदस्य तात्पर्यं भगवत्येव, उक्तरीत्या शब्दशक्त्यापि तमेव वदति। एवं सति सर्वरसाप्तकामादिश्रुत्या सर्वत्र सर्वपूर्णोऽपि स्वभावत एव यत्र येन भोगेन यां लीलां कृतवाँस्तत्र तं तादृशं बोधयति। तत्र पूर्वकाण्डे षोडशर्त्विग्यजमानाद्यात्मना यज्ञनाम्ना च या लीला कृता सा सपरिकरा बोध्यते। तच्चैकस्मिन् कर्मणि विरुद्धनानाफलबोधनादवसीयते। यथा सुवर्गाय वा एतानि लोकाय हूयन्त इत्युपक्रम्य दाक्षिणहोमे दक्षिणासंस्कारत्वेन क्रियमाणमाहुतिचतुष्टयम्। तत्राहुतिद्वयस्य, द्वाभ्यां गार्हपत्ये जुहोति द्विपाद्यजमानः प्रतिष्ठित्या इति सख्याफलमुक्तम्। सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोत्यमुमेवैन लोकं समारोहयतीति ऋग्धर्मफलमाग्नीध्र आहुतेरन्तरिक्षाक्रमणमाहवनीय आहुतेः स्वर्गः। तच्च परस्परं विरुद्ध्यते इति न तस्य जीवपरत्वम्। एकदा तदसम्भवादनिष्टजनकत्वाच्चेति तस्य भगवत्परत्वमेवेति, शाब्दस्य हि ब्रह्मण एष पन्था इत्यत्र निर्णीतम्। तेनार्थवादोऽप्यनुभूतार्थवादभेदेन द्विविध एव, न तु गुणवादोऽपि। विरोधस्य भक्ततात्पर्यकत्वेनैव परिहारे तदभावेन गुणवादविभाजकस्याऽभावादिति। अतोऽपि न प्रवर्तकत्वं, किन्तूक्तरीत्या प्रमाणत्वमेवेतिनिश्चयः। तेनाऽननुष्ठानस्य नाप्रामाण्यापादकत्वम्। निष्फलस्यापि न दुष्टत्वम्। उपस्यायास्तु मन्दार्थत्वम्। निन्दायास्तु विधेयस्तुत्यर्थत्वमित्यवधेयम्॥

अथ स्मृत्यादिकं विचार्यते—

तत्र स्मृतिः—ऋषीणां पूर्वचरितस्मरणम्। तत्प्रयुक्तत्वाद् बौद्धवाक्येऽपि स्मृतिपदप्रयोगः। स्मरणस्य चानुभवो मूलम्। स तु पूर्वर्ष्याचारात् तथैव लोकव्यवहाराद् तादृशनीतिशास्त्राच्चित्यानुमेय-

वेदाच्चेति बहुधा जायत इति न सर्वासां वेदवत् प्रामाण्यम् । किन्तु नित्यानुमेयमूलानामेव । तदिदं स्मृतिपादे स्मृत्यधिकरणे एवोपपादितम् । नच तासामुत्सन्नविप्रकीर्णशाखामूलत्वं शङ्क्यम् । सर्ववेदद्रष्टॄणां व्यासादीनां, स्मृतेश्च, अपि वा कर्मसामान्यात् प्रमाणमनुमानं स्यादित्यादिसूत्रप्रणयनविरोधापत्तेः । विद्यमाने प्रत्यक्षवेदे द्व्यन्तरितोदाहरणस्यासङ्गतत्वात् । प्रमाणमुत्सन्नं स्यादित्यादिपाठौचित्याच्चेति निबन्धे व्युत्पादितत्वात् । तदपि प्रामाण्यं, विरोधे त्वनपेक्षं स्यादिति न्यायेन प्रत्यक्षवेदाविरोधेनैव । इतरासां तु तदुभयाविरोधेनैव, वर्णव्यवस्थितधर्मविषये पुराणानामप्येवम् । व्यासस्मृतौ वर्णव्यवस्थितधर्मपक्षे तदुत्तरत्रास्येषु श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते * तत्र श्रौतं बलिष्ठं स्यात् तयोर्द्वैधे स्मृतिर्वरेति व्यासवाक्यात् । इतरत्र तु पुराणमेव प्रबलम् । वेदोपबृंहणत्वात् । इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् * बिभेत्यल्पश्रुताद्वेदो मामयं चालयिष्यतीति वाक्यात् । पुराणं हृदयं स्मृतमिति वाक्याच्च । तथैव वाल्मीकिरामायणभारतयोर्यथायथं समाधिभाषात्वाद्वेदव्याख्यानरूपत्वाच्च ।

सांख्ययोगकाणादाक्षपादवाशिष्ठरामायणादीनां तु संवादांश एव प्रामाण्यमित्येवं ज्ञेयम् । अक्षपादप्रणीते च काणादे सांख्ययोगयोः * त्याज्यः श्रुतिविरुद्धोऽशः श्रुत्येकशरणैर्नृभिरिति पराशरोपपुराणवाक्यात् । एवं तन्त्राणामपि श्रुत्यविरोधेनैव प्रामाण्यमनुसन्धेयम् । इदं यथा तथा महत्सु व्युत्पादितमस्माभिः । प्रत्यक्षाऽनुमानयोरस्त्वतोऽपि नैर्बल्यम् । पूर्वोक्तापेक्षयाऽस्मदादीनामऽविद्यापारवश्याधिक्येनाल्पज्ञत्वात् । अतः शब्दब्रह्मात्मकस्य तुल्यत्वेऽपि भ्रमप्रमादविप्रलिप्सादिपुंदोषदुष्टत्वेन लौकिकानां ततोऽपि हीनं प्रामाण्यम् । तत्रापि सिद्धार्थवाक्यस्य सन्निकृष्टे विषये

प्रत्यक्षसहकारित्वात् प्रत्यक्षहेतुत्वमेव। विप्रकृष्टविषये तु तदानीन्तनार्थसत्तायाः संदिग्धत्वेन सम्भावनात्मकस्यैव ज्ञानस्य ततो जननमिति तादृशमेव प्रामाण्यम्। तथा बालादिवाक्येऽपि। प्रतारकवाक्ये तु श्रोतृविश्वासजाड्यादेव प्रामाण्यं बुद्धिर्न तु शब्दबलात्। द्रष्टुरनाप्तत्वेन तत्र शब्दस्याभावात्। भ्रान्तप्रतारकवाक्येऽपि तथा प्रवृत्तिसामर्थ्ये तु वक्तरि प्रतारकत्वबुद्धयभावाच्छ्रोतुः प्रमेयबलेन प्रामाण्यबुद्धिरिति विश्वासजाड्यकृतत्वं न हीयते। तस्य प्रतारकत्वज्ञानेऽपि प्रवृत्तिस्तु न शब्दस्यैव बलात् किन्त्वननुगतादेव कारणादिति न तथा प्रामाण्यमापादयितु शक्यते। भ्रान्तवाक्यस्य तु शब्दत्वेऽपि वक्तुर्दुष्टत्वात् तज्जन्यज्ञानस्य अप्रामाण्यम्। अतः सिद्धार्थस्य लौकिकस्य गौणमेव प्रामाण्यमिति निश्चयः। साध्यार्थे तु लौकिके वाक्यार्थो बुद्धिकल्पितः। संसर्गिण्याः क्रियायास्तदानीमभावेन तत्संसर्गस्याप्यभावात्। अतो वक्तुरदृष्टार्थत्वादित्वेन तद्वाक्यस्याप्रामाण्येऽपि प्रवृत्तिसामर्थ्यात् प्रमेयबलेनैव प्रामाण्यम्। तस्मात् सकलप्रमाणमूर्द्धन्यता वेद एव। तदर्थनिश्चयश्च तपआदिभिः, सन्देहवारकस्मृतिपुराणमीमांसादिभिश्च। अतो गौणमुख्यभावस्य सत्त्वाद् वेदे सन्देहे भगवद्गीतावाक्यैर्निर्णयः। तत्र सन्देहे व्याससूत्रैस्तदविरुद्धैर्जैमिनीयैश्च। तत्रापि सन्देहे श्रीभागवतेन समाधावनुभूय भगवदवतारेण व्यासेनोक्तत्वात्। एतेषामितरेतरविरोधे यः कश्चिदर्थः स्वबुद्ध्यादिना भासते सोऽर्थाभास इति तद्वाक्येऽप्याभासत्वमापादयतीति चतुर्णामेकवाक्यतायामेव त्रिविदिपादन्नायां प्रामाण्यमिति निश्चयः। विद्वद्दशाया तु सर्वं वाङ्मयं वेदतुल्यमेव। तच्च प्रागेवोपपादितम्। तथा पुरुष एवेदꣳ सर्वं स आत्मानꣳ स्वयमकुरुतेत्यादिश्रुतिभ्यः। आत्मैव तदिदं सर्वं सृज्यते सृजति प्रभुः * त्रायते त्राति विश्वात्मा-

ह्रियते हरतीश्वर इत्याद्युपबृंहणेभ्यश्चार्थमात्रस्य भगवद्रूपत्वम् । एवं सति क्रीडार्थमवयववैलक्षण्यादिना ततस्ततो रूपभेदस्येव तादृशतत्तद्रूपप्रसाधनार्थमस्मदादिमुखेन नानावाक्यभेदस्यापि भगवतैव करण त् सर्वस्यैव प्रामाण्येन च निराकाङ्क्षायोग्यवाक्यानामपि दर्शनाद् दुष्टानां कथं वेदतुल्यत्वमिति शङ्कनीयम् । आकाङ्क्षादीनामर्थप्रसाधनार्थं कल्पितत्वेन तदभावेऽपि वाक्यस्यादुष्टत्वात् । एतेनैवाकाङ्क्षाद्यभावे अवाक्यत्वमित्यपि निरस्तम् । वस्तुतः सर्वस्य भगवद्रूपत्वादप्रतारकोक्तानां दशदाडिमानीत्यादीनामनाकाङ्क्षाणां पदार्थनिरूपकत्वेन, वह्निरनुष्ण इत्यादीनामपि तत्तद्रूपभगवन्निरूपकत्वेन, वह्निना सिञ्चतीत्यादीनामयोग्यानां च कर्तुमकर्तुमन्यथाकर्तुं भगवतोऽलौकिकसामर्थ्याद्वह्निरूपस्यापि सेककरणतायाः संभवेन प्रामाण्यस्याबाधात् । व्यवहारेऽपि शैत्यपावनत्वादिप्रतीत्यर्थं गङ्गायां घोष इत्यादिवत् सेचकपौरुष्यप्रतीत्यर्थं वह्निपदस्य तद्द्वारिलक्षकत्वेन च तदबाधात् । अतो निर्दुष्टशास्त्रे अप्रतारकोक्तवाक्यानां प्रामाण्यं पूर्णदशायां क्वापि नाप्रामाण्यमिति शब्दः सर्वोऽपि वक्तृदोषान्यथाकारेण प्रमाणमेवेति सिद्धम् । तेन, अत्यन्तामसत्यपि ज्ञानमर्थे शब्दः करोति हीत्यभियुक्तोक्तिः प्रतारकादिवाक्येऽपि शब्दः पदार्थमात्रमपेक्ष्य ज्ञानं जनयतीत्येतावन्मात्रपरा बोध्या । अतः शाब्दं ज्ञानं च शब्दत्वेन शब्दजन्यपरोक्षनिश्चयरूपमेव । धर्मसादृश्यजसंस्कारविलक्षणसंस्कारजनकत्वाच्च नानुमित्यादावन्तर्भावः ॥

केचित्तु वाक्यार्थप्रतीतिर्नानुभवः । स्वर्गनरकादिकं शृण्वतोऽपि तदनुभवामीति प्रतीत्यभावात् । किन्तु स्मृतित्वादिव्याप्यमन्यद्वा शाब्दत्वादिकं जातिरनुभवत्वादित्याहुः ॥ तन्न रोचते ॥ अनुमित्यादावप्यनुमिनोमीत्याद्यनुभवात्तस्याप्यनुभवभिन्नत्वापत्तेः ।

नचेष्टापत्तिः। स्मृतित्वव्याप्यभागमकव्याप्यभावात् । प्रकारान्तरीयत्वेऽप्यस्मदाद्यनुभवापेक्षया पुराणवाक्यस्यैव प्रबलत्वेन संशयादिप्रतिबन्धे निश्चयत्वव्याप्यतायाएव युक्तत्वात्। यत्तु दशमस्त्वमसीति वाक्याद्दशमोऽहमित्याकारकं प्रत्यक्षं केचिदङ्गीचक्रुः। तदपि शब्दे युष्मत्पदप्रयोगेण तज्जन्ये ज्ञाने अहमित्याकारस्य वक्तुमशक्यत्वात् । पदजन्यपदार्थोपस्थितेः शाब्दबोधे तन्त्रत्वाद् युष्मत्पदेन स्वार्थविरुद्धमत्वत्वस्य उपस्थापयितुमशक्यत्वात् । अन्यथाऽतिप्रसङ्गापत्तेः। नच तत्र विपरीतलक्षणयैवोपस्थितिरिति युक्तम्। तथा सति परोक्षज्ञानस्यैवापत्त्या प्रतिज्ञाव्याघातात् । किञ्चात्माऽहम्पदेन प्रत्यक्षं संघातस्य, तद्विशिष्टस्य, विविक्तस्य वाऽऽत्मनोऽभिमतम् । नाद्यो । अपेक्षाबुद्धया संघात एव दशमत्वजननात् संख्याज्ञानस्य पूर्वं विद्यमानत्वाबानन्तरस्य शब्दसाहचर्येण चक्षुषा मनसा वा द्राक् तत्रैव दशमत्वस्य स्फूर्तेस्तद्दशमप्रत्यक्षे शब्दकरणताया अशक्यवचनत्वात् । नान्त्यः । प्रतीतिविषये बहिरिन्द्रियाणामप्यसामर्थ्येन तदुपजीवकस्य लौकिकस्य शब्दस्य सुतरामसामर्थ्यात् तत्र प्रमेयबलादेव ज्ञानाङ्गीकारे न्यायसाम्यादन्यत्र करणान्तरेण तदापत्तेः । तथा सति मर्यादाभङ्गापत्तेः । शब्दस्याप्यकारणत्वापत्तेश्च । करणाभ्युपाययोर्विद्यमानत्वेन साध्यार्थवात्स्यादपि घटानयनादिरूपस्यार्थस्य प्रत्यक्षतापत्तेश्च । किञ्च । चीत्कारादिना गजोऽनुमीयते। यदि तेन प्रत्यक्षं स्यात् तदाकृतिपरिमाणादेरपि साक्षात्कारः स्यात् । परस्परात्यन्ताभावसमानाधिकरणयोः प्रत्यक्षत्वपरोक्षत्वयोरत्र साङ्कर्यात् तयोर्जातित्वहानिप्रसङ्गश्च । तस्माच्छब्देन परोक्षमेव भवतीति निश्चयः ॥

एवं शब्दविचारे ये विशेषास्तेऽत्र बोधिताः ।
शेषं व्याकरणाज्ज्ञेयं यतस्तन्मतमादृतम् ॥ इति शब्दः समाप्तः॥

अथ प्रत्यक्षं निरूप्यते ॥ इन्द्रियात्मकं प्रमाणं प्रत्यक्षम्। दोषदुष्टेन्द्रियवारणाय प्रमाणमिति। शब्दादिवारणायेन्द्रियेति। तानि चक्षुस्त्वग्घ्राणरसनश्रवणमनोभेदेन षट्। यत्तु मनो नेन्द्रियम्। इन्द्रियेभ्यः परा ह्यर्था ह्यर्थेभ्यश्च परं मनः, मनः सर्वेन्द्रियाणि चेत्यादिश्रुतौ भेदानिर्देशात्। मनःषष्ठानीन्द्रियाणि इति भगवद्वाक्यं तु यजमानपञ्चमा इडा भक्षयन्ति, वेदानध्यापयामास महाभारतपञ्चमानित्यादौ यथाऽनृत्विजो यजमानस्यावेदस्य महाभारतस्य च पञ्चत्वसङ्ख्यापूरकत्वं तद्वन्मनमः षट्त्वसङ्ख्यापूरकत्वेनाप्युपपद्यत इति केचिदाहुः। तन्न। इन्द्रियाणां मनश्चास्मि इत्यस्य विरोधात्। नचेदं विभूतित्वमात्रगमकम्। नक्षत्राणामहं शशी, ज्ञानं ज्ञानवतामहमित्यादिवत्। न तु तज्जातीयत्वस्यापीति वाच्यम्। बाधकाभावात्। उक्तश्रुतेरुत्कर्षमात्रपरत्वेनाप्युपपत्तेः। शशिनि नक्षत्रव्यवहाराज्ञाने च तद्वाच्यव्यवहारस्याऽदर्शनात् तत्र तन्मात्रपरत्वेऽप्यन्यत्र तथा वक्तुमशक्यत्वात्। न च विनिगमनाविरह। मायपाठेनैव निर्णयात्। इन्द्रियाणि दशैकं चेति वाक्याच्च। नचेदं दशोत्तरमिति वाच्यम्। अत्र तथा वक्तुमऽशक्यत्वात्। तथा सतीन्द्रियेभ्यः पूर्वं महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च * इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचरा इति पूर्वार्द्धे बुद्ध्या सहैव क्रमः स्यात्। हस्तादिसूत्रे प्राणगणनायां भगवता व्यासेनाप्यङ्गीकाराच्च। यद्वा इन्द्रियत्वमानिन्द्रियत्वं चेत्युभयमप्यस्तु। क्रियाज्ञानमयत्वेन। यमे देवत्वपितृत्वयोरिवोभयोर्निवेशोऽपि बाधकाभावात्। इन्द्रियत्वस्याजातित्वात्। न च भावाभावविरोधः। धर्मान्तरत्वस्याप्युपगन्तु शक्यत्वात्। नं चानिन्द्रियत्वे क्रमविरोधः शङ्क्यः। उत्कर्षमात्रार्थमेवानिन्द्रियत्वादरणादिति दिक्॥

एतेषामिन्द्रियाणां स्वरूपं त्वणुत्वमतीन्द्रियत्वमित्यं चिरस्थायि विकारि चेत्यग्रे प्रमेयप्रकरणे वक्तव्यमिति सांप्रतं तद्योग्यविषयादिकमेवोच्यते । प्रमाणविभागज्ञानार्थत्वात्। तत्र चक्षुर्योग्याः उद्भूतरूपं तद्वानुद्भूतरूपवत्त्वमात्रवृत्तयः । संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्ववेगाः । कर्म च तदीयं तेषां जातिस्तत्समवायश्चेति । स्नेहद्रवत्वे तु त्वग्ग्राह्ये इति वक्ष्यते । मात्रपदं वायुघटसंयोगादिवारणाय । आकाशस्य तु न संयोगः।प्रमाणाऽभावात् । तस्य स्पर्शोऽन्तर्भावस्य वक्ष्यमाणत्वेन तत्र तदभावाच्च । समवायपदमत्र तादात्म्यवाचकं ज्ञेयम् । तत्र द्रव्यचाक्षुषत्वावच्छिन्नं प्रत्युद्भूतरूपवत्त्वेन योग्यता। अतः परमाणुपिशाचादीनामुद्भूतरूपाभावेनैव चक्षुषा अग्रहः । न तु महत्त्वसामानाधिकरण्यमपि तत्र निवेशनीयम् । अप्रयोजकत्वात् परमाणूद्भूतरूपसत्त्वे युक्त्यभावादिति । एवं द्रव्यगतधर्मचाक्षुषत्वावच्छिन्नं प्रत्युद्भूतरूपवत्त्वमात्रवृत्तित्वेन योग्यता। धर्मगतजात्यादिचाक्षुषं प्रति योग्यद्रव्यवृत्तिवृत्तित्वेन सा बोध्या । उद्भूतत्वं चाविर्भूतत्वम् । अनुद्भूतत्वं च तिरोभूतत्वमिति च ग्रहणे पूर्वं रूपस्य ग्रहणम् । मुख्यतया तस्यैव विषयत्वात् । ततो द्रव्यादीनां रूपद्वारकमिति बोध्यम् ॥ बौद्धास्तु रूपाद्यतिरिक्तं द्रव्यं नेच्छन्ति। तत्त्वागमप्रायेषु रूपादिषु स्थिरत्वेन घटादेरनुभूयमानत्वादेव निरस्तम् ॥

अथ त्वग्योग्याः— उद्भूतस्पर्शस्तद्वानुद्भूतस्पर्शवत्त्वमात्रवृत्तय उक्तगुणादयस्तेषां जातिस्तत्समवायश्च । नच वायुर्नाणुपरिमाणं च त्वचा न गृह्यते इति वाच्यम् ।वायुर्वाति स्वल्पो वायुर्महान् वायुरित्याद्यनुभवापलापप्रसङ्गात् । एवं घ्राणयोग्याः— उद्भूतो गन्धस्तद्वाँस्तज्जातिस्तत्समवायश्च । एवं रसनायोग्या उद्भूतो रसस्तद्वाँस्तज्जातिस्तत्समवायश्च । श्रोत्रयोग्या उद्भूतः शब्दस्तद्वाँस्त-

ज्जातिश्चेति। अन्ये तु—घ्राणरसनश्रवणानां द्रव्यग्राहकत्वं नेच्छन्ति। तन्नास्माकं रोचते। तमसि रसनया दुग्धादेर्घ्राणेन चम्पकादेः श्रवणेन भेर्यादेरनुभवस्य व्याप्तिज्ञानविधुराणामपि दर्शनात्। अनुव्यवसायविरोधेन स्मृतिस्वरूपस्य तत्र वक्तुमशक्यत्वात्। नचोपनीतभानं तदिति वाच्यम्। तथात्वे मानाभावात्। घ्राणादीनां द्रव्याग्राहकत्वस्याभ्युपगमैकशरणत्वादिति दिक्॥

तेनोद्भूतनत्तद्गुणा पृथिवी पञ्चेन्द्रियाणां योग्या, तादृश्य आपो घ्राणव्यतिरिक्तानां चतुर्णाम्। तादृशं तेजो घ्राणरसनभिन्नानां त्रयाणाम्। तादृशो वायुस्त्वक्श्रवणयोर्द्वयोः। आकाशस्तु प्रमेयबलादेव चाक्षुषः। उद्भूतशब्दस्तु श्रावणोऽपि प्रतिध्वनिश्रवणेन गर्भगृहाद्याकाशावगमात्। दिक्कालौ तु ग्राह्यार्थविशेषणतयैव गृह्येते, न साक्षात्। मनसस्तु कार्यादयो वृत्तय एव मनोग्राह्याः। आत्मा तु केवलः शास्त्रीयसाधनमन्तरेण न प्रत्यक्षस्तथा तद्धर्मश्च। किञ्च, केवलात्मा लौकिकप्रत्यक्षाविषयः। विभुत्वात्। आकाशादिवत्। स्वात्मा लौकिकप्रत्यक्षायोग्यः। आत्मत्वात्। परात्मवदित्यन्वयव्याप्त्या तन्निश्चयात्। सिद्धान्ते तु, यम्न स्पृशन्ति न विदुर्मनोबुद्धीन्द्रियासव * इति वाक्यात्तथा। अणुत्वात् परमाणुवदित्यनुमानाच्च। अहम्बुद्धिस्तु पटावृतघटबुद्धिवदहङ्कारसंसर्गद्वारिका व्यवहारोपयोगित्वात् प्रमाभासरूपैव। अहंतादात्म्यभावेन भ्रमरूपत्वात्। यं न स्पृशन्ति न विदुर्मनोबुद्धीन्द्रियासव इति वाक्ये मनसोऽसमर्थादिकथनाच्च। आकाशप्रतीतिस्तु प्रमेयबलादेव। तमःप्रतिबिम्बगन्धर्वनगरेन्द्रजालादिप्रतीतिरपि पदार्थस्वभावादेवेति न तत्र कार्यकारणभावान्तरापेक्षा। नाऽपि तामसेन्द्रियस्य। अन्धकारस्थघटादिषु तु नृचक्षुःप्रतिभया तमोजननात् तदेव विषयीक्रियते, न तु विषयः। तदावृतत्वात्। एतच्च विषयालोके

संयोगस्य सहकारिताऽपि न कल्पनीया। अभास्वर इत्यचाक्षुषत्वा-वच्छिन्न प्रति दूरत्वन्यवधानाभावादिति विशिष्टस्य विषयतयैव निर्वाहात्। यथा हि भानोरुदये नृचक्षुषां तमो निहन्यान्न तु तद्विभक्त इति वाक्ये भगवता सूर्योदयस्य नृचक्षुःसम्बन्धि तमोनिवारकत्वेनैव कथनेनालोकसंयोगस्य विषयादिसंस्कारकताया विरुद्धत्वात्। एवं-च्च उलूकबिडालादीनामालोकसंयोगाभावे वस्तुचाक्षुषमप्यनुकूली-भवति। तमस्तु पदार्थान्तरमेव न तेजोभावः। अन्धकारोऽस्त्रिया ध्वा-न्तमित्यादिनामपाठात्। ध्वान्ते गाढेऽन्धतमसमित्यादिभेदपाठात्। छूतरूपं तु तमसा वायौ ज्योतिः प्रलीयते, स्वतेजसाऽपवर्तीत्यमा-स्यमस्त्रापनं तम इति वध्यघातकविरोधकथनाच्च। विशेषस्त्वन्ध-कारवादेऽस्माभिः प्रपञ्चित इति नेह प्रतन्यते। तथा प्रतिबिम्ब-स्यापि पदार्थान्तरत्वं तद्वादादेवावसेयम्। तन्न्यायेन गन्धर्वनग-रादेरपि मायिकत्वस्य सर्वत्र तुल्यत्वं च। अभावस्तु कारणे आ-विर्भावतिरोभावयोश्च यथासम्भवमन्तर्भवतीति तद्ग्राहकसामग्र्यैव गृह्यते। कथमन्तर्भाव इतिचेदुच्यते। प्रागभावध्वंसौ समवाय्यव-स्थाविशेषरूपौ तिरोभावसहकृता कार्याविर्भावानुकूलावस्था प्रा-गभावः। तादृशी कार्यस्थितिप्रतिकूलावस्था ध्वंस इति तदतिरेके मानाभावात्। नचेह कपाले घटो नास्तीति प्रतीतिरेव तत्र मान-मिति वाच्यम्। तस्या घटत्वावच्छिन्नप्रतियोगिताकाभावविषयत-या घटसंसर्गाभावसामान्यत्वेन प्रागभावात्मकविशेषानवगाहित्वात्। नापीह कपाले घटप्रागभाव इति प्रतीतिस्तत्र मानम्। तस्या एवा-ऽभावात्। तथा आग्रहेऽप्यसार्वजनीनत्वेन प्रतिवाद्यनादरणीय-त्वात्। किञ्चानया प्रतीत्या आपाद्यमानः प्रागभावः किं सकल-घटप्रतियोगिक एक उत यत्किञ्चिद्घटप्रतियोगिको नैकः। नाद्यः। तस्य प्रतियोगिनाश्यत्वोपगमाद् यत्किञ्चिद्घटोत्पत्तावपि तन्नाश-

सम्भवे इदानीमत्र कपाले घटो नासीदानीमत्र घटप्रागभाव इति प्रतीतिबाधापत्तेः। नच सकलप्रतियोगिनाश्यः स इति वाच्यम्। तथा सत्येकस्मिन् घटे उत्पन्नेऽपि तत्प्रागभावनाशात्तदवयवत्वेन प्रतीयमानेषु कपालेष्वप्ययं घटो नास्ति, अत्रैतद्घटप्रागभाव इति प्रतीत्यापत्तेः। नच प्रतियोगिमत्तया प्रतिबन्धान्न दोष इति वाच्यम्। तथा सति प्रागभावप्रतियोगिनोरेकत्र स्थितौ सकलप्रतियोगिनाश्यत्वस्यापि अयुक्तिमत्त्वात्। प्रतियोगिनां नश्वरत्वेन साकल्यस्याप्यशक्यवचनत्वात्। एवं नाशकानिर्वाच्यत्वे विनाश्योऽभावः प्रागभाव इति लक्षणासम्भवापत्तेश्च। नच गन्धाद्यनधिकरणकालवृत्त्यभावत्वस्य अदृष्टत्वावच्छिन्नानधिकरणकालवृत्त्यभावत्वस्य वा तल्लक्षणस्य सत्त्वान्न लक्षणासम्भव इति वाच्यम्। सृष्टिपूर्वदशायां जन्यज्ञानसामान्याभावेन ज्ञातुरभावात् तदा तत्सत्त्वस्याप्रामाणिकत्वेनानवसरपराहतत्वात्। ईश्वरः पश्यतीतिचेत्। तर्हि तदाज्ञया मंस्यामो, न भवद्वाचेति दिक्॥ न द्वितीयः। अभावज्ञानस्य धर्मिप्रतियोगिज्ञानाधीनतया तदानीं प्रतियोगिज्ञानाभावेन तत्प्रागभावस्य ज्ञातुमशक्यत्वात्। घटत्वेन रूपेण प्रतियोगिज्ञानाङ्गीकारे प्रागभावस्यापि सकलप्रतियोगिसामान्यतायां पूर्वविकल्पीयदूषणापत्तेः। नच घटत्वादिरूपसामान्यलक्षणप्रत्यासत्त्या भाविविषयकालौकिकज्ञानस्य संस्कारवशादुपनीतभानस्य वा शक्यवचनत्वान्नैवमिति वाच्यम्। अनुभवाभावेन भाविघटविषयकसंस्कारस्याभावेनोपनीतभानस्याशक्यवचनत्वात्। अलौकिकज्ञानपक्षेऽपि पूर्वं सकलघटादिविषयकतादृशज्ञानोत्तरं प्रागभावस्य प्रतियोगिनाश्यत्वानुसन्धानाद्विरोधप्रतिसन्धाने तत्सङ्कोचनीयम्। पूर्वं तादृशप्रतिसन्धाने संकुचितमेव तदुत्पद्यत इति वा वक्तव्यम्। तदुत्तरं च भाविघटीयप्रागभावज्ञानं वक्तव्यम्। तथा

सत्यात्माश्रयः। भावित्वस्य प्रागभावघटितत्वाद्यपदि च वर्तमान-कालोत्तरकालवर्त्युत्पत्त्याश्रयत्वं भावित्वमित्युपेयते तदा तु प्रागभावाप्रतीतिरेव। एतेनैव घटो भविष्यतीति प्रत्ययेनापि तत्प्रतीतिरप्यपास्ता। भविष्यता प्रत्ययस्य तेनैव सम्भवात्। नाप्यनुमेयत्वम्। तथाहि। कपालं घटप्रागभाववत्। घटीयचरमसामग्रीमत्त्वात्। यो यच्चरमसामग्रीमान् स तत्प्रागभाववान्। घटीयचरमसामग्रीविशिष्टतन्तुतदिसादिषु प्रयोगेषु प्रागभावरूपसाध्यतावच्छेदकावच्छिन्नसाध्यामसिद्ध्या अनुमानासम्भवादिति। अतस्तद्ग्राहकमानाभावात् सामयिकात्यन्ताभावेनापि प्रतीतिनिर्वाहाच्च न प्रतीत्यादिना तत्सिद्धिः। ननु माऽस्तु प्रतीत्यादिना तत्सिद्धिस्तथापि घटत्वेन कपालत्वेन सामान्यकार्यकारणभावे सत्यप्येतेभ्यः कपालेभ्य एतद्घटोत्पत्तौ कपालत्वेन नियमासम्भवादेतत्कपालत्वेन नियमाङ्गीकारे च विनिगमनाविरहाद् बहुकपालजन्ये घटे गौरवग्रासाच्च तद्देशनियामकः कश्चिद्वक्तव्यः। तादृशश्च भावाभावयोर्मध्ये न प्रागभावादन्य इति तद्देशनियामकतया प्रागभावः सेत्स्यतीतिचेन्नैवम्। सत्कार्यवादे कारणे सत एवाभिव्यक्तेः कारणादेव देशनियमसम्भवेन तथा सिद्धेरभ्युपगमैकशरणत्वात्। बहुकपाले घटेऽपि समुदायस्यैव कारणत्वेन गौरवाभावात्। उत्तोभाविनोऽप्यभावेन तत्कालवैशिष्ट्यस्यावश्यकतया तेनैव निर्वाहाच्च। नच प्रागभावानङ्गीकारे उत्पन्नस्य पुनरुत्पत्तिप्रसङ्गः। कालोपाधीना क्रमिकत्वेन तद्वैशिष्ट्यतिरोभावकृतसामग्रीविघटनादेव तदभावसिद्धेः। अतो नैवमपि प्रागभावसिद्धिः। नच यत्र पक्वे घटे स्पर्शरूपरसगन्धाना पाकजानामुत्पत्तिस्तत्र कारणस्य कालवैशिष्ट्यस्य च साधारणत्वात् तादृशस्पर्शादिप्रागभावं विना न निर्वाह इति शङ्क्यम्। तादृशविपरिणामस्य पाकसहकृतस्पर्शा-

नचेतरतिरोभाव एव घटपटाद्याविर्भाव इति वाच्यम् । तस्य व्याप्यवृत्तित्वे घटाप्रतीतिप्रसङ्गात् । अव्याप्यवृत्तित्वे तस्यापि तिरोभावान्तरं कल्पनीयमिति कल्पनागौरवात्। अतो भावमुखप्रतीतेः, आविर्भावतिरोभावौ शक्ती वै मुरवैरिण * इति वाक्याच्चाविर्भावाभ्युपगमस्यावश्यकत्वादनागतातीतयोः कारणवदविविक्तौ विवक्षितवस्त्वाविर्भावतदितरतिरोभावावेव पृथक्त्वं, तस्य भावप्रतीत्याधिक्याच्चाविर्भावविशेषत्वम् । तेन पृथक्त्वग्राहकसामग्र्यैव तद्ग्रहः ॥

अतः परमत्यन्ताभावोऽवशिष्यते । स तु तिरोभाव एव। इह भूतले घटो नास्तीत्यादिप्रतीतेस्तिरोभावावगाहित्वात् । तिरोभाव एव हि नास्तीतिव्यवहारदर्शनात् । घटाभावाभावस्य घटात्मकत्वेन सङ्कीर्णत्वेऽप्यभावमुखप्रतीत्या तिरोभावत्वाव्यभिचारात् । अभावपदेनापि भावप्रतियोगिकपृथक्त्ववानेव प्रतीयते, न भावः । अभाव इति भावभिन्नः अभाव इति । स च निषेधपूर्वको भाव एव । अन्यथा असत्त्वात् । खपुष्पवन्निःस्वभावः स्यात् । तथा सति न प्रतीयेतैव । अतः प्रतीत्यनुरोधाद्भावान्तरविलक्षणस्तिरोभावशक्तिरूप एव सिद्ध्यति । तस्मान्नाभाव एभ्योऽतिरिक्तः । तत्रात्यन्ताभावः केवलतिरोभावात्मा प्रतियोगितद्व्याप्येतरप्रतियोगिग्राहकसामग्र्यैव गृह्यते । सामग्री—— पूर्वोक्तेन्द्रियाणि तद्व्यापाराश्च । तत्रेन्द्रियाण्युक्तानि । तेषां व्यापारो विचार्यते प्रत्यासत्तिरूपः।स तावल्लौकिकालौकिकभेदेन द्विधा । तत्रालौकिकस्त्रिधा । सामान्ययोगजमायाभेदात् । तत्र सामान्यमनुगताकारेण तद्व्यक्तिज्ञान उपयुज्यते।तस्य तथात्वं चानुभवसिद्धम् । द्वितीयोऽनागतातीतातीन्द्रियादिवस्तुसाक्षात्कारे । भगवद्ध्यानादेरप्यत्रैव निवेशः । तृतीया त्वविद्यमानानां पदार्थानां बुद्धावुपस्थापने ।

अत एव नैयायिकानां ज्ञाने प्रत्यासत्तिभ्रमः । एतयोश्च तथात्वं शास्त्रसिद्धम् । अनागतमतीतं च वर्तमानमतीन्द्रियम् * विप्रकृष्टं व्यवहितं सम्यक् पश्यन्ति योगिनः ॥ यदद्वयानुध्यानसमाधिधौतया धियानुपश्यन्ति हि तत्त्वमात्मनः *।भक्त्या मामभिजानाति, तपसा ब्रह्मविजिज्ञासस्व, ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि * तद्विद्यादात्मनो मायामित्यादिवाक्यात् । लौकिकस्तु पञ्चविधः—संयोगः, तादात्म्यं, संयुक्ततादात्म्यं, संयुक्तविशेषणता, तादात्म्यं स्वरूपं चेति भेदात् । तत्र चक्षुषा द्रव्यग्रहे संयोग एव प्रत्यासत्तिः ।केचित्तु— इतरेन्द्रियवैलक्षण्याच्चक्षुषोऽप्राप्यप्रकाशकारित्वं स्वीकृत्य दूरत्वव्यवधानाभावसहकृतयोग्यतामात्रेण प्रतीतिनिर्वाहात् तत्संयोगं न स्वीकुर्वन्ति। अन्ये तु— नेत्रेन्द्रियगोलकस्य स्वच्छत्वेन तत्र वस्तुनः प्रतिबिम्बे सति योग्यतामात्रेण मायाद्वारिकां प्राप्तिं स्वीकृत्य संयोगस्य द्वारत्वं खण्डयन्ति । तदुभयमप्यसङ्गतम् । भगवता संयोगस्वीकारात् । चक्षुस्त्वष्टरि संयोज्य त्वष्टारमपि चक्षुषि * तत्र मां मनसा ध्यायन् विश्वं पश्यति दूरत इत्येकादशे भगवद्वाक्यात् । अत्र तत्तत्प्रतियोगिकसंयोगद्वयनिरूपणेन योग्यता, प्रतिबिम्बपक्षाऽनङ्गीकारात् । दूरे घटं पश्यामि, निकटे हरिं पश्यामीत्यादिसार्वजनीनाबाधितप्रत्ययाच्च । निविडतमःकाचाद्यन्तरितोपलब्धिस्तु अग्नेः स्थालीभेदकत्ववच्चक्षुःकिरणानां स्वच्छकाचादिभेदकत्वादपि सङ्गच्छते ।अत एव गोलकस्य सच्छिद्रताऽपि निरस्ता ज्ञेया । ध्रुवादिविषयपर्यन्तं गतानां पुनरन्तःप्रवेशस्तु मनस इव वेगादपि सम्पद्यते । एवं दूषणान्तरमपि निरसनीयम् । अस्य शास्त्रस्याकाल्पनिकत्वात् । प्रतिबिम्बस्त्वदृष्टवारितत्वाद्भवति । तेन मायापि प्रत्यायपतीति चक्षुषा भूयो ज्ञानमुत्पद्यते । तेजःसंयोगबाहुल्य इवेति न तस्य गतार्थता । अत

एव इन्द्रियान्तरापेक्षया चक्षुषा भूयो ज्ञानमपि युज्यते। तस्मादस्ति चक्षुषः संयोगो द्रव्यग्रहणे व्यापारः। स एव योग्यगुणक्रियाजातिसाक्षात्कारेऽप्युपयुज्यते। तेषां वस्तुतो द्रव्याभिन्नत्वात्। संयुक्ततादात्म्यं वाऽस्तु। एवं त्वग्घ्राणरसनग्रहणेऽपि ज्ञेयम्। श्रोत्रेण शब्दग्रहणे तु संयोग एव व्यापारः। शब्दो हि वायुना उपनीतः श्रोत्रपर्यन्तं यदा आयाति तदा श्रोत्रावच्छिन्नत्वचा वाहकवायुसंयोगे तमेव संयोगं व्यापारयित्वा श्रोत्रेन्द्रियेण शब्दो गृह्यते। शब्दग्राहकसामग्रीप्राबल्येन संयोगाश्रयस्य वायोरप्रत्यक्षत्वान्न तस्य संयोगस्य ग्रहणम्। संयोगग्राहकसामग्रीप्राबल्ये तु संयोगस्यापि ग्रहणम्। यथा कर्णाभ्यर्णमागतस्य वार्ताश्रवणे वक्तृमुखवायुसंयोगस्य। अभावे विशेषणतैव, शब्दग्रहे संयुक्तवायुगशब्दस्वरूपमेव वा द्वारम्। मनसस्तु बहिर्विषये स्वसंयोगद्वारक इन्द्रियसंयोगादिः। स्वधर्माणां ज्ञानसुखादीनां ग्रहणे तादात्म्यम्। वृत्तीनां ग्रहणे तु वृत्तिस्वरूपमेव द्वारम्। तिरोभावस्तु इन्द्रियसंयुक्तविशेषणतया गृह्यते॥

पार्थसारथिमिश्रास्तु— वस्तुमात्रं सदसदात्मना द्विविधम्। तत्र यद्यदा यत्र सद्रूपेण वर्तते तत् तत्र तदा प्रत्यक्षादिभिरस्तीति प्रमीयते। यदा त्वसद्रूपेण वर्तते तदा सद्रूपबोधकानां प्रत्यक्षादीनामकिञ्चित्करत्वाद्योग्यानुपलब्धिरूपेण तद्वस्तु नास्तीति प्रमीयते। तस्माद्योग्यानुपलब्धिरूपप्रमाणान्तरगम्य एवाभावः। योग्याऽनुपलब्धिश्च स्वरूपसती कारणं, न तु ज्ञानमपि तस्या अपेक्षितम्। तस्या अपि प्रमेयत्वात् प्रमाणापेक्षायामनवस्थापत्तेः। नचान्धकारे हस्ताभ्यां वस्तुनः सर्वतः परामर्शे जातायामपि योग्यानुपलब्धौ किं कश्चिद्देशोऽवशिष्ट इति सन्दिहानस्य वस्त्वभावबुद्ध्यनुदयात् कदाचिदपरामृष्टस्यापि सर्वतःपरामृष्टमितिभ्रान्त्या योग्यानुपलब्धि-

निश्चये वस्त्वभावबुद्ध्युदयात् तस्या ज्ञाताया एव कारणत्वमिति शङ्क्यम्। तादृशबुद्ध्यनुदयादेर्योग्याऽनुपलम्भीययोग्यताऽज्ञानज्ञानकृतत्वात्। तद्योग्यताया ज्ञाताया एवोपयोगेऽप्यनुपलब्धेः स्वरूपसत्या एव कारणत्वेनादोषात्। नचाभावज्ञानमिन्द्रियेणैवास्त्विति शङ्क्यम्। इन्द्रियव्यापाराभावेऽपि तज्ज्ञानदर्शनात्। केनचित् प्रातरेवागते माथुरे दीर्घतमे शुक्लवाससि पुंसि मध्याह्ने पृष्टे श्रोतुः प्रतियोग्यस्मरणादेव प्रातःकालीनतदभावज्ञानस्यानुभवसाक्षिकत्वात्। नच प्रातरवगतोऽभावस्तदा स्मर्यत इति वाच्यम्। प्रातःप्रतियोगिनः कथञ्चिदपि बुद्धावनारोहात्। तत्प्रतियोगिकस्याऽभावस्यापि तथात्वेन तत्स्मरणस्य सर्वथैवाशक्यवचनत्वात्। एवं सिद्धे योग्यानुपलब्धेः कारणत्वे यत्रेन्द्रियव्यापारानुपरमे सन्निहितदेशकालवर्त्यभावः प्रतीयते तत्रापि सैव कारणं, न त्विन्द्रियादिकमित्याहुः॥

वेदान्तपरिभाषायां तु योग्यानुपलब्धेः कारणत्वेऽपि किं तत्स्वरूपम्। योग्यस्य प्रतियोगिनोऽनुपलब्धिरिति वा, योग्येऽधिकरणे प्रतियोगिनोऽनुपलब्धिरिति वा, योग्यत्वविशिष्टानुपलब्धिरिति वा। नाद्यः। स्तम्भे पिशाचभेदाप्रत्यक्षत्वापत्तेः। न द्वितीयः। आत्मनि धर्माद्यभावस्यापि प्रत्यक्षत्वापत्तेः। तृतीयस्तु स्यात्। कर्मधारयाश्रयणात्। तस्या योग्यत्वं तु तर्कितप्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकत्वम्। तदर्थश्च— गृह्यमाणस्याभावस्य यः प्रतियोगी तस्य सत्त्वेनाधिकरणे तर्कितेन यस्या अनुपलब्धेः प्रतियोगिभूतमुपलब्धिस्वरूपम् आपादयितुं शक्यते तादृशत्वम्। स्फीतालोकवति भूतले यदि घटः स्यात्तदोपलभ्येतेत्यापादयितुं शक्यत्वात् तादृशस्थले घटाभावोऽनुपलब्धिगम्यः। अन्धकारे तु तादृशापादनासम्भवान्नानुपलब्धिगम्यः। अत एव स्तम्भे पिशाचसत्त्वे

त्सम्भवत् प्रत्यक्षतापत्त्या तत्र तदभावोऽनुपलब्धिगम्यः। आत्मनि धर्माद्यग्राहकत्वेऽप्यात्मनोऽतीन्द्रियत्वेन निरुक्तोपलम्भापादनासंभवात्तानुपलब्धिगम्यः। नचाधिकरणेन्द्रियसन्निकर्षस्थले उक्तरीत्याऽभावस्यानुपलब्धिगम्यत्वं तत्रानुमतम्। तत्रेन्द्रियान्वयव्यतिरेकानुविधानादिन्द्रियस्यैवाभावाऽऽकारो वृत्तौ कारणतास्त्विति वाच्यम्। प्रतियोग्यनुपलब्धेरभावग्रहे हेतुतायाः क्लृप्तत्वेन करणत्वमात्रस्याधिकल्पनात्। इन्द्रियस्याभावेन सममसन्निकर्षादभावग्रहे हेतुत्वाभावादिन्द्रियान्वयव्यतिरेकयोरधिकरणज्ञानाद्युपक्षीणत्वेन तेषामन्यथासिद्धत्वाच्च।

ननु भूतले घटो नेत्यादौ भूतलांशे तस्य प्रत्यक्षत्वमुभयसम्मतम्। तत्र वृत्तिनिर्गमने भूतलावच्छिन्नचैतन्यवत् तन्निष्ठघटाभावावच्छिन्नचैतन्यस्यापि प्रमात्रऽभिन्नतया घटाभावस्यापि प्रत्यक्षतैवायातीति चेन्न। तस्याः प्रतीतेः प्रत्यक्षत्वेऽपि तत्करणस्य न प्रत्यक्षत्वम्। दशमस्त्वमसीत्यादिवाक्यजन्यज्ञानस्य प्रत्यक्षत्वेऽपि तत्करणस्य वाक्यस्य प्रत्यक्षानन्तःपातित्वाभ्युपगमात्। नच फलवैजात्यं विना कथं प्रमाणवैजात्यमिति शङ्क्यम्। वृत्तिवैजात्यमात्रेण प्रमाणवैजात्योपपत्तेः। तस्मादभावस्यानुपलब्धिगम्यत्वमेवेत्युक्तम्॥

वैशेषिकास्तु— उक्तरीतिकामेव योग्यानुपलब्धिं स्वीकृत्य स्फीतालोके तत्सहकृतेन चक्षुषा तमसि च तादृशत्वचा घटाद्यभावप्रत्यक्षं, तथैवेन्द्रियान्तरैस्तत्तद्ग्राह्याभावप्रत्यक्ष, संसर्गाभावप्रत्यक्षे प्रतियोगियोग्यताया, अन्योन्याभावप्रत्यक्षे अधिकरणयोग्यताया अपेक्षा चाहुः॥

नैयायिकास्तु— अनुपलब्धेः पूर्वोक्तां योग्यतामनादृत्य योग्यसहकारिसमवहितत्वरूपामेव योग्यतामिच्छन्ति। अत एवान्धकारे आलोकाधिकरणसन्निकर्षात्मकयोग्यसहकार्यभावादयोग्यानुपलब्ध्य-

ऽभावेन न घटाभावग्रहश्चक्षुषा। जलपरमाणौ चेन्द्रियसन्निकृष्टमहत्त्ववद्विशेषणतारूपस्य तस्याभावान्न पृथिवीत्वाभावग्रहः। भूतले पिशाचात्यन्ताभावस्त्वयोग्यत्वादेव न गृह्यते। अत्यन्ताभावे योग्यता तु योग्यमात्रप्रतियोगिकत्वरूपा, योग्यधर्मावच्छिन्नप्रतियोगिताकत्वरूपा वा बोध्या। सर्वभावसाधारणा तु न काचिद्योग्यता, किन्तु गुणयोग्यतावदनुगतैवेत्याहुः॥

मम तु प्रतिभाति—अनुपलब्धेर्नाभावग्रहं प्रति करणत्वम्। चक्षुषाऽवगत इतिवदनुपलब्ध्यावगत इति प्रत्ययाभावात्। योग्यप्रतियोगिकत्वरूपया अभावनिष्ठयोग्यतयैव निर्वाहात्। अतस्तद्योग्यत्वादिविचारो व्यर्थ एव। नच योग्यानुपलब्धेरकारणत्वे घटवत्यपि भूतले घटाभावग्रहप्रसङ्गः। तस्य घटाक्रान्तत्वेन देशान्तर इन्द्रियसन्निकृष्टाभावसत्त्वेऽपि तद्विशेषणत्वेनासत्त्वादिन्द्रियसन्निकृष्टोद्भूतरूपवद्विशेषणतारूपप्रत्यासत्त्यभावादेव तद्वारणात्। अत एव, नान्धकारे। तमोवृतत्वेन भूतलस्य असन्निकृष्टत्वात्। गृहान्तर्देशस्यासन्निकृष्टत्वेन सन्निकृष्टविशेषणतारूपप्रत्यासत्त्यभावेऽपि तेजोऽभावस्य तमोरूपप्रभायाबलादेव भानसम्भवाच्च। अनावरकत्वपक्षेऽपि अभावस्य प्रतियोगिग्राहकयावत्सामग्रीग्राह्यत्वनियमेन सामग्र्यभावादेव वारणात्। भूतले पिशाचात्यन्ताभावो जलपरमाणौ पृथिवीत्वाभावश्चायोग्यत्वादेव न गृह्यते। स्तम्भे पिशाचभेदस्तु स्वरूपात्मा वा पृथक्त्वात्मा वेति तद्ग्राहकसामग्र्यैव गृह्यते। नच द्विष्ठगुणप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वान्नैवमिति शङ्क्यम्। पृथक्त्वाभिन्नत्वस्य तत्र विशेषणीयत्वात्। अन्यथा तत्प्रतीतिबाधापत्तेः। नचेष्टापत्तिः। अनुभवविरोधात्। नच विशेषणत्वे सिद्धं भेदेनेति वाच्यम्। भेदप्रतियोगिकभेदवत् पृथक्त्वप्रतियोगिकपृथक्त्वाङ्गीकारेणातिरेकेऽप्यदोषात्। नच सन्नि-

कर्षकल्पनमप्रामाणिकमिति वाच्यम्। अनुभवविरोधात्। इदानीं घटः प्राच्यां घट इत्यादिप्रतीतिषु विशेषणीभूतयोः कालदिशो-र्विशेषणतयैव भानदर्शनात्। शास्त्रदीपिकायामपि तथाङ्गीकारात्। नच तयोः संयोगेनैव भानमिति वाच्यम्। तस्य सदातनत्वेन तयोः सदाभानापत्तेः। नचायोग्यत्वान्न दोष इति वाच्यम्। तस्य विशेषणत्वदशायामपि तुल्यत्वात्। नच संयुक्तसंयोगेन तयोर्भान-मिति वाच्यम्। संयुक्तसंयोगस्य प्रत्यापत्तित्वमनुपलब्धेः करण-त्वमभावस्याऽसन्निकृष्टस्य भानमिति कल्पनात्रयगौरवात्। नच कल्पनातौल्यमिति वाच्यम्। मानान्तरकल्पनाया अप्रामाणिक-त्वात्। प्रत्यक्षसूत्रीयसत्संप्रयोगपदे कर्मधारयाश्रयणेऽप्यविरोधा-त्। सन्निकर्षानिरुक्त्या करणत्वस्याशक्यवचनत्वात्। असन्निकृ-ष्टस्य मानान्तरेणोपलम्भाङ्गीकारे विप्रकृष्टदैशिकाभावग्रहापत्तेश्च। अथ योग्यताज्ञापके तर्केऽधिकरणप्रत्यक्षस्यापि सहकारित्वान्न दोष'इति चेन्न। अभावज्ञानस्यानुपलब्ध्यधीनत्वेनानुपलब्धियो-ग्यताज्ञानस्योक्ततर्काधीनत्वेन तर्कस्य चाभावसंसृष्टाधिकरणप्रत्य-क्षाधीनत्वेनाभावज्ञानाधीनत्वाच्चक्रकापत्तेश्च। नच योग्यताया अज्ञाताया एवोपयोग इति वाच्यम्। तर्कोपन्यासवैयर्थ्यापत्तेः। तज्ज्ञानार्थमेव तदुपन्यासात्। अन्धकारेऽपि तद्ग्रहापत्तेश्च। नच तत्र योग्यता नास्त्येवेति वाच्यम्। हस्तेन तज्ज्ञानात्। अतो हस्ता-भ्यां घटाभावं जानामि, चक्षुषा तु न पश्यामीत्यनुव्यवसायादै-न्द्रियकमेव घटाभावज्ञानम्। नचेन्द्रियाणामधिकरणाज्ञानाद्युपक्षी-णत्वं शङ्क्यम्। अधिकरणज्ञानोत्तरं नेत्रनिमीलनेऽपि योग्यानुप-लब्ध्या घटाभावग्रहापत्तेः। नच फलीभूतज्ञानस्य प्रत्यक्षत्वानुरो-धेन तत्कारणस्य प्रत्यक्षत्वं न युक्तिसहम्। दशमस्त्वमसीत्यादिवा-क्यजन्यप्रत्यक्षस्थले व्यभिचारादिति वाच्यम्। तदसङ्गतत्वस्य

शब्दपरिच्छेद एवोपपादितत्वात् । वृत्तिवैजात्यस्य प्रमाणवैजात्योपपादकत्वे फलवैजात्यस्य तदनियतत्वादाकस्मिकत्वापत्तेः । वृत्तिनियतत्वाङ्गीकारेण समर्थने तु फलस्य वृत्तिनियतत्वेन वृत्तेश्च प्रमाणनियतत्वेन फलाद् वृत्तिस्तद्द्वारा प्रमाणनिर्णयस्यानपनोद्यत्वाद् । उक्तवाक्याद्दशमोऽहमिति प्रत्यक्षोत्तरमात्मानं दशमं पश्यामीति जानामीति शब्दात् प्रत्येमीति वा विशेषव्युत्पत्त्युदये यत्नं विनापि प्रमाणनिर्णयाच्छब्दे चक्षुरादिसहकारित्वस्य परोक्षवृत्तिजनकत्वस्य च निश्चयेन शब्दात् प्रत्यक्षस्य सर्वथानुपपन्नत्वाच्च । अतोऽनुरोधेनापि कारणमिन्द्रियमेव । यत्पुनर्मध्याह्ने प्रतियोग्यस्मरणात् प्रातःकालीनप्राभुराभावज्ञानं शास्त्रदीपिकायामुक्तम् । तदपि न युक्तिसहम् । प्रातःप्रतियोगिनो बुद्ध्यनारूढत्वेन स्मरणाऽभावस्य ध्वंसरूपतया अशक्यवचनत्वात् । प्रागभावासत्त्वाभावरूपत्वे प्रश्नात् प्रागपि तत्सत्त्वेन तदापि तदभावज्ञानप्रसङ्गाद्भेदरूपत्वेऽपि तथात्वाव्याभावत्वेन संसर्गाभावत्वादिना च तत्कारणतायाः दुर्घटत्वात् । सहकार्यन्तरापेक्षायामुक्तदोषप्रसङ्गाच्च । अतः प्रश्नेन प्रातःकालीनसंसर्गशब्दे जाते तस्य बुद्ध्यारोहे विरोधसंसर्गेणाभावज्ञानं मानमं मायाद्वारकं वा मानमिति न तेन स्मरणाभावस्य कारणत्वसिद्धिः । एतेनैव सहकारित्वमपि दत्तोत्तरम् । तस्मादभावज्ञानमभावयोग्यतया साधितमैन्द्रियकमेवेति निश्चयः ॥

इत्यभाववादः ॥

प्रकृतमनुसरामः ॥ उक्तसन्निकर्षजन्यमपि सविकल्पकं ज्ञानं चाक्षुषादिभेदेन बुद्धिवृत्त्या जन्यत इति वृत्तिर्विचार्यते । तत्र नेत्रनिमीलने कृते बहिर्दृष्टपदार्थस्येव कश्चिदाकारो नेत्रान्तर्भासते । स आकारो न बाह्यवस्तुनः । आश्रयमतिहाय तत्र तस्याशक्यवचनत्वात् । अतः स आन्तरस्यैव कस्यचन भवितुमर्हतीति तदा-

प्रयत्नेन सांख्यैराहङ्कारिकं तत्त्वान्तरं वृत्तिनामकं कल्प्यते । यथा हि प्रवचनसूत्रद्वयं— प्रमार्थप्रकाशलिङ्गाद् वृत्तिसिद्धिः । भागगुणाभ्यां तत्त्वान्तरं वृत्तिरिति । अर्थस्तु— प्रमा पूर्वोक्तरीतिकमाकारज्ञानम् । तत्सहितो योऽर्थप्रकाशो विषयज्ञानम् । एवमुभयविधाल्लिङ्गाद् वृत्तिसत्तानिश्चयः । यदि वृत्तिर्न स्यादुक्त आकारो न प्रतीयेत । अतैजसत्वादचलं चक्षुर्विप्रकृष्टं विषयमप्राप्नुवत् तत्प्रकाशनं न कुर्यात् । जायते च तदुभयमतः सास्तीति निश्चयः। एवं भागो विभागः अहङ्काराद्विभज्य विषयादेशावधिगमनं, गुणः उक्ताकारः । ताभ्यां कृत्वा आहङ्कारिकं तत्त्वान्तरं वृत्तिरिति । अभियुक्तोक्तिश्च— वृत्तयः प्रसरद्रूपाः स्फारिताक्षस्य पश्य च * अदृष्टानुग्रहात्तत्तत्सम्बन्धार्थावबोधिका इति । अमूर्तायास्तस्याः कथं क्रियेत्यतस्तृतीयं सूत्रम् । न द्रव्यनियमस्तद्योगादिति । अनियतत्वात् पदार्थानां न द्रव्य एव क्रियानियमः । किन्तु यत्र यत् प्रमाणतः सिद्ध्यति तत्र तदनुमन्यामहे । अतो दूरस्थवस्तुन आकारग्रहणदर्शनात् सापि क्रियावतीसर्थ इति । एवं मायावादिनोऽपि अन्तःकरणविशिष्टस्य चैतन्यस्य प्रमातृत्वमङ्गीकृत्य तस्मिन् ज्ञानसूक्ष्मावस्थारूपं विषयसंस्कारमाधातुं विषयेन्द्रियसन्निकर्षसामर्थ्यजन्यामन्तःकरणपरिणामरूपां वृत्तिमङ्गीकुर्वन्ति । नैयायिकादयस्तु नयनकिरणानां निर्गमनेन विषयसन्निकर्षाज्ज्ञानम् । तेन च भावनासंस्काराख्यं गुणान्तरं चरमस्मृतिनाश्यमात्मन्यङ्गीकुर्वन्तो वृत्तिपदार्थमेव नेच्छन्ति । तत्तु नेत्रान्तरनुभवस्य सार्वजनीनत्वादप्रयोजकमिति वृत्तिः सर्वथाभ्युपेयैव । परन्तु या बुद्धिवृत्तिः संस्काराधानार्थं जन्यत इत्युच्यते सा वृत्तिर्बुद्धेर्न तत्त्वान्तरं, नाप्यन्तःकरणपरिणामान्तरम् । किन्तु बुद्धितत्त्वस्य कालप्रभूनपसत्त्वादिगुणकृतोऽवस्थाविशेष एव । नन्व तस्यावस्था-

विशेषत्वे निर्गमाभावेन विषयासंसर्गात् तदाकारकत्वं वृत्तेर्दुर्घटमिति शङ्क्यम् । मायागुणस्य रजसश्चञ्चलत्वेन विक्षेपकत्वेन च दर्पणे मुखस्येव नेत्रगोलकेऽपि बाह्यविषयाकारसमर्पणे तदाकारस्य सुघटत्वात् । स एवं मायिक आकारो नयनकिरणेषु नेत्रमुद्रणे प्रसादवृत्तेषु गोलकान्तरनुभूयते । एवमेवेन्द्रियान्तरेऽपि वृत्तिर्ज्ञातव्या । यद्यपि सा नानुभूयते तथापि तादृशसंस्काराधानात्सिध्यति । एकादशाऽसन् मनसो हि वृत्तय आकूतयः पञ्चधियोऽभिमानः * मात्राणि कर्माणि पुर च तासां वदन्ति हैकादश वीरभूमीरिति जडभरतवाक्याच्च । भूमिषु पञ्चानां ज्ञेयत्वेन विषयत्वम् । ततः पञ्चानां कार्यत्वेन पुरस्य स्वीकार्यत्वेन ज्ञेयम् । संस्कारस्तु जातस्य ज्ञानस्य सूक्ष्मावस्थेत्युक्तम् । बुद्धिश्च कर्मज्ञानेन्द्रियानुग्राहिकेति वक्ष्यते । सा च वृत्तिद्वारैवानुगृह्णातीतीन्द्रियजन्यस्य विशिष्टज्ञानस्य नानाभेदाः । अत्राऽवस्थयैव निर्वाहे साङ्ख्याभिमतस्यान्तःकरणातिरिक्तपदार्थान्तरत्वस्य निष्प्रमाणकत्वात् । कामः सङ्कल्प इति श्रुतौ कामादिपदानि शक्तानि, धीपदं लाक्षणिकमिति मायावादिकल्पनाया अपि वैरूप्यादिदोषग्रस्तत्वाच्च । तदुभयमप्यसङ्गतम् । अतो बुद्धेरवस्थाविशेष एव वृत्तिरिति निश्चयः । नन्विन्द्रियार्थसम्प्रयोगोत्तरं सम्प्रयुक्तार्थाकारसमानो बुद्धावाकारो जायत इति प्रमा भवतु । भ्रमादिकं तु न भविष्यति । शुक्त्यादौ तद्विरुद्धस्य रजताद्याकारस्याभावेन बुद्धौ मायाकृततत्समर्पणायोगात् । अन्यथाख्यातिप्रभृतीनां चानङ्गीकारादितिचेन्न । स्वभावगुणानुग्रहादेव तस्यापि सिद्धेः । पूर्वोत्पन्नस्य रजताद्याकारकसंस्कारस्य रजसा बहिःक्षेपे सम्प्रयुक्तार्थाकारस्य तमसावरणे च भ्रमस्य सुखेन वक्तुं शक्यत्वात् । एवं नानाविधाद् गुणक्षोभजवृत्तिभेदादेवा-

न्येऽपि ज्ञानभेदा उन्नेयाः । यदा विषयेन्द्रियसंयोगान्निर्विकल्पकं तदेन्द्रियदेशे बुद्धेर्वृत्तिः । तयेन्द्रियानुग्रहे सविकल्पकम्। अननुग्रहे तु न। वृत्त्यन्तरेण पूर्ववृत्तेर्नाशे सविकल्पकस्य संस्काररूपेणावस्थानम् । तस्योद्बोधकैरुद्बोधे मायोपस्थापितमायिकाऽर्थसङ्कलना स्मृतिः । राजसै रागादिभिः संस्कारशाबल्ये मायया विषयाकारावरणपूर्वकं मायिकपदार्थसहितस्य ज्ञापनस्य गोलकाऽग्रभागे क्षेपे भ्रमः।किञ्चिदावरणे संशयः। सत्त्वेन सर्वथावरणभङ्गे विक्षेपस्यापि निवृत्तौ विशेषदर्शनमित्यादि । वृत्तिविषया तु वृत्तिर्न भवतीत्यनुभवानुसारेणैव निश्चीयते । नच वृत्तीनां गुणजन्यत्वे मानाभावः शङ्क्यः । जाग्रत्स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः * तासां विलक्षणो जीवः साक्षित्वे न विनिश्चित इत्येकादशे हंसवाक्यात् । संशयादिवृत्तीनां तदवान्तरभेदत्वेन तदनतिरेकात् । यत्तु जाग्रद्भोगप्रदकर्मोद्बोधे जागरणं, तदुपरमे निद्रया स्वप्नसुषुप्ती इति मतम् । तत्रापि कर्मोद्बोधोपरमहेतोरवश्यवाच्यत्वेन लाघवादीश्वरेच्छानुगृहीतानां परस्परोपमर्दकादिस्वभावानां गुणानामेवावस्थाहेतुत्वं साधीयः।तस्माद् बुद्धिगुणजन्या तदवस्था वृत्तिः। सा यदाऽनुगृह्णाति तदा वक्ष्यमाणप्रक्रियया सविकल्पकं ज्ञानं जन्यते । तथाहि । अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् * विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥ शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः * न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतव इति गीतायां कार्यमात्रं प्रति पञ्च हेतव उक्ताः । तत्राधिष्ठानं शरीरम् । कर्त्ता जीवः । करणं बाह्याभ्यन्तरम् । चेष्टाः प्राणादिवायुकर्माणि । दैवं कालकर्मभगवदिच्छादि । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति * भ्रामयन् सर्वभूतानि यन्त्रारूढानि माययेति वाक्यादन्तर्यामी वा दैवपद-

वाच्यः। देवानां समूहो दैवमिति तत्तदिन्द्रियाधिष्ठातारो वा। एवं सति ज्ञानजनकमनःसंयोगादिहेतुभूतक्रियायामप्येतान्येव कारणानि। तत्राऽयं क्रमः। दैवानुकूल्येनाऽन्तर्यामिणा मनस्तत्तत्कार्याऽर्थं प्रेर्यते। तच्च इन्द्रियप्रेरणाय तत्तदिन्द्रियेण संसृज्यते। तत्र तत्तदिन्द्रियदेवतानुकूल्ये विषयसंसृष्टैरिन्द्रियैः स्वावच्छिन्ने मनसि पूर्वं निर्विकल्पकमुत्पाद्यते। तदिन्द्रियदेशे बुद्धेर्वृत्तिः। ततो बुद्ध्यापि वृत्तिद्वारा तदनुग्रहे सविकल्पकं भवति। चाक्षुषे तु नयनकिरणा विषयपर्यन्तं गच्छन्ति। इन्द्रियान्तरे तु किरणाभावादिन्द्रियेण सह विषयं मनः प्राप्नोति। तदा क्रमेण सहैव वा निर्विकल्पकं सविकल्पकं च तत्तदिन्द्रियसंसृष्टे मनसि उत्पद्यते। ज्ञानद्वयेऽपि विषयेन्द्रियस्पर्शादिक व्यापारः। तत्र सविकल्पकं प्रमेयानन्त्यादनन्तविधं भवति। तत्रापि कारणान्तरसमवधानेन संशयविपर्यासनिश्चयस्मृतिभेदा जाग्रति भवन्ति। यथासम्भवं स्वप्नेऽपि ते। सविकल्पकजन्यहानोपादानबुद्धौ तु विशेषः। इन्द्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायता मनः * चेतना हरते बुद्धेः स्तम्बस्तोयमिव ह्रदादिति वाक्याद्विषयैरिन्द्रियाकर्षः। ततस्तैर्मनसः। तच्चाशुद्धमिति तत्र कामोत्पत्तावुपादानबुद्धिः। तादृशे मनसि द्वेषोत्पत्तौ तु हानबुद्धिः। न चेदमप्रयोजकम्। कामिनीकुचकुम्भदर्शनादौ चक्षुष, शीतादिकालेपुष्पादिना त्वचो, रागादियुक्तगीतेन श्रवणस्य, चन्दनादिगन्धेन घ्राणस्य, भक्षितस्यापि दध्योदः पुनरास्वादनेन रसनस्य तैश्च मनस आकर्षस्यानुभवसिद्धत्वात्। मनसश्च रूपद्वय— बाह्यमान्तरं चेति। तृतीयस्कन्धे तत्त्वस्तुतौ पराहृतान्तर्मनस इत्यस्य सुबोधिन्या स्थितम्। तत्रान्तरं येन विषयेणेन्द्रियद्वाराकृष्यते तद्विषयिणी हानोपादानबुद्धिर्भवति। येन तु नाकृष्यते तद्विषयिण्युपेक्षा बुद्धिरिति युगपज्ज्ञाना-

बुद्धिसत्त्वम् । नच तत्र वेगाद् यौगपद्याभिमान एवेति वाच्यम् । एकाग्रदशायां पुस्तकदर्शने युगपज्ज्ञानाक्षरापेक्षास्थले वेगाङ्गीकारस्यानुभवविरुद्धत्वात् । अतो रूपद्वयमेव युक्तमिति । यदा मनसोऽनाकर्षस्तदोपेक्षाबुद्धिः । अत एव तस्या न स्थिरत्वम् । अभ्यासाद्यभावात् । इदञ्च सर्वं ज्ञानमन्तःकरणाद्यध्यासाज्जीवात्मा स्वस्मिन्नभिमन्यत इत्यस्य ज्ञानस्य लौकिकानामात्मधर्मत्वभ्रमवाद इति । अन्तःकरणाध्यासस्तु हृदयदेशे जीवस्यान्तःकरणानां च स्थितत्वात्तेषु तत्प्रातिबिम्बे तस्य प्रतिबिम्बस्येन्द्रियेषु प्रतिबिम्बान्तरे इन्द्रियाध्यासस्तस्य देहे प्रतिबिम्बे देहाध्यासश्च भवति । प्रतिबिम्बश्च तत्प्रकाशस्य तेषु संक्रमेण भवति सूर्यस्येव, न तु मुखस्येव सन्निधिमात्रेणेति निर्णीतं, यथा जलस्य आभास इत्यत्र तृतीयस्य प्रश्नविशेऽध्याये । एवञ्च पूर्वकृतस्य प्रारब्धकर्मणः पक्वस्य जाग्रति फलभोगो भोगैः क्रियमाण आहारश्रमादिभिर्यदा निद्रा भवति। तदा स्वापस्य प्रवृत्तिः। तत्राय हृदयदेशान्निःसृत्य हिताभिधानासु शुक्लनीलहरितलोहितपीतरसभृतासु केशसहस्रभागवदणीषु द्वासप्ततिसहस्रसंख्याकासु तस्यां तस्यां चिदीश्वरेच्छादिवशेन अन्तर्बहिःकरणान्यादाय परिवर्तते । तदा चैतन्यसंकोचनेन बहिरिन्द्रियेषु मनसि च प्रकाशासंक्रमात् प्रतिबिम्बो न भवति । बुद्ध्यहङ्कारयोरेव तु भवति । तदा बुद्धिसहितोऽहङ्काराध्यासेन स्वाप्न सुखदुःखादि भुङ्क्ते । तत्र प्रकाशो भगवतो, विषयश्च मायिकः, भोगे बुद्धिः करणं, भोगश्चाहंकारे । यदा पुनर्निद्रायां तमस उद्रेक ईश्वरेच्छादिवशात् तदाऽयं तैः सर्वैः सह पुरीतति प्रविशति । पुण्डरीकाकारो मांसपिण्डो हृदयम् । तद्वेष्टिना नाड्यः पुरीतच्छब्देनोच्यन्ते । तदा सुषुप्तिः । कदाचिद्भगवदिच्छया तस्य हृदयस्थान्तर्यं आकाशशब्दवाच्यः परमात्मा तत्र सम्पद्य शेते।

द्विविधायामपि सुषुप्तौ कर्मासंसर्गाद् दुःखाभावः। द्वितीयस्यां परमानन्द इति विशेषः। ततः पुनर्भगवदिच्छादिवशेन परमात्मनः सकाशात् सर्वेषां प्राणादीनामात्मान्तानां व्युच्चरणम्। ततो जागरणे स्वस्थानस्थितिः। पूर्वोक्तरीत्या तत्तदनुभवादिश्चेति॥

नैयायिकास्तु— आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेनेति क्रमेणात्मन्येव ज्ञानमुत्पद्यत इत्यात्मधर्मत्वं जन्यज्ञानस्याहुः। तत्तु श्रुतिविरोधादेवापास्तम्। विभोर्निरवयवस्यात्मनः संयोग प्रति कर्तृत्वायोगाच्च। नचान्यतरकर्मज एव संयोगस्तत्रास्त्विति वाच्यम्। मनस एव कर्तृत्वापातात्। तस्यैव क्रियाश्रयत्वात्। जीवे गुणाधीनत्वेन कर्तृत्वायोगादिति॥

मायावादिनस्तु— ब्रह्मात्मकमेव ज्ञानं स्वीकृत्य बुद्धौ तस्य प्रतिबिम्बे तस्यैव व्यावहारिकज्ञानत्वं चाङ्गीकृत्य चिद्रूपरागावरणभङ्गाभेदाभिव्यक्तिपक्षाञ्जीवस्य किञ्चिज्ज्ञत्वमाहुः॥ तदप्यसङ्गतम्॥ प्रतिबिम्बस्य वक्तुमशक्यत्वात्। ब्रह्मणो नीरूपत्वात्। बुद्धेश्चास्वच्छत्वात्। दर्पणवत् किञ्चिद्देशावच्छिन्नस्वच्छत्वमङ्गीकृत्याकाशस्येव ब्रह्मणः प्रतिबिम्बाङ्गीकारेऽपि ब्रह्मणः सच्चिदानन्दरूपत्वेन सदानन्दयोरपि प्रतिबिम्बापातात्। नचेष्टापत्तिः। ज्ञानवत्तयोरपि भानापत्तेः। सर्वदा सर्वेषामन्तःशरीरस्थसर्वज्ञानापत्तेश्च। प्रतिबिम्बाधारत्वयोग्यायां बुद्धौ ज्ञानस्येवान्तराणां नाड्यादीनामसन्निहितत्वेन तत्प्रतिबिम्बेऽपि बाधकाभावात्। किञ्चाविद्यायां ब्रह्मप्रतिबिम्बभूतानां जीवानां व्यापकतया स्वतः सर्वपदार्थसंसृष्टत्वाद् बाधकाभावेनाविद्यायामपि सर्वप्रतिबिम्बसम्भवेन तत्तत्सर्गे द्विगुणीकृत्य जाते सर्वतादात्म्यापन्नस्य ब्रह्मण इव तेषामपि सर्वसंसृष्टत्वात् साक्षित्वाच्च वृत्तिं विनैव स्वरूपचैतन्येन सर्वावभासकतायाः शक्यवचनत्वेन ब्रह्मवत् सर्वेषां सर्वज्ञता

स्यात् । नचान्तःकरणभेदेन प्रमातृभेदात्तदनापत्तिः । व्यापकत्वेन सर्वेषां सर्वान्तःकरणसंसृष्टतया प्रमातृभेदस्याप्यकिञ्चित्करत्वात् । संसर्गतौल्ये एकस्यैवैकान्तःकरणवैशिष्ट्यं नापरस्येत्यत्र हेत्वभावात् । अदृष्टादीनां हेतुताकल्पनस्याप्यनेनैव न्यायेन निरसितुं शक्यत्वात् । ननु दूषणग्रासान्मास्तु व्यापकानेकजीववादः, किन्तु व्यापकैकजीववादोऽस्तु । तथाच तस्य सर्वज्ञतायामिष्टापत्तिरितिचेत् । सत्यमिष्टापत्तिः स्याद् यद्येकत्रैव सर्वज्ञता स्यात् । न चैवम् । अविशेषेणैकस्यैव सर्वशरीराधिष्ठाने सर्वत्राविद्योपहितस्य साक्षिण एकत्वात् सर्वात्रोपाधौ सर्वप्रतिबिम्बेषु संसृष्टत्वाच्च ब्रह्मण इव जीवस्यापि सर्वेषु प्रतिबिम्बेषु सर्वज्ञताया बाधकाभावात् । नच ब्रह्माप्येकत्रैव सर्वज्ञ नसर्वत्रेति वाच्यम् । ब्रह्मविष्णुशिवादिशरीराऽवच्छेदेन सर्वज्ञताप्रतिपादकशास्त्रविरोधापातात् । नचाविद्योपाधौ सर्वप्रतिबिम्बेऽप्यन्तःकरणभेदेन प्रमातृभेदात्तत्कदस्यस्यैव ज्ञानं प्रमातुर्भविष्यतीति न सर्वत्र सार्वज्ञापत्तिरिति वाच्यम् । प्रमात्रभेदे करणभेदस्येव साक्ष्यभेदे प्रमातृभेदस्याप्यऽप्रयोजकत्वात् । सर्वत्र साक्षिण एव भासकत्वात् । नच तस्याऽविद्योपहितरूपेण न साक्षित्वं, किन्त्वऽन्तःकरणोपहितरूपेण । तथाच रूपभेदेन साक्षिभेदान्न सार्वज्ञापत्तिरिति वाच्यम् । अप्रयोजकत्वात् । तथा सत्यपि हृदयनाडीप्रभृतीनामान्तराणामन्तःकरणे प्रतिबिम्बितानां ज्ञानं तस्य निर्बाधमित्यान्तरसर्वज्ञताया दुर्वारत्वात् । ननु सर्वेषां प्रतिबिम्बो नास्माभिरङ्गीक्रियत इतिचेन्नैवम् । यदयं न स्वीक्रियते, कस्तत्र हेतुः । न तावदसान्निध्यं । अविद्याया व्यापकत्वात् । नापि बिम्बालोकसंयोगाभावः । सूर्यादेर्विद्यमानत्वात् । अन्तर्गृहगतदर्पणप्रतिबिम्बितसूर्यप्रकाशेनाऽऽन्तरवस्तूनां प्रतिबिम्बदर्शनादिहापि जीवचैतन्यप्रकाशितान्तःकरणसंसृष्ट आ-

न्तरबिम्ब आलोकान्तरासंयोगानपेक्षणात् । जीवचैतन्येनान्तरप्रकाशानङ्गीकारे साक्षात्संसृष्टान्तःकरणतद्धर्मादीनामप्यनवभासप्रसङ्गात् । मते च तदवभासे तद्वदेव तत्संसृष्टानामप्यवभासाद् अहङ्कारादिवद् हृदयनाडीप्रमृतीन्यप्यनुसन्धीयेरन् । संस्काराधायकस्यावभासस्य तुल्यत्वात् । अथैकप्रतिबिम्बावरुद्धे दर्पणादावन्यस्य प्रतिबिम्बादर्शनाद् व्यापकजीवावरुद्धेऽविद्यादावितरेषां प्रतिबिम्बो न भविष्यतीत्यवरोध एव प्रतिबिम्बाभावे हेतुरिति विभाव्यते । तदप्यसङ्गतम् । एकप्रतिबिम्बावरुद्धेऽन्यप्रतिबिम्बस्तदा न भवति यदा बिम्बान्तरं पूर्वबिम्बव्यवधेयं भवति । इह तु ब्रह्मणो व्यापकत्वेन परिच्छिन्नानां सर्वेषां ब्रह्मान्तर्वर्तित्वेन तद्व्यवधेयत्वाभावान्न जीवेन तत्प्रतिबिम्बावरोध इति दुर्वार एव सर्वेषां प्रतिबिम्ब इति । ननु भवतु सर्वेषां प्रतिबिम्बस्तथापि न जीवस्य सर्वज्ञतापत्तिर्भविनी । जीवसाक्षिवादस्यानङ्गीकारात् । तथा सति कूटस्थचैतन्यं वा जीवाभिन्नं सर्वप्रत्यग्भूतं शुद्धं ब्रह्मैव वा परमेश्वरस्यैव रूपान्तरं वा साक्षी भविष्यति । तस्य तु सर्वज्ञत्वेऽप्यदोषः । जीवस्तु यथा सर्वगतं गोत्वसामान्यं स्वभावाद्व्यादिसन्निधिस्वाभावेऽपि सास्नादिमद्व्यक्तौ संसृज्यते तथा विषयादौ सन्नपि जीवः स्वभावादन्तःकरण एव संसृज्यते । यदा चान्तःकरणपरिणामो वृत्तिरूपा नयनद्वारेण निर्गत्य चक्षुरश्मिवज्झटिति दीर्घप्रभाकारेण परिणम्य विषयं प्राप्नोति तदा तमुपारुह्य जीवस्तं विषयं गोचरयति । केवलाग्न्यदाह्यस्य तृणादेरयःपिण्डमारूढाग्निदाह्यत्ववत् केवलजीवचैतन्याप्रकाश्यस्यापि घटादेरन्तःकरणवृत्त्युपारूढतत्प्रकाश्यत्वं युक्तमिति चिदुपरागार्थत्वेन वृत्तिनिर्गमपेक्ष्य वृत्तिसंसृष्टविषयमात्रावभासकत्वात् तस्य किञ्चिज्ज्ञत्वमुपपत्स्यत इतिचेन्नैवम् । एवं स्वभाववादेन समाधानेऽपि जीवस्य प्रकाशप-

तिबिम्बत्वादविच्छिन्नत्वे च ज्ञानरूपत्वात् स्वप्ने स्वयञ्ज्योतिष्ट्वप्रतिपादनाच्च प्रकाशरूपत्वेन स्वप्न इव परोक्षवृत्तावपि च पूर्वपूर्वोऽनादिसंस्कारवशादेवेन्द्रियं विनैव वृत्त्युपपत्तेर्ज्ञानेन्द्रियाणि वृथैव स्युः । किञ्च । अयःपिण्डसमारोहेण दाहकस्याग्नेः साक्षात्तत्संसृष्टदाहकत्वदर्शनाद् वृत्त्युपारोहेण प्रकाशकस्य जीवस्य साक्षादन्तःकरणसंसृष्टप्रकाशकत्वं सुतरां सुवचमित्यन्तःकरणे प्रतिबिम्बितानां प्रकाशोऽस्य स्यादेवेत्यधिकं तत्रानुप्रविशेत् । वस्तुतस्त्वेवमपि गोत्वस्य सकलगोव्यक्तिष्विवैकस्यैव जीवस्य सर्वान्तःकरणसंसर्गस्य वक्तव्यत्वात्, तथा सति तत्तदन्तःकरणवृत्तिनिर्गमेण तत्तद्विषयभासौ तत्तद्वृत्त्युपारूढस्य जीवस्यापि तत्तद्विषयोपरागसम्भवात् सर्ववृत्तिसंसृष्टविषयाणां गोचरीकरणे बाधकाभावेन किञ्चिज्ज्ञत्वस्यानुपपन्नत्वमेव । अतो विषयविषयिभावो वा, विषयसन्निहितजीवचैतन्यतादात्म्यापन्नवृत्तिविषयसंयोगद्वारको जीवविषययोः परम्परासम्बन्धो वा अन्तःकरण इत्युपादानस्य जीवस्य वृत्तिविषयसंयोगजनितः कार्याकार्यसंयोगात् कारणाकारणसंयोगात् साक्षात्संयोगो वा, अन्तःकरणोपहितस्य विषयावभासकचैतन्यस्य विषयतादात्म्यापन्नब्रह्मचैतन्याभेदाभिव्यक्तिद्वारा विषयतादात्म्यसम्पादनं वा, अन्यद्वा यत्किञ्चन चिदुपरागत्वेनाभिधित्सितं तस्य सर्वस्य वृत्तिसंसर्गजनितत्वेन वृत्तिजनकानां चान्तःकरणानां सर्वशरीरव्यापकजीवसंसृष्टत्वेन सर्वेषां सर्वज्ञत्वापत्तिरनिवार्यैव । तत्राप्यनुपदोक्ते विषयतादात्म्यसम्पादनपक्षे मैत्रस्य चैत्रदर्शनेऽहं चैत्र इत्याद्याकारकज्ञानापत्तिराधिक्यापातीति फल्गून्येवैतानि कल्पनानि ।

अथ जीवः सर्वगतोऽप्यविद्यावृतत्वात् स्वयमप्रकाशमानतया विषयाननवभासयन् विषयांशे वृत्त्युपरागादावरणतिरो-

धानेन तत्रैवाभिव्यक्तस्तेन विषयं प्रकाशयतीत्यावरणभङ्गपक्षः किञ्चिज्ज्ञस्यार्थमालम्ब्यते तदाप्यावरणस्य वृत्त्युपरागतिरोभाव्यत्वाज्जाते वृत्त्युपरागे तेनावरणभङ्गे सर्वान्तःकरणसंसृष्टो जीवस्तत्ताद्विषयेष्वभिव्यक्तस्तं तं विषयं प्रकाशयेदेवेति न किञ्चिज्ज्ञत्वोपपत्तिः । एवञ्च चैतन्यमात्रावरकाज्ञानस्य खद्योतप्रकाशेन महान्धकारस्येव ज्ञानेनैकदेशाज्ञाननाशो वा, पटवत् संवेष्टन वा, भीतभटवदपसरण वा, चैतन्यमात्रावरकस्याप्यज्ञानस्य तत्तदाकारवृत्तिसमृष्टावस्थविषयचैतन्यानावरकत्वस्वाभाव्यं वा, मूलाज्ञानावस्थाभेदरूपाज्ञानान्तरनाशो वाऽन्यो वा यः कश्चनावरणभङ्गो निरूप्यताम् । स सर्वोऽपि वृत्त्युपरागजन्य एवेति जाते वृत्त्युपरागे पूर्वोक्तरीत्या सकलान्तःकरणसमृष्टस्य जीवस्य सर्वज्ञतैवायातीति नैतेऽपि रोचिष्णवः पक्षाः । नन्वेकस्मिन्नपि जीवे जन्मान्तरमापन्ने पूर्वजन्मानुसन्धानादर्शनाच्छरीरभेदस्य सुखाद्यननुसन्धानप्रयोजकत्वं क्लृप्तमिति स एव किञ्चिज्ज्ञताया अपि प्रयोजको भवतु । तथाच व्यापकस्यापि जीवस्य शरीरान्तरे शरीरान्तरीयान्तःकरणवृत्त्यादिभिर्ज्ञानं न भविष्यतीति न सर्वेषां सार्वज्ञ्यापत्तिरितिचेन्न । शरीरभेदस्याननुसन्धानप्रयोजकताया योगिकायव्यूहे जातिस्मरे भूतादौ च व्यभिचारेण तस्य किञ्चिज्ज्ञतायामप्यतन्त्रत्वात् एतेनैव भोगायतनभेदस्य विश्लिष्टोपाधिभेदस्य चाननुसन्धानप्रयोजकत्वं परास्तं बोध्यम् । उद्यदायुधदोर्दण्डाः पतितस्वशिरोऽक्षिभिः * पश्यन्तः पातयन्ति स्म कबन्धा अप्यरीन् युधीति भारते भूतार्थवादाच्च । नच योगिप्रभृतिषु प्रभावविशेषेणानुसन्धानेऽपि पूर्वोक्तोपाधीनामुत्सर्गतस्तथात्वाच्चाननुसन्धानप्रयोजकत्वहानिरिति वाच्यम् । बहुषु व्यभिचारदर्शनात् । एकत्र तथा दर्शने चौत्सर्गिकाननुसन्धानतन्त्रत्वाविघातः प्रभावविशेषप्रबन्धवशात्

कल्पयितुं शक्यते, न तु बहुषु तथा दर्शने। अतो मनुष्यविशेषेषु मनुष्यादुत्कृष्टयोनिषु सर्वेषु च पूर्वजन्मीनज्ञानस्य तत्र तत्रोक्तेः शास्त्रस्य प्रामाण्याच्च न पूर्वोक्तोपाधीनामननुसन्धानतन्त्रत्वं साधीयः। नाप्यन्तःकरणभेदस्य तथात्वम्। दृष्टिसृष्टिवादे पूर्वपूर्वस्यान्तःकरणस्य नष्टत्वेनाग्रिमाग्रिमस्य तस्य भिन्नत्वात् पूर्वदृष्टानुसन्धानाभावप्रसङ्गात्। सादृश्यैक्येन तत्समर्थने तु अन्तःकरणभेदस्याप्रयोजकत्वात्तद्वदन्त करणैरस्य सर्वज्ञताया एवापत्तिः। अन्तःकरणवैजात्येन समर्थनं तु मज्जत्फेनालम्बनकल्पत्वात् कदर्यमेव। पादेन स्पृशामि, कर्णाभ्यां, शृणोमि, चक्षुषा पश्यामीति बाह्यकरणभेदेऽप्येकस्य ज्ञानदर्शनेन तेनान्तःकरणेन तत्तज्ज्ञानामीत्यादिज्ञानस्यान्तःकरणवैजात्येऽपि सुवचत्वात्। सृष्टिदृष्टिवादयालम्ब्यान्तःकरणैक्याऽङ्गीकारेण समर्थनेऽपि बहिःकरणवैजात्यस्याप्यप्रयोजकत्वादुक्तदूषण निर्बाधमेव। नच फलबलान्नान्तःकरणभेदस्याप्रयोजकत्वमिति वाच्यम्। फलबलस्य साधनभेदकल्पनामात्रप्रयोजकत्वेनान्तःकरणभेदकल्पने अप्रयोजकत्वात्। फलबलेन जीवभेदकल्पनेऽपि दोषाभावात्। अतो व्यापक एकः प्रतिबिम्बो जीव इति पक्षे कथमपि न सर्वज्ञतापत्तिपरिहारः। ननु तर्ह्यस्तु नानाणुजीववादः। तथा सत्यन्तःकरणे प्रतिबिम्बितचैतन्यरूपस्य जीवस्य परिच्छिन्नत्वेन सर्वसंसर्गाभावान्न सर्वज्ञतापत्तिर्भवित्री। विषयप्रकाशस्तु विषयसंसृष्टचिद्द्वारा तडागसलिलस्य कुल्याद्वारा केदारमभिव्याप्यवद्विषयावच्छिन्नब्रह्मचैतन्याभेदाऽभिव्यक्तौ भविष्यतीति किञ्चिज्जरमुपपत्स्यत इतिचेन्न। नेदं युक्तं भाति। सलिल एको द्रष्टा भवतीति श्रुत्या सुषुप्तावेव जीवब्रह्मणोरेकीभावश्रवणाच्चद्वितरत्र मद्गुणगे श्रुतिविरोधाज्जाग्रदादौ व्यावर्तकोपाधेर्विद्यमानत्वाच्च दर्पणसत्त्वे बिम्बप्रतिबिम्बयोरिव जीव-

ब्रह्मणोरभेदस्याशक्यवचनत्वात्। किञ्च जीवब्रह्मणोरिदानीमभेदेऽन्योन्यधर्मविनिमयाद् ब्रह्मणोऽल्पज्ञताऽन्यस्य सर्वज्ञता चापत्स्यत इति नोक्तदूषणोद्धारसम्भवः। यदि च बिम्बभूतं विषयाधिष्ठानचैतन्यमेव साक्षादाध्यासिकसम्बन्धलाभाद् विषयप्रकाशकमिसाध्यासिकसम्बन्धोपलक्षितचैतन्यात्मना जीवैकीभावो, न तु बिम्बत्वविशिष्टरूपेणेति भेदस्यापि सद्भावान्नोक्तदूषणापत्तिरिति विभाव्यते तदापि विषयतादात्म्यापन्नब्रह्मणा त्वैकीभावोऽस्य जात एवेति अहं घट इत्याकारकज्ञानापत्तिः। अध्यासेनान्तःकरणतादात्म्यापत्त्याऽहमिति ज्ञानवत्। अन्तःकरणधर्माणां सुखादीनां स्वस्मिन्नभिमानवद्विषयधर्माणामप्यभिमानप्रसङ्गः। अयं घट इत्यादिज्ञानाभावश्च स्यात्। यदि च विषयावच्छिन्नं ब्रह्मचैतन्यं विषयसंसृष्टायां वृत्त्यग्रभागे विषयप्रकाशकं प्रतिबिम्बमर्पयति। तस्य प्रतिबिम्बस्य जीवैकीभावे विषयप्रमितिरिति विभाव्यते तदा तु सुतरामसङ्गतम्। वस्त्वन्तरावरुद्धे दर्पणादौ प्रतिबिम्बादर्शनात्तद्विषयसंसृष्टेऽग्रभागे ब्रह्मप्रतिबिम्बायोगाद्विषयप्रकाशस्यैवाभावप्रसक्तेः। किञ्च प्रतिबिम्बार्पकं चैतन्यं यदि विषयाद् बहिस्तदा तस्य वृत्तिसंसृष्टत्वात् प्रतिबिम्बायोगः। यदि च विषयान्तस्तदापि विपर्येण व्यवधानात् तथा। यदि विषयाद् दूरवर्तिनस्तदा विषयावच्छिन्नत्वस्यैवायोगः। किञ्च, अन्तःकरणोपाधिपरिच्छिन्नप्रतिबिम्बस्याणुत्वादूर्ध्वदर्शने वृत्तिद्वारा तस्य निर्गमात् प्राणानामपि निर्गमापत्तिः। नमुक्तं प्रन्तं प्राणोऽनूत्क्रामतीति श्रुतेः। किञ्चैवं कल्पनैककारणत्वे गोलकद्वारा तैजसस्य केवलतो वृत्तिरूपपरिणामस्य निर्गमादेव प्रमातृवृत्तिविषयचैतन्याभेदसिद्धया विषयप्रकाशसम्भवे गोलकातिरिक्तेन्द्रियकल्पनापि व्यर्था स्यात्। तस्मादनादरणीया एवैते पक्षाः। एतेन प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभेदो ज्ञानस्य

प्रत्यक्षत्वप्रयोजक इत्यपि निरस्तम् । किञ्च यत्र भ्रमन् घटो दृश्यते तत्र वृत्त्युपरञ्जकस्य भ्रमणस्य विषयनिष्ठत्वाभावेन तच्चिदुपरागायोगात् तद्ग्रहणापत्तिः । नच तत्रानिर्वचनीयं तज्जन्यत इति सुखेन तद्ग्रहणसम्भव इति वाच्यम् । वृत्त्या घटाकारिकया आवरणाभिभवेन भ्रमणांशे विक्षेपस्याशक्यवचनत्वात् । किञ्च वृत्त्या विषयचैतन्याभेदाभिव्यक्तावपि विषयप्रकाशके ब्रह्मचैतन्ये तत्तद्भावाश्रयनप्रदेशे तदननुभवेनेन्द्रियेऽपि तदभावाद् वृत्तिमात्रजनकस्येन्द्रियसम्प्रयोगस्य विषयकारणत्वाक्लृप्तेश्च सम्प्रयोगेणापि विषये तदाधानायोगादन्तःकरणावच्छिन्नेऽप्यहं भ्रमामीत्यननुभवात् स भ्रमः सर्वत्राऽलब्धसत्ताको घटेऽपि न स्यात्। यस्मात् यत्राप्यसन् घटदेशोऽनुभूयते तस्मात्तद्देशावच्छेदेन जायमाने मनोधर्मरूपे ज्ञानेऽस्ति । तच्चेत् प्रमातृविषयचैतन्याभिन्नं स्यात् तदा स भ्रमः सर्वानुभवगोचरः स्यात्। यस्मान्नैवं तस्मात्तज्ज्ञानं कार्यरूपं भिन्नमेवेति निश्चयः । नच शुक्तिरजतादिस्थले इदमाकारवृत्तौ सत्यामपि रजताध्यासदर्शनादंशतएवावरणनाश इत्यंशान्तरेण भ्रमविक्षेपोऽपि भविष्यतीति न तदनुभवानुपपत्तिरिति वाच्यम् । विषये तत्सत्त्वेऽन्येषामपि तदनुभवापत्तेः । अन्येषां घटद्रष्टृणां प्रमाणे वृत्त्या तदंशावरणनाशादस्यादि तदननुभवापत्तेश्च विषयाश्रितावरणपक्षस्यैव दुष्टत्वात् । पुरुषाश्रितपक्षे तूक्तरीत्या प्रमातरि प्रमाणे प्रमेये च वस्तुभूतभ्रमत्वेन घट्टकुटीप्रभातवदननुभवस्य सर्वानुभवगोचरत्वस्य बाधाभावाच्छुक्तिरजतस्याप्येवमुपपन्नत्वात् । एवं मूलाज्ञानात्तदवस्थारूपाज्ञानानां नानात्वमङ्गीकृत्य घटावरकाज्ञानस्य घटाकारवृत्त्या निवृत्तावपि नैश्चल्यावरकस्यानिवृत्त्या भ्रमविक्षेपादरणेऽपि पूर्वोक्तरीत्या पुरुषनिष्ठत्वेन तस्य वाच्येति चैतन्याभेदस्य पूर्ववदेवासिद्धेः । एतेनाऽऽत्मकृतत्वमात्रकल्पनया तस्योत्पत्तिना-

शशालित्वमात्रेण निर्वाहे विषयावरणतन्नानात्वकल्पनयोर्गुरुत्वाद्-प्रामाणिकत्वाच्च। एतेनैव घटावरकाज्ञानगतावरणशक्तिमात्रनिवृत्तिर्न तु विक्षेपशक्तिनिवृत्तिरपीति पक्षो निरस्तो बोध्यः। नैश्चल्यावरणमन्तरेण भ्रमणविक्षेपासम्भवादावरणशक्तिनिवर्तकताया अप्रयोजकत्वाच्च। जलप्रतिबिम्बितवृक्षाधोऽग्रत्वभ्रमे तु प्रतिबिम्बपदार्थस्यातिरिक्तत्वेन मूलसमीपवर्तिनि जले मूलस्य ततो विप्रकृष्टेऽग्रस्य प्रतिबिम्बात् प्रतिबिम्बत्वेनैवावगाहाद् भ्रमत्वस्यैव दुर्वचत्वेन तत्रावरणादिकल्पनाया एवायोगाच्चेति दिक्। अतो जन्यज्ञानस्य इन्द्रियान्वयव्यतिरेकानुविधानदर्शनाच्छक्तिग्राहकेषु कोशादिषु मेयोपलब्धिश्चित्संविदिति चिदादिभिः सह बुद्धेरैकार्थ्येन वृत्तेर्ज्ञानात्मकत्वनिश्चये तत्र ज्ञानोपचारपक्षस्यायुक्तत्वाच्च। जन्यज्ञानप्रतिरिक्तमेवेति। तदुत्पत्तिप्रनाडी च पूर्वोक्तरीत्यैवेति निश्चयः॥

भगवत्साक्षात्कारे तु नैषा प्रनाडी। तस्य प्रमेयबलादेव भवनात्। नायमात्मेति श्रुतावितरसाधननिरासेनोपलक्षणविधया निरस्तत्वात्। उत्तरार्द्धे वरणस्य लाभसाधनत्वकथने स्वस्यैव तनुविवरणसाधनत्वोक्तेश्च। वरणं चानुग्रहः। स च धर्मान्तरमेव, न तु फलदित्सा। यस्यानुग्रहमिच्छामीति वाक्यात्। स च भक्तिबीजभूतः। अतो, भक्त्या मामभिजानाति, भक्त्या त्वनन्यया शक्यः, भक्त्याऽहमेकया ग्राह्य इत्यादिषु न विरोधः। अवतारदशायां तु मां सर्वे पश्यन्त्विति साकारिकया सामान्येच्छयापि दर्शनम्। तत्रापि नानाविधाभिः। यथा, मल्लानामशनिरित्यादौ। एवञ्च भक्त्या सामान्येच्छया चेति द्वेधा दर्शनम्। उभयथापि प्रमेयबलमेव कारणमिति न विरोधः। स्वसाधनसामर्थ्यादिभिर्दर्शनज्ञानं स्वाभिमानमात्रात्। अत एव, अविज्ञातं विजानतां विज्ञातमविजान-

तामित्यादिश्रुतिः सङ्गच्छते। मनसैवानुद्रष्टव्य इत्यादावपि प्रमेयबलानुगृहीतमेव तदभिप्रेतमिति श्रुत्यन्तराविरोधायानुसन्धेयमिति शुभम्॥

एवं विशेषबोधाय प्रत्यक्षं विनिरूपितम्।
अनुमाने स्वितरवत्र विशेषोऽस्ति कश्चन॥
तथापि बालबोधाय प्रक्रान्तस्यापि पूर्तये।
प्रक्रियां काश्चिदाश्रित्य तत्स्वरूपं निरूप्यते॥

अनुमितिकरणमनुमानम्। दण्डादिवारणाय मितीति। चक्षुरादिवारणायानुमिति। करणव्युत्पत्तिबोधनाय करणमिति। अनुमितेः फलत्वेन स्वं प्रति स्वस्य करणत्वायोगात्। अतः समुदितमुपात्तम्। नच लक्षणलक्ष्यतावच्छेदकयोरैक्याच्छाब्दबोधानुपपत्तिः। अनुमानपदवाच्यत्वस्य लक्ष्यतावच्छेदकत्वेनादोषादिति केचित्। वस्तुतस्तु शाब्दबोधस्य शक्तिग्रहाधीनत्वेन गृहीतशक्तेर्लक्षणीयशब्देभ्योऽनुमितेः सम्बन्धि करणमिति बोधस्य सुखेनोपपत्त्या शङ्काया एवानुदयात्तदैक्येऽप्यदोषादिति युक्तम्। ननु प्रतिज्ञावाक्यश्रवणे किमनुमानपदवाच्यमित्याकाङ्क्षायां तत्पूर्तये लक्षणवाक्यकथनात् अनुमितिकरणम् अनुमानपदवाच्यमिति बोधो विवक्षित इति ऐक्याङ्गीकारे तस्याऽनुपपत्तिरेवेति चेन्न। अनुमानपदवाच्यत्वस्य श्रोतृबुद्ध्यारूढत्वेन श्रुतेऽनुमानपदार्थे तादृशबोधस्यार्थबलादेव सिद्धेः। ज्ञानकरणकं ज्ञानम् अनुमितिः। आत्मवारणाय करणकमिति। वेदान्तनये तस्य ज्ञानरूपत्वात्। प्रत्यक्षवारणाय ज्ञानेति। नच स्मृतेरपि संस्कारद्वारानुभवजन्यत्वेन ज्ञानकरणकत्वात् उपमितेरप्यतिदेशवाक्यार्थस्मरणद्वारा सादृश्यज्ञानजन्यत्वात् तदुभयवारणाय व्याप्तिज्ञानेति वक्तव्यमिति वाच्यम्। सिद्धान्ते सादृश्यज्ञानादेः सहकारित्वेन नि-

वैशेनोपमितेश्चक्षुरादिकरणकत्वेन तत्रातिव्याप्त्यभावात्। संस्कारस्य चानुभवसूक्ष्मावस्थारूपत्वादवस्थायाश्च स्वरूपानतिरिक्तत्वात्। स्मृतेरपि ज्ञानकरणकत्वाभावेन तत्राप्यातिव्याप्त्यभावाच्च । तावतैव तयोर्वारणात् । करणभूतं ज्ञानं व्याप्तिज्ञानमेवेति फलबलादेवावसीयते । अतो न काप्यनुपपत्तिः । नच व्याप्तिकरणकमिति सम्यक् । अज्ञातायास्तस्या अनुमित्यजनकत्वात् । नापि व्याप्तिज्ञानजन्यमिति युक्तम् । व्याप्तिज्ञानानुव्यवसायेऽतिव्याप्तेः। अत एव ज्ञायमानव्याप्तिजन्यमित्यपि न । अनुव्यवसाये विषयज्ञानात्मनां त्रयाणामपि विषयत्वेन जनकतया तस्य ताहग्व्याप्तिजन्यत्वात् । यद्वा, परामृश्यमाणलिङ्गलिङ्गपरामर्शान्यतरव्यापारकज्ञानकरणकं ज्ञानं सा । तेन व्याप्तिज्ञानसाध्यज्ञानहेतुज्ञानादेः करणत्वेऽपि न क्षतिः । व्यापारेण दोषनिरासात् । अत्र लिङ्गव्यापारपक्षेऽतीतानागतधूमाभ्यामनुमितिरिति प्रागेवोपपादितम् । परामर्शव्यापारपक्षस्तु मतान्तरबोधनमात्रार्थः । व्याप्तिविशिष्टत्वे सति पक्षधर्मत्वं लिङ्गत्वम् । पक्षत्वं च आहार्यानाहार्याऽन्यतरसन्देहविषयसाध्यकत्वम् । तेन सिसाधयिषायां सत्यामाहार्यसंशयविषयतासत्त्वात् साध्यनिश्चयसत्त्वेऽपि न हानिः । व्याप्तिस्तु, अव्यभिचरितं हेतोः साध्यसामानाधिकरण्यम् । यत्र यत्र हेतुस्तत्र तत्र साध्यं, यत्र यत्र साध्याभावस्तत्र तत्र हेत्वभाव इति नियमोऽव्यभिचारः । तद्विशिष्टत्वमव्यभिचरितत्वम् । सिसाधयिषायां सत्यां साधकत्वेनोपादीयमानत्वं हेतुत्वम् । सिसाधयिषाविषयत्वं साध्यत्वम् । एकाधिकरणवृत्तित्वं सामानाधिकरण्यम् । तथाच उक्तरूपाव्यभिचारविशिष्टं हेतुनिष्ठं साध्याधिकरणवृत्तित्वं व्याप्तिरित्यर्थः । इदमेव सांख्यप्रवचसूत्रे उक्तम् । नियतधर्मसाहित्ये उभयोरेकतरस्य वा व्याप्तिरिति।उभयोः समव्याप्तिकयोः कृतक-

त्वाऽनिरूप्यत्वादिरूपयोरेकतरस्य विषमव्याप्तिकस्य धूमादेर्नियत-धर्मसाहित्ये अव्यभिचरितधर्मरूपे सामानाधिकरण्ये व्याप्तिः। व्याप्तिशब्दः शिष्टैः प्रयुज्यत इत्यर्थः। वैयासदर्शनादौ लक्षणाभावादास्तिकशास्त्रगतत्वादविरुद्धमिदमेव लक्षणमस्माभिरादृतम्। एवञ्च वह्निमान् धूमादित्यादौ धूमनिष्ठं तादृशाव्यभिचारविशिष्टं वह्निसामानाधिकरण्यमस्तीति लक्षणसमन्वयः। अत्र महानसादौ वह्नेर्धूमसामानाधिकरण्यदर्शनाद् धूमवान् वह्नेरित्यादावतिव्याप्तिवारणायाऽव्यभिचरितमिति।अयःपिण्डादौ तस्य साध्यव्यभिचारात्। यद्यप्यव्यभिचरितसामानाधिकरण्यमात्रं तद्रूपं, तथापि सामानाधिकरण्यसम्बन्धिकतया सम्बन्धिबोधनाय हेतुसाध्यपदे। नाप्यव्यभिचरितं हेतोः साध्यमित्येतावतैव निर्वाहः। व्याप्तेर्हेतुधर्मत्वात्। कथञ्चिद् गुणभूतत्वेन व्यवह्रियमाण आधेयोऽर्थ इति तल्लक्षणात्। नचैवमपि पर्वतीयधूमे महानसीयवह्निसामानाधिकरण्याभावादव्याप्तितादवस्थ्यमिति शङ्क्यम्। हेतुसाध्ययोर्हेतुतावच्छिन्नसाध्यतावच्छिन्नत्वाभ्यां विशेषणीयत्वेनादोषात्। नच धूमावयवेषु धूमसत्त्वाद्वह्नेश्चासत्त्वादन्वयव्यभिचारः, समवायसम्बन्धेन वह्न्यभाववति महानसादौ धूमसत्त्वाद् व्यतिरेकव्यभिचारश्च शङ्क्यः। हेतुतावच्छेदकसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभ्यामपि तयोर्विशेषणीयत्वात्।नाप्येतत्क्षणीये धूमे पूर्वक्षणटत्वविशिष्टवह्निसामानाधिकरण्याभावादव्याप्तिरिति वाच्यम्। तत्र वैशिष्ट्यानवच्छिन्नत्वस्यापि विशेषणीयत्वादिति केचित्। वस्तुतस्तु सिसाधयिषोदयानन्तरं हेतुसाध्यभावेन ततः पूर्वं तदभावात्तस्य वह्नेरसाध्यत्वेन तदसामानाधिकरण्येऽप्यदोषात्। सिसाधयिषोत्तरक्षणात्मकक्षणात् पूर्वक्षणत्वविवक्षयाऽव्याप्त्युद्भावनं तु काकदन्तविचारानुकारि। आमाकृतमा च पण्डितं पूर्वोक्तरीतिकव्याप्तिज्ञानमा-

ग्रेणानुमितिदर्शनस्य सार्वजनीनत्वात् । एतेनैव वह्नित्वघटोभयाव-च्छिन्नप्रतियोगिताकवह्न्यभाववति केवलवह्निदेशे धूमदर्शनेन व्यति-रेकव्यभिचारग्रासात् प्रसिद्धानुमाने अव्याप्तिशङ्कापि निरस्ता ज्ञेया । व्यासज्यवृत्तिधर्मावच्छिन्नाभावस्थले साध्यदर्शनेन, सवि-शेषणे हीति न्यायादभावस्योभयत्वे एव विश्रान्तेश्च। एवमन्येऽपि विचाराः स्वयमूह्य निरसनीयाः । एवञ्च साध्यासन्ताभाववद-वृत्तित्वं, साध्यवदन्यावृत्तित्वं च नातिदुष्टम्। नच, ज्ञेयं वाच्यत्वा-दित्यादौ केवलान्वयिसाध्यकेऽनुमाने साध्यासन्ताभावस्य साध्य-वदन्यस्य चाभावादव्याप्तिरिति शङ्क्यम् । परे ब्रह्मणि, यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेत्यादिश्रुत्या ज्ञेयत्वादिनिषेधात्॥ सर्वत्रापि केनचिद्रूपेण ज्ञेयत्वादिसत्त्वेऽपि रूपान्तरेण तदभावस्य सर्वजनीनत्वाच्च केवलान्वयिसाध्यकानुमानस्यैवाभावात् । प्रमेय-त्वे प्रमेयत्वस्य वाच्यत्वे वाच्यत्वस्य च यथासम्भवमप्रामाणिका-नवस्थात्माश्रययोर्भिया वक्तुमशक्यत्वात् । प्रमेयत्वाद्यभावस्य तत्रैव सिद्धेश्च । नाप्यवृत्तिसाध्यके कपिसंयोगी एतद्वृक्षत्वादि-त्यादौ साध्यासन्ताभाववदवृत्तित्वस्याव्याप्तत्वं शङ्क्यम् । दृष्टे कपिसंयोगे सिद्धसाधनत्वेनादृष्टे चाहेतुत्वेन तस्य दुरनुमानत्वात् । अतस्तद्वारणार्थं प्रतियोगिव्यधिकरणत्वेन यत्साध्याभावं विशेषय-न्ति तदपि मुधैव। यदपि, हेतुसमानाधिकरणा यावन्तस्ते साध्य-समानाधिकरणास्तत्त्वं व्याप्तिरिति लक्षणं, तदपि यावत्त्वस्याने-कपदार्थघटितत्वेन अपेक्षाबुद्धिविशेषविषयत्वरूपमात्रत्वाङ्गीकारे-ऽपि अपेक्षाबुद्धेरयमयम् एते सर्वे इत्याकारकत्वेन तत्तत्पदार्थविषय-कत्वपानेकपदार्थघटितत्वानपायेन प्रतिपत्तिगौरवग्रस्तमेव ॥ व्याव-र्त्तस्य व्यापकत्वरूपत्वेऽपि व्यापकत्वस्य तद्वन्निष्ठासन्ताभावाप्र-तियोगित्वरूपतया अभावद्वयनिवेशेनोक्ततुल्यकक्षमेव । अत एतद्-

पेक्षया हेतुमक्षिप्तासन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिरिति लक्षणं पूर्वोक्तविवक्षामात्रेणैव निर्वहतीति तदेव साध्विति दिक्॥ शङ्कराचार्यास्तु गोपालफुटिकायां धूमस्य सत्त्वेन वह्नेश्चाऽसत्त्वेन प्रसिद्धानुमाने व्यभिचारं दर्शयन्ति। नचाविच्छिन्नमूलाऽभ्रंलिहधूमलेखाया एव हेतुत्वमिति चिन्तामण्युक्तमपि सम्यक् । स्वल्पधूमेनाप्यत्रानुमित्यनुदयापत्तेः । नाप्यविच्छिन्नमूलत्वमात्रमत्र विवक्षितमिति युक्तम् । गोपालफुटिकायां तथात्वेऽपि वह्न्यऽभावात् । नचोत्पत्तिदेशस्यैव मूलत्वमतो न दोष इत्यपि युक्तम् । तथापि गुलीयन्त्रधूमे व्यभिचारस्य दुर्वारत्वात् । गुलीयन्त्रान्निर्गत्य दूरं गतायामेव गुलिकायां यन्त्रमुखे धूमदर्शनात् । नच तत्राग्निलापनदेश एव मूलमिति युक्तम् । तत्र तदवसरे धूमानुपलम्भात् । नापि यन्त्रान्तर्देशस्तथा । मानाभावात् । अतो वह्निः पूर्वमौषधे प्रविश्य ततो गुलिका प्रविश्यारुह्य बहिर्गच्छन्नेव धूममुत्पाद्य यातीति यन्त्रमुखं वा वह्निसक्तान्तर्देशो वा मूले देशः । तत्र च दर्शनावसरे वह्न्यभावात्तद्रीत्या नैयायिकपित्राऽपि व्यभिचारो न वारयितुं शक्यः । तथाचानित्ये वस्तुनि साध्यभूते साध्यस्य हेतुपूर्वकालीनसत्तामात्रस्यैवानुमितिर्न तु तद्देशकालविशिष्टाया अपि सत्तायाः । नित्ये तु साध्ये कालविशिष्टाया अपीत्यादि बोध्यम् ॥

प्रकृतमनुसरामः ॥ तच्च सामानाधिकरण्यं भूयः सकृद्वा दर्शनात् संस्कारोद्बोधे स्मृतिपथमारोहति । ततस्तत्स्मरणोत्तरं हेतुः साध्यं निश्चाययति । यथा महानसादौ निश्चिते धूमस्य वह्न्यव्यभिचरितसामानाधिकरण्ये पश्चात् पर्वतादौ दृष्टे धूमे तत्स्मरणोत्तरं धूमो वह्निं निश्चाययति, धूमदेशो वह्निरिति । स निश्चयोऽनुमितिः । तस्य कारणं ज्ञायमानं लिङ्गमित्युक्तम् । केचित्तु लि-

ङ्गज्ञानं कारणमाहुः। उभयथापि सम्बन्धिव्यभिचाराभावान्नानुमितेर्यथार्थत्वहानिः । अनुमानं च द्विविधम् । केवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् । तत्र पक्षव्यतिरिक्ते यस्य हेतोः साध्यसहचारो न लभ्यते, किन्तु व्यतिरेकव्याप्तिमान् स हेतुः केवलव्यतिरेकी । तादृशहेतुकं यदनुमानं तत्तथा । यथा पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादिति हेतुसाध्ययोः । साध्याभावहेत्वभावयोश्च यत्र व्याप्तिः सोऽन्वयव्यतिरेकी हेतुः।तादृशहेतुकं यदनुमानं तथा । यथा पर्वतो वह्निमान् धूमादितिप्रसिद्धानुमानम्।इदं द्विविधमपि स्वार्थपरार्थभेदात् पुनर्द्विविधम् । तत्र स्वार्थं तूक्तमेव । परार्थं न्यायपूर्वकम् । न्यायो नामावयवबोधकवाक्यम् । अवयवाश्चान्वयविप्रायस्य महावाक्यस्यावयवा इवैकदेशाः । ते च प्रतिज्ञाहेतूदाहरणोपनयनिगमनाख्याः पञ्चेति नैयायिकाः, कापिलाश्च । तत्र साध्यविशिष्टपक्षप्रतिपादकं वाक्यं प्रतिज्ञा । यथा पर्वतो वह्निमानिति । तत् कुत इत्याकाङ्क्षायां पञ्चम्यन्तं व्याप्यप्रतिपादकं वचनं हेतुः । यथा धूमादिति । कुतो धूमस्य वह्न्यनुमापकत्वमित्याकाङ्क्षायां धूमे वह्निनिरूपितव्याप्तिः पक्षधर्मता चेत्युभे क्रमेण प्रतिपाद्ये । तत्र सव्याप्तिकं दृष्टान्तवचनमुदाहरणम् । यथा यो यो धूमवान् स स वह्निमान् । यथा महानसम् । यदेवं तदेव, यथा महानसमिति वा इत्यन्वयव्याप्तौ । व्यतिरेकव्याप्तौ तु,यो न वह्निमान् स न धूमवान् । यथा ह्रदः । यन्नैव तन्नैवम् । यथा ह्रद इति वा। पक्षे व्याप्तिविशिष्टोपसंहार उपनयः । यथा वह्निव्याप्यधूमवानयमिति । तथाचायमिति वा । व्यतिरेके तु वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवानयमिति पक्षे साध्योपसंहारो निगमनम् । यथा तस्माद् वह्निमानिति । परामर्शस्तु अन्वयव्याप्तौ लिङ्गस्य साध्यव्याप्यत्वेन पक्षधर्मतानिश्चयः । व्यतिरेकव्याप्तौ तु साध्या-

पेक्षया हेतुमन्निष्ठात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिरिति लक्षणं पूर्वोक्तविवक्षामात्रेणैव निर्वहतीति तदेव साध्विति दिक्॥ शङ्कराचार्यास्तु गोपालफुटिकायां धूमस्य सत्त्वेन वह्नेश्चाऽसत्त्वेन प्रसिद्धानुमाने व्यभिचारं दर्शयन्ति। नचाविच्छिन्नमूलाऽभ्रंलिहधूमलेखाया एव हेतुत्वमिति चिन्तामण्युक्तमपि सम्यक् । स्वल्पधूमेनान्यत्रानुमित्यनुदयापत्तेः । नाप्यविच्छिन्नमूलत्वमात्रमत्र विवक्षितमिति युक्तम । गोपालफुटिकायां तथात्वेऽपि वह्न्यऽभावात। नचोत्पत्तिदेशस्यैव मूलत्वमतो न दोष इत्यपि युक्तम । तथापि गुलीयन्त्रधूमे व्यभिचारस्य दुर्वारत्वात । गुलीयन्त्राग्निगेस दूरं गतायामेव गुलिकायां यन्त्रमुखे धूमदर्शनात। नच तत्राग्निलापनदेश एव मूलमिति युक्तम। तत्र तदवसरे धूमानुपलम्भात। नापि यन्त्रान्तर्देशस्तथा। मानाभावात । अतो वह्निः पूर्वमौषधे प्रविश्य ततो गुलिकां प्रविश्याऽऽशु बहिर्गच्छन्नेव धूममुत्पाद्य यातीति यन्त्रमुखं वा वह्निसत्त्वान्तर्देशो वा मूले देशः। तत्र च दर्शनावसरे वह्न्यभावात्तद्रीत्या नैयायिकाणामपि व्यभिचारो न वारयितुं शक्यः । तथाचानित्ये वस्तुनि साध्यभूते साध्यस्य हेतुपूर्वकालीनसत्तामात्रस्यैवानुमितिर्न तु तद्देशकालविशिष्टाया अपि सत्तायाः । नित्ये तु साध्ये कालविशिष्टाया अपीत्यादि बोध्यम ॥

प्रकृतमनुसरामः ॥ तच्च सामानाधिकरण्यं भूयः सकृद्वा दर्शनात संस्कारोद्बोधे स्मृतिपथमारोहति । ततस्तत्स्मरणोत्तरं हेतुः साध्यं निश्चाययति । यथा महानसादौ निश्चिते धूमस्य वह्न्यव्यभिचरितसामानाधिकरण्ये पश्चात् पर्वतादौ दृष्टे धूमे तत्स्मरणोत्तरं धूमो वह्निं निश्चाययति, धूमदेशो वह्निरिति । स निश्चयोऽनुमितिः । तस्य कारणं ज्ञायमानं लिङ्गमित्युक्तम । केचित्तु लि-

ङ्गज्ञानं कारणमाहुः। उभयथापि सम्बन्धिव्यभिचाराभावान्नानुमितेर्यथार्थत्वहानिः । अनुमानं च द्विविधम् । केवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् । तत्र पक्षव्यतिरिक्ते यस्य हेतोः साध्यसहचारो न लभ्यते, किन्तु व्यतिरेकव्याप्तिमान् स हेतुः केवलव्यतिरेकी । तादृशहेतुकं यदनुमानं तत्तथा । यथा पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादिति हेतुसाध्ययोः । साध्याभावहेत्वभावयोश्च यत्र व्याप्तिः सोऽन्वयव्यतिरेकी हेतुः।तादृशहेतुकं यदनुमानं तथा। यथा पर्वतो वह्निमान् धूमादितिमसिद्धानुमानम्।इदं द्विविधमपि स्वार्थपरार्थभेदात् पुनर्द्विविधम् । तत्र स्वार्थं तूक्तमेव । परार्थं न्यायपूर्वकम् । न्यायो नामावयवबोधकवाक्यम् । अवयवा श्चावयविप्रायस्य महावाक्यस्यावयवा इवैकदेशाः । ते च प्रतिज्ञाहेतूदाहरणोपनयनिगमनाख्याः पञ्चेति नैयायिकाः, कापिलाश्च। तत्र साध्यविशिष्टपक्षप्रतिपादकं वाक्यं प्रतिज्ञा । यथा पर्वतो वह्निमानिति । तत् कुत इत्याकाङ्क्षायां पञ्चम्यन्तं व्याप्यप्रतिपादकं वचनं हेतुः । यथा धूमादिति । कुतो धूमस्य वह्न्यनुमापकत्वमित्याकाङ्क्षायां धूमे वह्निनिरूपितव्याप्तिः पक्षधर्मता चेत्युभे क्रमेण प्रतिपाद्ये । तत्र सव्याप्तिकं दृष्टान्तवचनमुदाहरणम् । यथा यो यो धूमवान् स स वह्निमान् । यथा महानसम् । यदेवं तदेवं, यथा महानसमिति वा इत्यन्वयव्याप्तौ । व्यतिरेकव्याप्तौ तु,यो न वह्निमान् स न धूमवान् । यथा ह्रदः । यन्नैवं तन्नैवम् । यथा ह्रद इति वा। पक्षे व्याप्तिविशिष्टोपसंहार उपनयः । यथा वह्निव्याप्यधूमवानयमिति । तथाचायमिति वा । व्यतिरेके तु वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवानयमिति पक्षे साध्योपसंहारो निगमनम् । यथा तस्माद् वह्निमानिति । परामर्शस्तु अन्वयव्याप्तौ लिङ्गस्य साध्यव्याप्यत्वेन पक्षधर्मतानिश्चयः । व्यतिरेकव्याप्तौ तु साध्या-

भावव्यापकाभावप्रतियोगित्वेन तथात्वनिश्चयः। तदाकारश्चान्वये वह्निव्याप्यधूमवानयमिति । व्यतिरेके तु वह्न्यभावव्यापकाभावप्रतियोगिधूमवानयमिति बोध्य इत्याहुः ॥

सौगतास्तु प्रतिज्ञोदाहरणात्मकद्व्यवयवमेव न्यायं स्वीकुर्वन्ति । यथा यत्सत् तत् क्षणिकं यथा घट इति। तदतिक्लिष्टम् ॥

मीमांसकास्तु त्र्यवयवमङ्गीकुर्वन्ति । तत्र शाबरभाष्ये उदाहरणादित्रितयमुक्तम् । यथा यत् कर्म तत् फलवत् । यागोऽपि कर्म तेनापि फलवता भाव्यमिति । भट्टवार्तिके तु प्रतिज्ञादित्रितयमुक्तम् । यथा. वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् * वेदाध्ययनसामान्यादधुनाध्ययनं यथेति । इदमेव च युक्तम् । व्याप्तिपक्षधर्मतयोरेवं बोधसौकर्यात् । पुराणेष्वेवमेव त्रयाणां प्रयोगदर्शनाच्च । यथा पञ्चमस्कन्धे राज्ञा, कथमनुमीमहीति सूर्यादिगतिप्रश्ने श्रीशुकेः प्रयुक्तम्। यथा कुलालचक्रेण भ्रमता सह भ्रमतां तदाश्रयाणां पिपीलिकादीनां गतिरस्त्येव । प्रदेशान्तरेष्वप्युपलभ्यमानत्वात् । एवं नक्षत्रराशिभिरुपलक्षितेन कालचक्रेण ध्रुवं मेरुं च दक्षिणतः परिचरता सह परिधावमानानां तदाश्रयाणां सूर्यादीनां ग्रहाणां गतिरस्त्येव । नक्षत्रान्तरे राश्यन्तरे चोपलभ्यमानत्वादिति ॥ अथ हेतुदोषज्ञानार्थं प्रसङ्गाद्धेत्वाभासा उच्यन्ते । ते च सव्यभिचारविरुद्धसत्प्रतिपक्षाऽसिद्धबाधितभेदात् पञ्चेति नैयायिकाः । तत्र साध्यतदभावसाधकतया प्रतीयमानः सव्यभिचारः। अनैकान्तिक इति तस्यैव नामान्तरम् । स द्विविधः । साधारणोऽसाधारणश्च। तत्रान्वयव्याप्त्या साध्यतदभावयोः साधकः साधारणः । यथा धूमवान् वह्नेरिति । व्यतिरेकव्याप्त्या तादृशोऽसाधारणः । यथा शब्दः अनित्यः शब्दत्वादिति । नैयायिकास्तु अनुपसंहारिणमपि तृतीयमाहुः । तल्लक्षणं त्वदृत्तिसाध्यक-

त्वम्। यथा आकाशवान् दिश इति। अत्र स्वरूपसम्बन्धस्य वृत्त्यनियामकत्वात् तथात्वमिति तदाशयः। केवलाऽन्वयिधर्मावच्छिन्नपक्षकमित्यपि क्वचित्। यथा सर्वमनित्यं, प्रमेयत्वादिति। व्यतिरेकव्याप्तिग्रहप्रतिबन्धोऽत्र दूषकताबीजमिति च। साध्याऽसमानाधिकरणो हेतुर्विरुद्धः। यथा गौरश्वत्वादिति। अयं च स्वरूपासिद्ध्यान्नातिरिच्यते। पक्षे साध्यधीप्रतिबन्धकः सत्प्रतिपक्षः। यथा जलम् उष्णं स्पर्शवत्त्वात्। नोष्णमतेजस्त्वादिति। व्यभिचाराद्यन्यपरामर्शप्रतिबन्धकतावच्छेदकधर्मत्वमसिद्धिः। सा त्रिधा—स्वरूपासिद्धिराश्रयासिद्धिर्व्याप्यत्वासिद्धिश्च। पक्षे हेत्वभावः स्वरूपासिद्धिः। घटः पृथिवी पटत्वादिति। पार्थसारथिमिश्रास्तु— बुद्धो धर्माधर्मवेदी सर्वज्ञत्वात्। न हि सर्वज्ञत्वस्य किञ्चित् स्वरूपमस्तीत्यतोऽत्र स्वरूपासिद्धिरित्याहुः। पक्षे पक्षताया अभाव आश्रयासिद्धिः। यथा गगनकमलं सुरभि कमलं, सुरभिकमलत्वादिति। अत्र पक्षे कमले गगनीयत्वाभावः। नित्यमाकाशम् अनवयवत्वादित्याकाशानङ्गीकारिणं सौत्रान्तिकं प्रत्याश्रयासिद्धिरिति पार्थसारथिमिश्राः। एतद्भिन्नासिद्धिर्व्याप्यत्वासिद्धिः। यथा धूलीपटले धूमनिष्ठव्याप्यभावः। साध्याप्रसिद्धिर्हेत्वप्रसिद्धिर्वा व्याप्यत्वासिद्धिः। पक्षे साध्यशून्यत्वं बाधः। यथा जलादौ पक्षे वह्न्यभावः। अयमेव कालात्ययापदिष्ट इत्युच्यते। तथा उपाधिरपि दोषः। लक्षणं तु साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिरिति। यथा काकः श्यामो, मित्रातनयत्वाद् इत्यत्र शाकपाकजत्वम्। *याज्ञीया हिंसा अधर्मसाधनं, हिंसात्वादित्यत्र* निषिद्धत्वम्। शाकपाकजत्वं हि श्यामत्वव्यापकम्। यत्र पुरुषे श्यामत्वं तत्र शाकपाकजत्वस्य वैद्यकादौ निर्णयात्। मित्रातनयत्वस्य वा व्यापकम्। गौरे मित्रातनये तदभावात्। एवं निषिद्ध-

त्वमपि बोध्यम् । उपाधौ दूषकताबीजं तु यथासम्भवं व्यभिचारोन्नायकत्वं, सत्प्रतिपक्षोन्नायकत्वं च बोध्यम् । एतैर्दोषैः शून्यो हेतुः साध्यानुमापक इति हेतुविचार एते दर्शिताः । अनुमानं च श्रुतितदनुगृहीततर्कोपजीवनेन लोके भगवद्रूपेण व्यवहारे चोपयुज्यते । तत्राद्ये उपयोग उक्त एकादशस्कन्धे, अत्र मां मार्गयन्त्यद्धा युक्ता हेतुभिरीश्वरम् * गृह्यमाणैर्गुणैर्लिङ्गैरग्राह्यमनुमानत इति । प्रयोगस्तु— श्रीकृष्णः ईश्वरः । अन्यस्यासाधनविरुद्धगोवर्द्धनोद्धरणादिकार्यकर्तृत्वात्। यन्नैवं तन्नैवम्।इतरवत् । यदेवं तदेवम् । रामादिवदिति । श्रुतिशरणानां तु श्रुत्यैव तादृशज्ञानसम्भवादत्र युक्ता इत्युक्तम् । अधिकारानुसारेणापाततः श्रुत्या स्वरूपं ज्ञात्वा येऽत्र विचारे प्रवृत्तास्त इत्यर्थः । व्यवहारेतूपयोगः स्फुट एव ॥ धर्मराजदीक्षितास्तु—ब्रह्मभिन्नं सर्वं मिथ्या । ब्रह्मभिन्नत्वात् । यदेवं तदेवम् । शुक्तिकारजतवदिति जगन्मिथ्यात्वसाधन उपयोगमाहुः । तन्मान्तरे प्रस्थाने च अनिर्वचनीयरजताऽसिद्ध्या दृष्टान्तासिद्धेः । यथाकथञ्चित् सिद्धावपि तन्मिथ्यात्वे रजतास्तरस्य बुद्ध्याकारत्वस्यैव प्रयोजकत्वेन ब्रह्मभिन्नत्वस्याप्रयोजकत्वात् । यदस्ति पञ्चाशीत्यादिवाक्यैस्तेषामपि भगवद्रूपत्वात्।इदं सर्वं यदयमात्मेत्यादिश्रुतिविरोधेन हेत्वसिद्धेश्च। हेतोः प्रतीयमानत्वघटितत्वे त्वोमिति ब्रूमः । प्रातीतिकस्य बुद्ध्याकारत्वेन मिथ्यात्वस्यास्माकमप्यभिमतत्वात् । न यदिदमग्र आस न भविष्यदतो निधनादनुमितमन्तरा त्वयि विभाति मृषैकरस इत्यादिवाक्यैरन्तरा विभातस्य मिथ्यात्वकथनात् । प्रयोगश्च— ब्रह्मान्यत्वेन प्रतीयमानम् अवस्तु । आद्यन्तवत्त्वात् । स्वाप्निकवत् । नच विपरीतानुमानेन हेतोः साधारणत्वं शङ्क्यम् । स्वाप्निकानां मिथ्यात्वस्य पूर्वमेवोपपादितत्वात् । स्वप्ने स्त्रिया संछज्यमानदशां दूर-

देशगमनादिदर्शां चानुभवतो जागरणे क्रिया देशान्तरस्य चाद-र्शनात् तत्तत्सत्त्वस्य वाधितत्वाच्च । नचानेन जगन्मात्रस्य मि-थ्यात्वं शङ्क्यम् । विमतः प्रपञ्चः स्वोत्कृष्टसत्ताकसदृशसृष्टिपूर्वकः । मिथ्यासृष्टित्वात् स्वाप्निकवदित्यनुमानेन, इदं सर्वं यदयमात्मेत्या-दिश्रुतिभिः, विश्वं वै ब्रह्म तन्मात्रं संस्थितं विष्णुमायया* यथे-दानीं तथा चाग्रे पश्चादप्येतदीदृशमिति, तदेतदक्षयं नित्यं जग-न्मुनित्वराखिलम् * आविर्भावतिरोभावजन्मनाशविकल्पवदिति श्रीभागवतविष्णुपुराणवाक्याभ्यां चानुगृहीतेन स्वदुक्तमुपगम्य मि-थ्यात्वसाधनेऽपि ब्रह्मात्मकस्य प्रपञ्चस्य सत्यतायाः निराबाधत्वात् । मिथ्यात्वं चाऽतत्त्वे सति तत्त्वेन प्रतीयमानत्वं, तत्त्वेन कथ्यमानत्वं च । यत्तु स्वाश्रयत्वेनाभिमतयावन्निष्ठात्यन्ताभावप्रतियोगित्वं मि-थ्यात्वमिति लक्षणम् । तत्तु मायावादिनामद्वैतभङ्गायैव, न त्वद्वैतसाध-नाय । अनेनैव ब्रह्मनिष्ठस्य जगदत्यन्ताभावस्य तत्प्रतियोगित्वेन रूपेण जगतश्च सिद्धेः । यच्च, अंशिनः स्वांशगात्यन्ताभावस्य प्रतियोगिता * अंशित्वादितरांशीव दिगेषैव गुणादिष्विति मत-मिति मद्वर्ये, पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी । पटत्वात् । पटान्तरवदिति मिथ्यात्वसाधनायानुमानमुपन्यस्तम् । तदप्यसङ्ग-तम् । प्रत्यक्षेणैव हेतोर्बाधितत्वावगमात् । नन्वधिष्ठानब्रह्मसत्ताया-स्तत्र विषयत्वमिति न तेन हेतुदोषसिद्धिरितिचेत् । ब्रह्मसत्तेति कोऽर्थः । ब्रह्मणः सत्तेति वा, ब्रह्मैव सत्तेति वा । नाद्यः । निर्द्धर्म-कत्वाभ्युपगमविरोधात् । नेतरः । न चक्षुषा गृह्यते इति श्रुतिवि-रोधात् । नचोक्तश्रुतिविरोधो ब्रह्मनादिनोऽपि तुल्यत्वमिति श-ङ्क्यम् । तस्याः श्रुतेर्मूलरूपपरत्वात् । तस्य प्रमाणबलेनाप्रत्यक्षत्वेन अदोषाच्च । प्रत्यक्षस्य च घृतद्रवत्ववद् ब्रह्मधर्मात्मकत्वात् । शेष-स्य विषयताद्रूपस्यान्तराभानेनैव ब्रह्मधर्मात्मकतत्सत्ताया अभाना-

च्च । अत एव, ईक्षेत विभ्रममिदं मनसो विलासं दृष्टं विनष्टमतिलोलमलातचक्रम् ॥ विज्ञानमेकमुरुधेव विभाति माया स्वप्नस्त्रिधा गुणविसर्गकृतो विकल्प इत्यादिवाक्यानामपि न विरोधः । गुणविसर्गकृतविकल्पस्यैव मनोविलासत्वकथनात्त्रिकल्पस्य च मनोधर्मत्वेन तत्प्रयोजकस्य तथात्वेनाऽनभिमेतत्वात् । भ्रान्ताः पुनर्गौडवार्तिकस्यैतन्मूलकत्वमनवगत्य यत्किञ्चित् प्रलपन्तीत्युपेक्षणीयाः । एतेनैव विभूत्यध्याये, मनोविकारा एवैते यथा वाचाभिधीयत इतिविभूतीनां मनोविकारत्वमपि व्याख्यातं ज्ञेयम् । वाचारम्भमतिनियतरूपेणैव तथात्वबोधनात् । एवमन्यत्रापि बोध्यम् ॥ इत्यनुमानम् ॥

उपमानं तु न मानान्तरम् । सादृश्यातिदेशवाक्यार्थस्मरणसहकारेण चक्षुरादिनैव संज्ञासंज्ञिपरिच्छेदोपपत्तौ सादृश्यज्ञानादेर्मानान्तरत्वकल्पनस्यायुक्तत्वात् । अन्यथा योग्यानुपलब्धेरपि मानान्तरत्वापत्तेः । नचैवं सत्युपमितेः परोक्षत्वं व्याहन्येतेति वाच्यम् । इष्टापत्तेः । नच चक्षुर्व्यापारापगमेऽपि जायमानत्वान्नैवमिति वाच्यम् । पूर्वजातस्य करणव्यापारोपरमेऽप्यनुपरमस्यानुभवसाक्षिकत्वेन पुनर्जननकल्पनाया एवायुक्तत्वात् । उपेक्षान्यज्ञानस्य त्रिक्षणावस्थायिताया अभ्युपगमैकशरणत्वात् । मानसं वा तदस्तु । अतिदेशवाक्याल्लक्षणत्वेन पूर्वं ज्ञातस्य ततः पदार्थस्फुरणेन स्फुरितस्य सादृश्यस्य संस्कारेण शब्दाभिव्यक्तौ दृष्टसंवादनिश्चितप्रामाण्यस्य वाक्यस्य च सहकारेण मनसाऽयं गवयपदवाच्य इति संज्ञासंज्ञिपरिच्छेदस्य प्रसिद्धपदसमभिव्याहृतवाक्यस्मरणसहकृतमनसा मधुकरादिशक्तिग्रहस्येव उपपत्तेः । तदुत्तरमेतत्पदवाच्यत्वेनैनं जानामीत्यनुव्यवसायेन मानसत्वनिश्चयाच्चेति ॥ भट्टास्तु— पूर्वदृष्टे स्मर्यमाणेऽर्थे दृश्यमानार्थसादृश्य-

ज्ञानमुपमितिः । यथा या सावस्माभिः पूर्वं दृष्टा गौः साऽनेन गवयेन सदृशीति तदाकारमाहुः । तत्रापि जानामीत्येवानुव्यवसायाग्याजसत्वस्यैव निश्चयः । सादृश्यं तु निरूपकभेदसहिष्णुरूपादिवन्निरूप्यधर्मः पदार्थान्तरम् । निरूपकधर्मसजातीयो निरूप्यधर्म एव वा ॥ शास्त्रदीपिकायां तु—अर्थान्तरयोगिभिः सम्बन्धिसामान्यैरर्थान्तरस्य तादृशो योगः सादृश्यम् । यथा निरूपकगोर्ये कर्णाद्यवयवास्तत्सजातीया एव निरूप्यस्य गवयस्यापि धर्मभूता इति तत्सादृश्यमस्येत्युक्तम् । यत्तु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं सादृश्यमिति । तन्न रोचिष्णु । एकेनापि सदृशबुद्धिसिद्धेर्भूयःपदस्यानतिप्रयोजनत्वात् । नचैवं सति श्यामत्वमात्रसाधर्म्येण मातङ्गमशकयोरपि सदृशत्वप्रतीत्यापत्तिरिति वाच्यम् । श्यामत्वशरीरित्वजङ्गमत्वादीनां मातङ्गगतधर्माणां मशके विद्यमानत्वेन भूयःपददानेऽपि तुल्यत्वात् । नच ते तद्गता धर्मा नेति न दोष इति समञ्जसम् । तत्समवेतानामन्यत्रासम्भवेन तद्गतपदस्य साजात्यपरताया एवौचित्यात् । नच ततोऽपि भूयांसो विवक्षिता इति वाच्यम् । तथा सति भूयस्त्वस्यापर्यवसानेऽनन्वयापत्तेः । नचोक्तदूषणानुद्धारः शङ्क्यः । विरोधिधर्मग्रहप्रावल्येनैवोद्धारसम्भवात् । अत एव सदृशयोरपि यमलयोर्तुल्ययोर्वा पूर्वं सादृश्यमनयो दृष्टे च तुवरत्वम् । कुसुमवर्णादौ वैसादृश्यनिश्चय इति युज्यते । अतो नैयायिकलक्षणं नातिरम्यम् । सर्वं गङ्गासमं तोयं सर्वे व्याससमा द्विजा इत्यादौ तोयत्वादिनैकेनापि धर्मेण साम्याभिलापाद् घनश्यामस्वर्णगौर्यादिप्रयोगदर्शनाच्चोक्तमेव लक्षणं युक्तमिति दिक् ॥

अर्थापत्तिस्तु प्रत्यक्षेण शब्देन वा प्रमितस्यार्थान्तरं विनाऽनुपपद्यमानस्योपपत्तयेऽर्थान्तरकल्पना । यथा जीवन् देवदत्तो

गृहे नास्तीयत्र जीवनसंसृष्टगृहाभावस्यानुपपद्यमानस्योपपत्तये बहिर्भावकल्पना । साऽपि प्रमाणान्तरमिति मीमांसकाः ।

नैयायिकास्तु— देवदत्तो बहिरस्ति, जीवत्त्वे सति गृहे असत्त्वादिति केवलव्यतिरेकिणैव तत्कार्यसिद्धेर्न सा ततोऽतिरिक्तेत्याहुः ॥ तत्र पार्थसारथिमिश्रा — जीवनसंसृष्टगृहाभावबहिर्भावविषयकयोर्ज्ञानयोरेककालिकत्वेन हेतुहेतुमद्भावाभावात् । नच तयोर्नैककालिकत्वमिति वाच्यम् । बहिर्भावमनन्तर्भाव्य जीवनगृहाऽभावयोः समृष्टयोः प्रसेतुमशक्यत्वेन तत्ससर्गग्रहदशायां बहिर्भावान्तर्भावस्य नियतत्वादेव कालिकज्ञानविषयत्वस्यानपनोद्यत्वात् । नन्वेवं प्रमाणान्तरत्वेऽपि केवलस्य जीवनस्य गृहाभावस्य वा गमकत्वाभावात् समृष्टमुभयं गमकमित्यङ्गीकार्यम् । तथा सति तथैव संविदा बहिर्भावस्यापि प्रमितत्वादेककालमेव भानमित्यर्थापत्तावपि प्रमेयाभावेन प्रामाण्यसिद्धिर्न स्यादिति चेन्न । संसृष्टबुद्धेरेव प्रमेयत्वात् । नच तत्र कारणाभावः शङ्क्यः।अन्यथानुपपत्तेरेव कारणत्वात् । अन्यथानुपपत्तिस्तु अर्थान्तरकल्पनया समाधेयत्वेनोच्यमानः प्रमाणसिद्धयोर्द्वयोरर्थयोः परस्परप्रतिघातः । तत्समाधानायार्थान्तरकल्पन चार्थापत्तिः । तया च समाहिते प्रतिघाते प्रमितयोः समृष्टबुद्धिः प्रमेयप्रमारूपेत्याहुः ॥

वेदान्तपरिभाषाकारस्तु— उपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिः । तत्रोपपाद्यज्ञान करणम् । उपपादकज्ञान फलम् । येन विना यदनुपपन्न तत्तत्रोपपाद्यम् । यस्याभावे यस्यानुपपत्तिस्तत्तत्रोपपादकम् । यथा रात्रिभोजनेन विना दिवाऽभुञ्जानस्य पीनत्वमनुपपन्नमिति तादृशपीनत्वमुपपाद्यम् । रात्रिभोजनस्याभावे तादृशपीनत्वस्यानुपपत्तेरिति रात्रिभोजनमुपपादकम् । रात्रिभोजनकल्पनारूपाया प्रमितार्थस्यापत्तिः कल्पनेति षष्ठीसमासेना-

ऽर्थापत्तिशब्दो वर्त्तते। कल्पनाकरणे पीनत्वादिज्ञाने तु अर्थस्यापत्तिः कल्पना यस्मादिति बहुव्रीहिसमासेन वर्तत इति फलकरणयोरुभयोस्तत्पदप्रयोग इत्याह। तन्न रुचिरम्। कल्पनायाः सम्भावनारूपत्वेन प्रमितत्वायोगात्। उपपाद्यस्य पीनत्वस्य मेदोरोगेण तृणविशेषजन्यतन्दुलपायसभोजिनः पक्षमात्रभोजनेनापि दर्शनात्। कल्पनायाः सम्भावनारूपत्वे निश्चयात्। कल्पयामीत्यनुव्यवसायात् प्रमिणोमीत्यनुव्यवसायाभावाच्च प्रमितित्वायोगात्। प्रमितित्वेऽपि तेन विनाऽनुपपन्नस्य तदभावव्यापकीभूताभावप्रतियोगित्वाद् व्यतिरेकव्याप्तिसत्त्वेन तज्ज्ञानस्यार्थापत्तिकरणस्यानुमानानतिरेकात्। नच साधनेन साध्यानुमितौ व्यतिरेकव्याप्तिज्ञानस्य नानुपयोग इति वाच्यम्। बाधकाभावात्। धूमादावन्वयव्याप्तिज्ञानरहितस्य व्यतिरेकव्याप्त्यैवानुमितिदर्शनात्। नच सार्थापत्त्यैवेति वाच्यम्। तस्याः प्रमाणान्तरत्वस्यैव दुर्लभत्वात्। अनुमिनोमीत्यनुव्यवसायदर्शनात् तत्करणस्य प्रत्युतानुमानत्वेनैव सिद्धिः। अतः शास्त्रदीपिकोक्तमेव साधीयः। तत्राप्येष विशेषः। द्वारमित्यादावेकस्यैवार्थस्य प्रमितत्वादनुपपत्तिलक्षणे द्वयोरर्थयोरिति द्वित्वं त्याज्यमिति। सा चार्थापत्तिर्द्विधा। दृष्टार्थापत्तिः, श्रुतार्थापत्तिश्चेति। तत्राद्या तूदाहृतैव। द्वितीया तु द्विधा। अभिधानानुपपत्तिरभिहितानुपपत्तिश्चेति। तयोर्मध्ये यत्र वाक्यैकदेशस्य श्रवणेऽन्वयाभिधानानुपपत्त्या अन्वयाभिधानोपयोगिपदान्तरं कल्प्यते तत्राभिधानानुपपत्तिः। यथा द्वारमित्यादौ पिधेहीत्यादिपदाध्याहारः। वेदेऽपि विश्वजिता यजेतेत्यत्र स्वर्गकाम इति पदाध्याहारः। नच द्वारमित्यादावन्वयाभिधानात् पूर्वमिदमन्वयाभिधानं पिधानोपस्थापकपदं विनानुपपन्नमिति कथं ज्ञातुं शक्यत इति वाच्यम्। अभिधानपदेन करणव्युत्पत्त्या ता-

त्पर्यस्य विवक्षितत्वेन द्वारकर्मकापिधानक्रियासंसर्गपरत्वं पिधानो-
पस्थापकपदं विना अनुपपन्नमिति ज्ञानस्य तत्रापि सम्भावित-
त्वात् । अभिहितानुपपत्तिस्तु, यत्र वाक्यावगतोऽर्थोऽनुपपन्नत्वेन
ज्ञातः सन्नर्थान्तरं कल्पयति तत्र द्रष्टव्या । यथा ज्योतिष्टोमेन
स्वर्गकामो यजेतेत्यत्र वाक्यावगतज्योतिष्टोमस्य क्षणिकतया स्वर्ग-
साधनतानुपपत्त्या मध्यवर्त्यपूर्वं कल्प्यत इति वेदान्तपरिभाषाका-
रः । वस्तुतस्तु द्वारमित्यादौ द्वितीयाभिहिता कर्मताऽनुपपन्ना सती
स्वान्वययोग्यां क्रियां कल्पयतीत्यभिहितानुपपत्तिरेवार्थाध्याहार-
पक्षमादायादरणीया लाघवात् । तात्पर्यानिश्चयेन कल्पितस्य प-
दस्य प्रकृतान्वयाभिधानानुपयोगात् । ज्ञाते च तात्पर्येऽर्थस्यैव
पूर्वं भानेनान्वयबोधसम्भवादेव पदस्यानुपयोगाच्च । एवमेव विश्व-
जिता यजेतेत्यत्रापि स्वर्गस्य स्वर्गेप्सोरधिकारिणो वाऽध्याहारो,
न तु तद्वाचकपदस्यापि । न्यायसाम्यात् । नचैवमूहादिबोधप्रस-
क्तिः शङ्क्या । तस्य श्रुत्यनुज्ञाविषयगोचरत्वात् । पूयति वा एतद्वचो-
ऽक्षरं यदेनदूहति तस्माद्दचं नोहेदिति श्रुत्या ऋगक्षरातिरिक्तस्यो-
हस्याभावात् । इदमहममुष्यामुष्यायणस्याध्वरं हरामीत्यादावपि तथा
बोधनात् । कल्पनेऽपि, असौ ते पशुरिति द्वेष्यं वा मनसा ध्या-
यन् यदि न द्विष्यादाखुस्ते पशुरिति ब्रूयादिति तथा ब्राह्मणे-
ऽपि तद्बोधनाच्च । अतो यत्राधिकारवाक्ये प्रतितिष्ठन्ति ह वै
ते य एता रात्रीरुपयन्तीत्यादौ वादमात्रं श्रुतं तत्रापि पिशब्दः
प्रकृतोपकारस्य पदार्थानां चापूर्वार्थत्वाय श्रुत्याशयगोचरत्वादेव
कल्पनीयः । श्रुतेः । शब्दप्रधानत्वाच्च न तु सर्वत्र । प्रयोजनाभा-
वादिति । एवं द्विविधापीयमर्थापत्तिर्यथायथं प्रत्यक्षशब्दयोरनुग्रा-
हिका । प्रत्यक्षादिप्रमितार्थज्ञानद्वारार्थहेतुत्वात् । अभ्यासादिवत् ।
न तु प्रमाणान्तरम् । तद्ग्राहकस्य बलीयसोऽभावादिति योग्यानुप-

लब्धेः प्रामाणान्तरत्वं तु पूर्वमेव निरस्तम् । अविदितकर्तृकः शब्दविशेषः— इह वटे यक्षस्तिष्ठतीत्यादिरूप ऐतिह्यनामा । स निर्णयाभावाद् प्रमाणमेव न भवति । निर्णये शब्दान्तर्गतत्वाच्छब्द एवेति न मानान्तरम् । सहस्रादिसंख्ययाऽवयवभूतशतादिसंख्यावगतिराढकपरिमाणेनावयवभूतकुडवपरिमाणावगतिरिति सम्भवाख्यं तु तदविनाभावनिमित्तत्वादनुमानान्तर्गतमेव । लोकप्रसिद्धिस्तु प्रत्यक्षान्तर्गतैव । चेष्टायास्त्वनुमान एवान्तर्भावः । लिपेः शब्दस्मारकत्वाच्छब्दे इति न तयोरपि प्रमाणान्तरत्वम् । श्वो मे भ्राताऽऽगन्तेति प्रतिभाख्यं तु लिङ्गाद्याभासजन्यत्वेनागमानिश्चायकत्वादेवाप्रमाणमिति पूर्वोक्तान्येव व्यवहारे प्रमाणानि । परमार्थे तु शब्द एवेति सिद्धम् ॥

ननु तृतीयस्कन्धसुबोधिन्यां कापिलेये त्रिप्रमाणवाद उक्तः। त्रीण्येव प्रमाणानि— इन्द्रियाणि शब्दो मनश्च, चक्षुः श्रोत्रं मनो वेत्यादिकथनात् । तस्य विरोध इति चेत् । तस्य मतान्तरत्वात् । पक्षान्तरोक्त्या तथा निश्चयात् । अतो न दोषः ॥

अथेदं विचार्यते । ज्ञानस्य प्रामाण्याप्रामाण्ये स्वतो गृह्येते, उत परतः । उतप्रामाण्यं स्वतोऽन्यत् परतः । अथवा प्रामाण्यं स्वतोऽप्रामाण्यं परत इति । तत्र केचित्— सर्वकारकाणां स्वक्रियाशक्तेः स्वाभाविकत्वादुभयमपि ज्ञानस्य स्वरसादेवावगम्यते इत्याहुः । तन्न । ज्ञानस्य स्वविषयतथात्वातथात्वयोर्युगपद्बोधनाऽसमर्थत्वात् । न च व्यक्तिभेदेनादोष इति वाच्यम् । कारणान्तरनिरपेक्षस्य ज्ञानस्यैवोभयोपलम्भकत्वे कया किं कदा बोध्यमित्यत्र विनिगमनाविरहात् । नैयायिकादयस्तु द्वयमपि स्वभावेनानिरूपितं कारणगुणदोषाभ्यामेवावगम्यत इत्याहुः । तदपि न पेशलम् । गुणदोषावधारणात् प्रागन्यतरेणाप्याकारेणार्थस्यानवगमे

ज्ञानस्य प्रमाणाप्रमाणविलक्षणस्यापत्तेः । बौद्धास्तु— अप्रामाण्यं स्वतः, प्रामाण्यं तु संवादज्ञानादिभिः । अन्यथा ज्ञानोत्पत्तिमात्रेणार्थतत्त्वावधारणापत्तेः । नचेष्टापत्तिः । तथा सत्यव्यभिचारापत्तेः । अनिश्चयात्मकाप्रामाण्यं स्वतः प्राप्तं, पश्चात् कारणगुणज्ञानात् संवादज्ञानादर्थक्रियाज्ञानाद्वा प्रामाण्यावगमादपोह्यत इत्याहुः । तत्र भट्टास्तु— यदि हि सर्वमेव ज्ञानं स्वविषयतथात्वावधारणे स्वयमसमर्थं सत् समर्थं विज्ञानान्तरमपेक्षेत ततः कारणगुणसंवादार्थक्रियाज्ञानान्यपि स्वविषयतथात्वावधारणे समर्थमपरमपेक्षेरन् । अपरमपि तथेति न कश्चिदप्यर्थो जन्मसहस्रेणाप्यध्यवसीयेतेति प्रामाण्यमेवोच्छिद्येत । अथार्थक्रियाज्ञानं प्रमाणमितिचेत् । को विशेषः । अव्यभिचार इति चेन्न । स्वप्नावस्थायामसत्यप्युदकाहरणेऽर्थक्रियाविज्ञानदर्शनात् । अथ सुखज्ञानमेवार्थक्रिया । तच्चाऽव्यभिचार्येव । न हि क्वचिदप्यसति सुखे सुखज्ञानमस्ति । सत्यमेतत् । न तु तेन पूर्वं ज्ञानस्य प्रामाण्याध्यवसानं सम्भवति । अप्रमाणेनापि प्रियाङ्गनाविज्ञानेन स्वप्नावस्थायां सुखदर्शनात् । तस्मात्स्वतः प्राप्तं प्रामाण्यमर्थान्यथात्वकारणदोषाभ्यामपोह्यत इत्यवश्यमङ्गीकरणीयम् । प्रामाण्यस्य स्वतस्त्वं च ज्ञानग्राहकयावत्सामग्रीग्राह्यत्वमेव । सामग्री च ज्ञाततालिङ्गकानुमानमेव । ज्ञातता च ज्ञातो घट इति प्रतीतिर्ज्ञानजन्यो विषयनिष्ठः प्राकट्यापरनामा पदार्थ इति । प्रयोगस्तु— घटो ज्ञानविषयः । ज्ञानजन्यज्ञाततावत्त्वात् । पटवदिति । अत्र हेतुतावच्छेदकत्वेन ज्ञानसिद्धिः । यद्वा ज्ञानक्रियाद्वारको यः कर्तृकर्मणोरात्मार्थयोः परस्परं व्याप्तृव्याप्यत्वलक्षणः सम्बन्धः स मानसप्रत्यक्षावगतः सन् विज्ञानमनुमापयति । आगन्तुककारणं विनाऽऽत्मनोऽर्थं प्रति व्याप्तृत्वानुपपत्तेः । तच्च कारणं लोके ज्ञानशब्देनाभिधीयत इति

चाहुः । प्राभाकरास्तु । सर्वमेव ज्ञानं मितिमातृमेयविषयकत्वाद् घटमहं जानामीत्याद्याकारकमेव । स्वप्रकाशमेव च । तत्र यथाऽर्थविशेषणं घटत्वादिकं समानसंवित्तिवेद्यम् । तथा ज्ञानविशेषणं तत्प्रामाण्यमपि तद्वित्तिवेद्यम् इति ज्ञानमेव तद्ग्राहकसामग्रीत्याहुः । कारणदोषबाधकज्ञानाभ्यां रहितत्वे सत्यगृहीतग्राहित्वं ज्ञानस्य प्रामाण्यमिति चाहुः । अत्रायं विशेषोऽवधेयः । तथाहि । साध्यार्थलौकिकवाक्यप्रयोगकाले भाविन्या क्रियाया असत्त्वेन तदानीं ज्ञायमानस्य ज्ञानस्य क्रियाकर्मादिसंसर्गाग्रह एव जननात् कारणदोषसाहित्येन वक्त्रानिष्टाननुबन्धित्वादिसम्भावनामात्रेणैव वाक्यप्रयोगात् । वक्तृज्ञानविषयविपर्यिणस्तद्बोधनसमर्थस्यैव पदसमूहस्य प्रयोगेण वाक्यार्थस्याप्यपूर्वत्वाभावात्तादृशवाक्यजन्यस्यागृहीतग्राहित्वाभावेन पदार्थकरणपक्षेऽपि दोषस्य तुल्यत्वात् तस्य ज्ञानस्य प्रमाणलक्षणानाक्रान्तत्वेन तादृशस्थले ज्ञानग्राहकसामग्र्या यः प्रामाण्यग्रहः सोऽयथार्थ इति मन्तव्यम् । तथा सति प्रामाण्यांशे स्मरणत्वापत्त्या तस्य शुक्तिरजतज्ञानतुल्यतापत्तिश्च । तथा सति प्रवृत्तिसामर्थ्यानुपपत्तिश्च स्यात् । अत ईदृशस्थले परतोऽन्यत्र च स्वत इत्यर्द्धरजतीमेव युक्तामुत्पश्यामः । एवञ्च न पूर्वोक्तविनिगमनाविरहोऽपीति दिक् ॥

एवं प्रमाणविषयेऽनुपपादितं यद्
यद्विप्रकीर्णमुपपादितमाकरेषु ॥
सगृह्य तद्गदितमत्र मया तथाऽन्यत्
प्रासङ्गिकं च सुजनव्रजतोषणाय ॥ १ ॥

इति श्रीमद्वल्लभनन्दनचरणैकतानश्रीपीताम्बरतनुज-
श्रीपुरुषोत्तमविरचिते प्रस्थानरत्नाकरे
प्रमाणपरिच्छेदः समाप्तः ॥

श्रीकृष्णाय नमः ॥

# अथ प्रमेयपरिच्छेदः ॥

---

अथ प्रमेयं निरूप्यते ॥ तत्र तावदुभयलिङ्गाद्यधिकरणविचारेण, यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्, इदं सर्वं यदयमात्मेत्यादिश्रुतीनां, दर्शयामास लोकं स्वं गोपानां तमसः परम् । सत्यं ज्ञानमनन्तं यद् ब्रह्म ज्योतिः सनातनम् । यद्धि पश्यन्ति मुनयो गुणापाये समाहिता इत्यादीनां बृहद्वामनीयसन्दर्भादीनां स्मृतीनां च विचारेण यथास्थितं नित्यं सर्वं ब्रह्माभिन्नमेवेति ब्रह्मैव प्रमेयं ब्रह्मविदाम् । अयमेव च, न कदाचिदनीदृशं जगदित्यादिश्रुतीनां, तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् * आविर्भावतिरोभावजन्मनाशविकल्पवत् ॥ विश्वं वै ब्रह्म तन्मात्रं संस्थितं विष्णुमायया * यथेदानीं तथाचाग्रे पश्चादप्येतदीदृशमित्यादिस्मृतीनां च जगतः सदैकरूपत्वमाविर्भावादेर्विकल्पमात्रत्वं वदन्तीनामाशयः । अथ सृष्ट्यादिबोधकश्रुतिविचारेऽपि, अपि वा तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमित्यादिप्रतिज्ञया, यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यादित्यादिदृष्टान्तैः, सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं, तस्मादसतः सज्जायते, कुतस्तु खलु सोम्यैवं स्यादिति होवाच, कथमसतः सज्जायेतेति मतान्तरनिराकरणेन, सर्वं खल्विदं ब्रह्म तज्जलानिति हेतूक्त्या, पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यमिति भूतभविष्यद्भवद्व्यवहारदशायामपि सर्वस्य ब्रह्मात्मत्वकथनेन च सर्वदा ब्रह्मैव प्रमेयं तत्त्वविदाम् । नचास्मिन् पक्षे प्रपञ्चस्य जन्यत्वादिभिरब्रह्मत्वं शङ्क्यम् । असतः सत्त्वासदसत्त्व-

योरनङ्गीकारणादुत्पत्तिनाशयोराविर्भावतिरोभावात्मकत्वेन तद्भावात् । नाप्यनित्यत्वात् । घृतद्रवत्ववत् प्रपञ्चस्यागन्तुकत्वेऽपि ब्रह्मधर्मत्वानपायाद्धर्मस्य धर्मितादात्म्याददोषात् । नापि प्राकृतत्वभेदप्रसयाभ्याम् । अन्येषां तत्त्ववित्त्वाभावादन्यथा भाने स्वबुद्ध्या नानामतकल्पनेन तस्य प्रतिक्षेप्तुमशक्यत्वात् । लौकिकप्रमाणानां राजसप्रमाजनकत्वेन तस्या अपि विरोधस्याकिञ्चित्करत्वात् । शास्त्रविरोधं प्रतिसन्दधानानां दृष्टशास्त्रीयसाधनफलानामाधुनिकानामास्तिकानामविप्रतिपत्तेश्च। नापि प्रपञ्चस्य मायिकत्वं शङ्क्यशङ्कम् । उक्तश्रुतिविरोधापातात् । न चेन्द्रो मायाभिः पुरुरूप ईयते, सैषा वटबीजसामान्यवदनेकवटशक्तिरेकैव, तद्यथा वटबीजसामान्यमेकमनेकान् स्वाव्यतिरिक्तान् वटान् स्वबीजानुत्पाद्य तत्र तत्र पूर्ण सन्तिष्ठतेवमेवैषा माया स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति, वाचारम्भणं विकारो नामधेयमित्यादिश्रुतिविरोधः शङ्कनीयः । आद्ये मायाना पुरुरूपज्ञानकरणतयैवोल्लिखान्मधुविद्यास्थितार्थसग्राहकस्यास्य मन्त्रस्य अन्यथा व्याख्यातुमशक्यत्वात् । अन्यथा व्याख्याने पूर्वग्रन्थस्यायं वै हरयः पञ्च दश चेत्याद्यग्रिमस्यैतद्विवरणरूपग्रन्थस्य च विरोधप्रसक्तेः । द्वितीयेऽपि सैषाऽविद्या जगत् सर्वमित्युपक्रान्ताया जडमोहात्मकजगद्रूपत्वकल्पमुक्त्वा वटबीजाद्वैलक्षण्यं बोधयितुं स्वाऽव्यतिरिक्तक्षेत्रदर्शकत्वाभासजीवेशकारकत्वोक्तिपूर्वकं चैतन्यदीप्ता तस्मादात्मन एव त्रैविध्यं योनित्वमपीत्यनेनात्मन एव ब्रह्मविष्णुशिवरूपत्वयोनित्वयोः श्रावणात् सा दर्शयिष्येव, न तु जानित्रीति पूर्वोक्तस्यैवार्थस्यास्मिन् वाक्येऽपि स्फोरणात् । नचोक्तश्रुत्या दृश्यानां स्वाव्यतिरिक्तत्वकथनाच्चैषां मायिकत्वं दुर्वारमिति वा-

च्यम्। सिद्धे आत्मनो योनित्वे तत्प्रतिबिम्बादिभूतानां क्षेत्राणां मायिकत्वेऽप्यदोषात्। मायाया अपि भगवच्छक्तित्वेन शक्तिमद्भिन्नत्वात्तथात्वेऽपि भगवद्रूपत्वानपायात्। नच तादृशत्वमेव सर्वस्यास्त्विति शङ्क्यशङ्क्यम्। मायिकस्य स्वोत्कृष्टसत्ताकसदृशत्वतदुत्तरभावित्वनियमस्येन्द्रजालादिषु दर्शनाच्चत उत्कृष्टसत्ताकस्य तत्सदृशस्य पूर्वमवश्याभ्युपेयत्वेन पारमार्थिकस्य ब्रह्मरूपस्य तस्याऽदण्डवारितत्वात्। इद यथा तथा सृष्टिभेदवादे व्युत्पादितमस्माभिः। तत्रापि मूलं, यथा महान्ति भूतानीति द्वितीयस्कन्धस्थचतुःश्लोकीश्लोकस्य सुबोधिनीतोऽवगन्तव्यम्। तृतीयेऽपि कार्यस्य कारणाभिन्नत्वबोधनार्थं कार्यप्रकाराणां वाचारम्भत्वं वदति, न तु तेषामसत्त्वार्थमिति तदनन्यत्वसूत्रादेवावगम्यत इत्यतो दोषाभावात्। तस्माद् ब्रह्मैव प्रमेयम्। तच्च ब्रह्म पूर्वं निराकारमेव सच्चिदानन्दात्मकं सर्वभवनसमर्थं निमित्तान्तरमन्तरेणैवांशतो धर्मरूपेण, तदनु क्रियादिरूपेण, ततः प्रपञ्चरूपेण च भवतीत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादकम्, अरूपवदेव हीति पञ्चसूत्र्युक्तमेकदेशितमप्यङ्गीकुर्वता भगवता व्यासेन निर्णीतं, पूर्ववद्वेति सूत्रे। तेन प्रकारद्वयेऽपि ब्रह्मातिरिक्तं न प्रमेयम्। प्रकारद्वयं च यथायथं मुख्यामुख्यलीलयोरुपयुज्यते। तेन न विरोधः। तत्र द्वितीयपक्षानुसारिणी सृष्टिप्रक्रिया। तत्र बुद्धिसौकर्यार्थं कारणकार्यस्वरूपभेदेन त्रिरूपत्वं सर्वनिर्णये व्युत्पादितम्। सृष्टिप्रक्रिया तु द्वितीयस्कन्धसुबोधिन्यां श्रीमदाचार्यचरणैरेवं प्रदर्शिता। ब्रह्म हि धर्मरूपेण भवज्ज्ञानानन्दकालेच्छाक्रियामायाप्रकृतिरूपेण पूर्वं भवति। न च सर्वदा तथा भवतीति शङ्कनीयम्। आपादकस्य हेतुभूतस्य कालस्याभावात्। जाते च काले तस्यैव नियामकत्वान्न सर्वदा भविष्यति। कालस्य नियामकत्वं तु प्रत्यक्षसिद्धमेव। कालेन सहोत्प-

ज्ञानामिच्छादिशक्तीनां च सदैकरूपत्वं भगवान् स्थापयतीति निरास्ताः । तत्र कालः क्रियाशक्तिरूपः । योऽयं कालस्तस्य ते व्यक्तवन्धोश्चेष्टामाहुश्चेष्टते येन विश्वमिति वाक्यात्, क्रियाशक्तिप्रधानत्वदर्शनाच्च । इच्छा त्वभिध्यानरूपेति, अभिध्योपदेशाच्चेति सूत्रे निर्णीतम् । सर्वकामः, सोऽकामयतेति श्रुतयः । तदाकारश्च बहु स्यां प्रजायेति द्विविधः । तत्राद्यो भेदरूपः । तेन सच्चिदानन्दधर्माः कालातिरिक्तक्रियाज्ञानानन्दरूपाः स्वयं भिद्यमानाः स्वाश्रयमपि भिन्दन्ति । क्रियावन्तं ज्ञानिनमानन्दिनं च कुर्वन्तीत्यर्थः । तदा स भगवान् त्रिरूपोऽपि सर्वतःपाणिपादान्तो भवन् साकारतामापद्यते । एवं भिन्नोऽपीच्छया स्वस्याभिन्नत्वालोचनरूपया भिन्न इवाखण्डो भवतीति कार्यविचारेणावसीयते । अत एव तदपेक्षया कार्यरूपस्याल्पत्वात् तानि त्रीण्यपि रूपाणि, पूर्णमद इत्यादिश्रुतौ पूर्णशब्देनोच्यन्ते । अत एव च सद्रूपस्य प्रत्येकपर्यवसायित्वम् । एवमेवेतरयोरपि ज्ञेयम् । तयोरान्तरत्वेन दौर्घ्यं तथा बुद्धावनारोहेऽपि समानयोगक्षेमत्वात् । अस्ति भाति प्रियमित्येव बुद्धावारोहाच्च । शक्तिस्तु सदंशस्य क्रियारूपा चिदंशस्य व्यामोहिका माया । विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया * विमोहिता विकत्थन्ते ममाहमिति दुर्धिय इत्यादिवाक्योक्ता त्रिगुणा सा जगत्कर्त्री मायाया अंशभूता आनन्दरूपस्य जगदुत्पत्तौ करणभूता । साऽपि, सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः * स्थितिसर्गनिरोधेषु गृहीता मायया विभो, इत्यस्य सुबोधिन्यां सम्यग्निरूपिता । सर्वरूपभगवत्सम्बन्धात् सर्वप्रतिकृतिरूपोत प्रतिकृतिसंचायकम् । ततश्च मूलरूपोपरि संचायकरूपा सा भवति । ततो मूलरूपे निर्गतेऽक्षरांशभूतस्य तत्र प्रवेशस्तदा तस्मिन्नाप्याकृतिं सम्पादयतीति देशकालवस्तुरूपा सती कदाचिद्भगव-

दिच्छाया कर्त्र्यपि भवति। न तु तावता मूलकर्तृत्वम्। एतन्नित-यरूपा शक्तिः सच्चिदानन्दरूपस्य भावत्वतलादिवाच्या। इत्या-दिकः पूर्वाकारस्य कामस्य प्रपञ्चः। द्वितीयस्तूत्कर्षापकर्षरूपः। तेन त्रिष्वानन्द उत्कृष्टः। इतरौ यथोत्तरमपकृष्टौ तदेतरौ तं सेव-मानौ जातौ। ततस्तयोर्धर्मौ ज्ञानक्रिये भगवच्छक्तिरूपे जाते। त-दा स आनन्दो ज्ञानक्रियाशक्तिमाञ्जातः। तदाचिदंशस्य शक्ति-र्या व्यामोहिका माया अविद्येति यावत्। सा चिदंशाज्ज्ञानरूपे धर्मे गते तं व्यामोहयति। स तु बोधरूपोऽपि धर्मरूपज्ञानाभावा-त् तया व्यामुग्धः। आनन्दस्य पृथग्भूतत्वात्। तत्सम्बन्धेनानन्दो भविष्यतीति बुद्ध्या तया सम्बद्ध्यते। ततो व्याकुलः सन् सदा-नन्दकृतसृष्टौ यः सूत्रात्मा आसन्यो दशविधप्राणरूपस्तमवल-म्ब्य तिष्ठति। तदा प्राणधारणप्रयत्नवत्त्वाज्जीव इत्युच्यते। सदं-शस्तु क्रियाशक्तेर्गतत्वादव्यक्ततामापद्यते जडश्च भवति। पश्चा-न्मूलभूतक्रियांशाभिः क्रियाभिर्यथायथं शरीरादिरूपेणाभिव्यज्य-ते। पश्चात्तस्या क्रियाया तत्कृतधर्मे वा तिरोभूते तिरोभवति। तदापि तस्यां क्रियाया जातायां यो नामरूपे व्याकरवाणीति रूपया मूलेच्छया जातो घटादिशब्दः स जीवे भगवति बुद्धौ चा-भिव्यक्ते एव तिष्ठन् ध्वस्तादिव्यवहारमुपपादयति। एतस्य दशविधत्वं, यथा महान्ति भूतानीत्यस्य सुबोधिनीतोऽवगन्तव्यम्। एवं चिद्रूपोऽपि ज्ञानशक्त्यंशभूतैर्ज्ञानैरभिव्यज्यते, तिरोभवति च। तस्य च विभागः प्रारम्भ एवास्माभिः प्रदर्शितः। एवमेवानन्दव्य-वस्थाप्यूह्या। आनन्दरूपस्य विभागस्तु सर्गादर्शनाम, अर्दीनली-लाहसितेति श्लोकरीत्या स्वरूपधर्मत्वेन विज्ञेयः। यद्यपि श्रुतौ पिपालयिपासंजिहीर्षे स्फुटे नोक्ते तथापि पूर्वरूपतिरोभावं विनो-त्तरूपानिर्भानाभावात् प्रजायेयेत्याकारेणैव संगृहीते। एवञ्चाभा-

भ्यामिच्छाभ्यां सच्चिदानन्दरूपेभ्यो यथायथं प्राणाद्या जडा-श्चिदंशा जीवबन्धनपरिकरभूताः सदंशा जीवाश्चिदंशा बन्धनीया आनंदांशास्तन्नियामका अन्तर्यामिणश्च विस्फुलिङ्गन्यायेन व्युच्चरन्ति । एवं बद्धेषु जीवेषु यस्मै भगवाँस्तां पूर्णां ज्ञानशक्तिं प्रयच्छेत् तदा तां मोहिकां मायां त्यजति, प्रयत्नं च त्यजति, स्वरूपे चिद्रूपे चावतिष्ठते, अपराधीनश्च भवति । जगत्कर्तृत्वं तु न भवति। तस्य सा मायाशक्तिर्न भवति । उत्कर्षोऽपि न भवति । आनन्दस्यैवोत्कृष्टत्वात् । हीनता त्वापाततो वर्तते । आनन्देन सह मिलितस्त्वानन्दोऽपि भवति। स चेत् स्वधर्मेण तं गृह्णीयात् । इयं प्रक्रिया सर्वश्रुतिवाक्यानुरोधेन श्रुतार्थापत्तिसिद्धा सर्वत्रैवोपयुज्यते । अन्यथा प्रक्रिया तु वाक्यानि बाधते इति सृष्टिप्रक्रिया ॥ एतद्वान्तरप्रक्रियास्तु शास्त्रार्थनिबन्धे षोढा प्रदर्शिताः । तत्र प्रथममाकाशवद् व्यापकं हीति द्वाभ्यां ब्रह्मस्वरूपमुक्त्वा ततो, बहु स्यामितीच्छाप्रकारद्वयमुक्त्वा, तदिच्छामात्रतस्तस्मादिति द्वाभ्यां, स यथोर्णनाभिस्तन्तुनोच्चरेदिति इत्यबालाकिब्राह्मणश्रावितः साक्षात्सर्वसृष्टिप्रकार उक्तः। तत्र प्राणलोकदेवभूताः सदंशाः। सर्व एवात्मान इत्यात्मपदं तु, गुहां प्रविष्टाविति श्रुत्यन्तरानुरोधाज्जीवान्तर्यामिणोः संग्राहकम् । एवमेवमेतेषां स्वरूपभेदे कारणस्वरूपभेदोऽप्यर्थात्सिद्ध इति, बहु स्यामितीच्छया प्रथमं सच्चिदानन्दानां भेदो द्वितीयस्कन्धप्रक्रियायामुक्तः । तेषां कारणरूपाणां त्रयाणां पूर्णत्वं यदुक्तं श्रुतौ तदेवं ज्ञेयम्। पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यत इति । अस्यार्थः। अदः परोक्षं ब्रह्म आनन्दरूपं पूर्णम् आकाशवद् व्यापकमिति कारिकोक्तरीतिकम् । इदं ज्ञानरूपं द्वितीयपुरुषरूपं पूर्णं पूर्वोक्तरीतिकम् । पूर्णाद् द्वितीयात् पूर्णं सद्रूपं प्रथमपुरुषरूपम् उद-

च्यते उद्रिच्यते पूर्णात्मस्वभावत्यागेनोद्गच्छतीत्यर्थः । कार्यस्वरूपस्य प्रलये प्रसापचिदशायां तद्रूपत्वमाह । पूर्णस्य सदादिरूपस्य ब्रह्मणः पूर्णम् एकरसत्वमादाय भगवत्करुणया तद्दत्तं गृहीत्वा पूर्णमेवावशिष्यते तद्रूपमेव भवतीत्यर्थ इति । क्रमसृष्टिप्रक्रिया तु छान्दोग्यतैत्तिरीयादौ, तदैक्षत बहु स्यामिति, तत्तेजोऽसृजतेत्यादि, तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्यादिना उक्ता । तत्र सदंशोद्गमे एवं प्रकारभेदः । जीवान्तर्यामिणोस्तु तैत्तिरीये देहप्रवेशोत्तरं भेद उक्तः । तत्सृष्ट्वा तदेवानुप्राविशत्तदनुप्रविश्य सच्च त्यच्चाभवदित्यादिश्रावणाद् द्वितीयस्कन्धोक्तं तत्राप्यविरुद्धम् । एवमन्यत्रापि विचारेणाऽनुसन्धेयम् । सृष्ट्यनन्तरं कार्यविचारे तु यद्यपि बृहदारण्यके त्रयं श्रावितम् । त्रयं वा इदं नाम रूपं कर्म चेति तथापि छान्दोग्ये कर्म न्यक्कृत्य, अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति द्वयमेव श्रावितम् । तेन नामरूपभेदाद् द्विविधैव सृष्टिः । तत्र रूपसृष्टौ पञ्चात्मको भगवान् कारणम् । द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ॥ वासुदेवात् परो ब्रह्मन्नचान्योऽर्थोऽस्ति तत्त्वत इति द्वितीयस्कन्धे रूपसृष्टिप्रकरणीयवाक्यात् । तत्र द्रव्यं माया । प्रकृतिर्ह्यस्योपादानमिति । अग्रे तु महाभूतादिकम् । अवान्तरसृष्टौ तु अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ॥ विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥ शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः ॥ न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतव इति गीतावाक्यादेते पञ्चहेतवः ॥ तत्राधिष्ठानं शरीरम् । कर्ता जीवः । पृथग्विधकरणमिन्द्रियाणि विविधाश्चेष्टाः प्राणधर्मभूताः । दैवं भगवदिच्छादीति रूपसृष्टिव्यवस्था । नामसृष्टौ तु, स एष जीवो विवरप्रसूतिरिति पूर्वप्रकरणोक्तैकादशस्कन्धीयवाक्यात् सूत्ररूप

एव भगवान् सुषुम्नामार्गेण व्यक्तो भवान् घोषात्मा शब्दब्रह्मरू-पः प्रकाशते। ततः स एव घोषो नादात्मा वर्णपदवाक्यनामको भवति। तद्विषयको विचारः सर्वोऽपि प्रमाणपरिच्छेद एवोक्त इति न पुनरुच्यते। अतः परं बुद्धिसौकर्यार्थं तारतम्यज्ञानार्थं च प्रमेयं त्रिरूपेण वर्ण्यते। स्वरूपकारणकार्यकोटिभेदात्। तत्र स्वरूपकोटौ भगवान् क्रियाज्ञानतदुभयविशिष्टभेदेन त्रिविधः। तथाहि। वेदादिभावापन्नस्य शब्दस्यैवात्र प्रमाणत्वात् तस्य पूर्व-काण्डे यज्ञ एव प्रतिपाद्यते। स च यद्यपि, यज्ञो वै विष्णुरि-त्यादिभिः, नारायणपरा लोका देवा नारायणाङ्गजा इत्याद्युपबृंहण-सहिताभिस्तात्पर्यतो भगवदात्मक एव निश्चितस्तथाप्यनुष्ठानमा-रभ्य फलानुभवपर्यन्तायां दशायां साधनत्वेन क्रियैव प्रतीयत इति क्रियायामन्तर्हित एव सन् पूर्वकाण्डार्थरूपः। एवं द्वितीय-काण्डेऽपि सच्चिदानन्दात्मकमनन्तरूपमनन्तगुणमनन्तशक्ति ब्रह्म प्रतिपाद्यते, तथापि गुरूपसत्तिमारभ्य चरमवृत्तिपर्यन्तमनन्तरं च ज्ञानमेव प्रतीयते इति ज्ञानेऽन्तर्हितमेव सदुत्तरकाण्डार्थरूपम्। तदु-पबृंहणेषु गीताश्रीभागवतादिषु तु भक्तिविषयत्वेन ज्ञानक्रियावि-शिष्टः साकारोऽनन्तगुणपूर्णः प्रतिपाद्यते। परमभक्त्या च तादृश एव प्रकटो भवतीति। भक्तिस्तत्र गुणीभवतीति ज्ञानक्रियाविशिष्ट एव तदर्थरूप इति त्रिविधोऽपि प्रमाणानुरोधिप्रमेयात्मा स्वरूप-कोटिः। अक्षरमुत्तरकाण्डार्थे, कर्म पूर्वकाण्डार्थे प्रविशति। कालोऽपि कालोऽस्मीति, कालरूपोऽवतीर्ण इति, प्रकृतेर्गुणसाम्यस्य निर्विशेष-स्य मानाय* चेष्टा यतः स भगवान् काल इत्युपलक्षित इत्यादिवाक्ये-भ्योऽन्तःसच्चिदानन्दरूपत्वाद्गुणाभिमानिना ब्रह्मादीना भयजनक-त्वाच्च स्वरूपकोटौ। एवं स्वभावोऽपि शास्त्र उत्पत्त्यनुक्त्या अन-भिमानत्वयुक्तत्वाभ्यां लिङ्गाभ्यां स्वरूपकोटौ ज्ञेयः। अन्तर्यामिणां

स्वरूपभूतत्वेऽपि जीवेन सह कार्ये प्रवेशात्र तद्भेदानामानन्त्येऽपि कारणीभूतवक्ष्यमाणतत्त्वशरीरे प्रविश्य तत्साहाय्यकरणात् कारणकोटावेव निवेशो, न तु स्वरूपकोटौ । अन्तर्यामिब्राह्मणोक्त एकः सर्वान्तर्यामी तु भगवानेवाऽसौ न कोऽपि शङ्कावकाशः । क्रमसृष्टिरूपां पौराणप्रक्रियामादाय सर्वनिर्णयनिबन्धेऽक्षरादयो लक्षिताश्च । तत्र प्रकृतिः पुरुषश्चोभौ परमात्माऽभवत् पुरा * यद्रूपं समधिष्ठाय तदक्षरमुदीर्यत इत्यक्षरलक्षणम् । इदमेव तृतीयस्कन्धे मैत्रेयेण आण्डकोशो बहिरयमित्यादिना तत्र कार्यस्थितिकथनेन समवायित्वबोधनपूर्वकं लक्षयता, तदाहुरक्षरं ब्रह्म सर्वकारणकारणम् * विष्णोर्धाम परं साक्षात्पुरुषस्य महात्मन इत्यनेनोक्तम् । सर्वकारणयोः प्रकृतिपुरुषयोरपि कारणमिति । भगवता चैकादशे, आसीज्ज्ञानमयो ह्यर्थ एकमेवाविकल्पितमित्युपक्रम्य तन्मायाफलरूपेण केवलं निर्विकल्पितम् * वाङ्मनोगोचरातीतं द्विधा समभवद् बृहत् ॥ तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका * ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयत इत्यनेनोक्तम् । एतदेव पूर्वोक्तानां त्रयाणां पूर्णरूपाणां मूलभूतं ज्ञानप्रधानं गणितानन्दं ब्रह्मकूटस्थाव्यक्तामत्यच्चग इत्यादिपदाभिधेयम् । केचित्तु स्थूलसूक्ष्मदेहद्वयावच्छिन्नं चैतन्यं कूटस्थपदवाच्यमाहुः । तन्न । शक्तिग्राहकस्यालाभात् । अतो योग एव तत्रादरणीयः । इदमेव मूलरूपवरणासनलोकादिरूपं व्यापिवैकुण्ठ इत्यप्युच्यते । अन्तर्याम्यवतारादिरूपे पादरूपेण हंसस्वरूपे पुच्छरूपेण च भवति । ज्ञानमार्गे फलरूपमप्येतदेव । इत्यक्षरं निरूपितम् ॥

एतस्यैव रूपान्तरं कालकर्मस्वभावाः । कालस्यांशभूतौ कर्मस्वभावौ । तत्र अन्तःसच्चिदानन्दो व्यवहारे ईषत्सत्त्वांशेन प्रकटः काल इति कालस्य स्वरूपलक्षणम् । अतीन्द्रियत्वेन कार्यानुमेय-

त्वेन चेयत्तत्त्वांशेन प्रकटत्वमाकाशादेरप्यस्तीति तद्वारणायाद्यं दलम् । अक्षरवारणाय द्वितीयम् । इदञ्च कालोऽस्मि लोकक्षयकृत्, कालेनाव्यक्तिमूर्तिनेति वाक्यानुरोधि । नित्यत्वे सति सकलाश्रयः सकलोद्भवो वा काल इति कार्यानुसारि लक्षणम् ।
तत्राद्येऽक्षरवारणाय, द्वितीय ईश्वरेच्छादिवारणाय सप्तम्यन्तम् । प्राणादिवारणाय द्वितीयम् । श्रुतावनन्तमितत्वबोधनेन तस्यापि नित्यत्वात् । एतेनैव चिरक्षिप्रादिव्यवहारस्यातीतानागतादिव्यवहारस्य चोपपत्तिः । गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठितः * पुरुषस्तदुपादानमात्मानं लीलयाऽसृजदिति वाक्यानुसारि चेदं लक्षणम् । एतस्य प्रथमं कार्यं गुणक्षोभः । कालाद् गुणव्यतिकर इति वाक्यात् । एतस्य च सूर्यादय आधिभौतिकं रूपम् । परमाण्वादिद्विपरार्द्धान्तमाध्यात्मिकम् । आधिदैविकं, कालोऽस्मीति वाक्याद् भगवानेव । तत्र यावता कालेन सूर्यरथचक्रं परमाणुमात्रं देशं व्याप्नोति स कालः परमाणुः । चतुर्मुखायुर्द्विपरार्द्धम् । परमाणुस्तु सदा संयोगावस्था कार्यावस्थां च न प्राप्नोति सूक्ष्मः सदवयवः । तदुक्तं, चरमः सद्विशेषाणामनेकोऽसंयुतः सदा * परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यत इति । अतिसूक्ष्म इति विभाजकाघातासहिष्णुः । संयोगावस्थामप्राप्त इति । यत्रैकास्तिष्ठन्ति तत्र बहवः पृथग्भूतास्तिष्ठन्ति । अणोरणीयानित्यादिश्रुत्या भगवतोऽप्यतिसूक्ष्मत्वमुपपद्यत इति तद्वारणाय संयोगेत्यादि । ततः कार्योत्पत्तिवारणाय कार्येत्यादि । कदाचित् संयोगे तस्यां दशायां परमसूक्ष्मतानिवृत्तौ लक्ष्याभावादेव लक्षणस्यागमनेऽसम्भवः स्यादिति तद्वारणाय सदेति । सिद्धान्ते तु स्थूलादेव प्रकृत्यादेः सरूपात् कार्यस्य महदादेरुत्पत्तिः । कारणं च तु जन्यभावत्वा-ऽवच्छिन्न प्रति कार्ययोग्यावयवस्थूलत्वेनानुगतम् । न च सूक्ष्मैरेव

तन्तुप्रभृतिभिः पटादिजननदर्शनादयं नियमः प्रत्यक्षविरुद्ध इति वाच्यम् । तत्रापि स्थूलस्यैव कार्पासादेर्दीर्घावस्थां प्राप्तस्याकृतिविशेषसम्पादनार्थं खण्डशोऽवयवयोजने यः समुदायस्तस्यैवोपादानत्वमिति ततः सूक्ष्मस्यैव पटादेरुत्पत्तेः । अन्यथा यन्त्राद्युत्तारणे छेदस्तन्त्वादेर्न क्रियेत । यत्र तु प्रकारान्तरेण पटोत्तारणं, तत्रापि समस्यैवोत्पत्तिर्न तु स्थूलस्येत्यविरोधात् कारणतानुगमकरूपालोपाच्च । कुण्डलप्रतिमादावपि मणिसुवर्णलाक्षादिसमुदायस्यैवोपादानत्वमित्यन्यत्रापि तथैवोह्यम् । एवं गर्भादावपि बीजरजःसमुदायस्यैव उपादानता । कारणस्थूलता तु बहिस्तदंशदर्शनात् स्पष्टैव । एतेनाण्डजा अपि व्याख्याताः । स्वेदजा अपि स्थूलादेव स्वेदादुत्पद्यन्ते । उद्भिज्जास्तु प्रथममङ्कुरमिति बीजात् सूक्ष्मा एव । अत एव यावन्नोप्यन्ते तावदङ्कुरभाव एव तिष्ठतीति युज्यते । उष्मानां दृद्धिस्त्वाहारन्यायेन बोध्या । यत्र पुनर्लोहदारुदन्तनिर्यासादिभिः पर्यायेणावयवयोजनं गृहादौ चेष्टकादिभिस्तत्रापि पटन्याय एव । अत एकस्यैकमेवोपादानमिति निश्चयः । अन्यथा कारणगुणानां कार्यगुणारम्भकत्वात् कारणगतैकत्वैः प्रत्येकमेकत्वारम्भे कार्येऽनेकैकत्वप्रतीतिरनारम्भे तत्तद्गतैकत्वैरपेक्षाबुद्धया बहुत्वमेव प्रतीयेत, न त्वेकत्वम् । अत एकस्यैकमेवोपादानमित्यवदातम् । किञ्च । परमाणुकारणवादे कार्यस्य पाञ्चभौतिकत्वाज्जलादयः संयुक्ता भवन्तीति तेऽपि ततः पृथग्भूताः परमाणुत्वमापद्येरन् । नचैवमभ्युपगन्तुं शक्यम् । प्रत्यक्षविरोधात् । मृत्तिकादौ तथा अदर्शनात् । ननु परमाणुभ्यः सृष्ट्यनङ्गीकारे तदभ्युपगमस्य किमावश्यकत्वमितिचेदुच्यते । देहेन सहात्मन ऐक्यभ्रमस्य तत्कार्यत्वेन तदङ्गीकारस्यावश्यकत्वात् । धर्माधर्मसंस्कृतैस्तैरेव जीवस्य देहेन सहैक्यभ्रमात् । नन्वेवं सति पुञ्जात्पु-

ञ्जोत्पत्तिपक्षापत्तिरितिचेद । न । इष्टापत्तेः । पीवेति राशौ न विदा प्रवाद इत्यादिस्मृतौ शरीरे राशित्वकथनात् । भ्रमार्थमेव तदङ्गीकारात् । चोद्दिश्यमानस्त्वत्रयवी तेभ्योऽतिरिक्त एव संघातरूपत्वात् । सामुदायिकश्चायमतो न काऽप्यनुपपत्तिः । ननु स्थूलात् सूक्ष्मोत्पत्त्यङ्गीकारे विभागादुत्पत्तिरङ्गीकृता भवति । तथा सति नाशः कस्मादङ्गीकार्य इति चेत् । संयोगादेवेति ब्रूमः॥ सत्कार्यवादिभिः मतिसंचरस्यैवाङ्गीकारात् । लोकप्रत्यक्षानुग्रहाय तु पाश्चात्यकार्याणामुभाभ्यां यथासम्भवं नाशोत्पत्ती । अत एव जलसंयोगेन वह्नेः कपालविभागाच्च घटस्य नाशः । तक्षणाद्दन्तचपकादेस्तन्तुसंयोगाच्च पटस्योत्पत्तिरिति संगच्छते । ननु परमाणुभ्यः सृष्टयनङ्गीकारे स्थूलाच्चाङ्गीकारे मनसोऽपि सृष्टिर्न स्यात् । तथा सति, ब्रह्मणो मानसाः पुत्रा इत्यादिवाक्यविरोधापत्तिरितिचेन्न । तस्य परमाणुपरिमाणत्वेऽपि परमाणुत्वाभावात् । अन्यथा परमाणूनां पञ्चविधत्वापत्तेः । भौतिकत्वे सति नित्यो गतिमान् परमाणुरिति वैशेषिकलक्षणं तु बाधितमेव । सर्गादौ भूतासिद्धया भौतिकत्वस्याशक्यवचनत्वात् । नच भूतत्वे सतीत्येव विशेषणीयमिति वाच्यम् । तथात्वेऽपि नित्यत्वस्याशक्यवचनत्वात्।श्रुत्या स्मृतेर्बाधादिति दिक् । एवं परमाणुदेशेन कालपरमाणौ ज्ञाते ततः पुराणाद्युक्तरीत्या द्विपरार्द्धावधिराध्यात्मिको ज्ञेयः । इति कालो निरूपितः ॥

अथ कर्म ॥ तल्लक्षणं च विधिनिषेधप्रकारेण लौकिकक्रियाभिः प्रदेशतोऽभिव्यञ्जनयोग्या व्यापिका क्रियेति । कालिकक्रियावारणाय योग्यान्तम् । व्यापिकेति तु स्वरूपकथनमात्रपरम् । एवञ्च, सर्वकर्माणि मनसेत्यादौ बहुवचनं तद्देशाभिप्रायेण बोध्यम् । लौकिकक्रियापरत्वेन वा बोध्यम् । एतेनैवादृष्टस्या-

ऽप्यात्मगुणत्वं निराकृतं वेदितव्यम्। एतच्चापूर्वादृष्टधर्माधर्मादिपदैरपीदमेवोच्यते। अतः साधारण्येऽपि फलव्यवस्थोपपत्तेर्न कर्मनानात्वमिसपि। दानहिंसादौ तु धर्माधर्मादिप्रयोगोऽभिव्यञ्जकत्वोपाधिना भाक्तः। एवञ्च यागादपि साक्षादेव स्वर्गसिद्धिरिति दिक्। नच कर्मण एकत्वे सर्वसाधारणत्वात्। पुण्यदः पुण्यमाप्नोति पापदः पापभाग्भवेदित्यादिवाक्यानुपपत्तिः। पूर्वक्रिययाभिव्यक्तस्य तदंशस्य वचनबलेन पुत्रेष्ट्यादिवद्व्यधिकरणफलसम्पादकत्वात् सुखेनैवोपपत्तेः। अत एव विश्वामित्रादेस्त्रिशङ्कवादीनां स्वर्गोऽप्युपपद्यते। एतस्य चाभिव्यक्त्यनन्तरं फलसमापनावधिमाकल्यं फलभोगजनकक्रियया क्रमेण तिरोभाव इति दिक्। एतस्य च मुख्यं कार्यं जन्मरूपम्। कर्मणो जन्म महतः पुरुषाधिष्ठितादभूदिति प्रथमत एव जन्मजनकत्वोक्तेः॥ इति कर्म निरूपितम्॥

अथ स्वभावः॥ परिणामहेतुत्वं तल्लक्षणम्। स्वरूपं तु भगवदिच्छाऽऽकारकं, न त्विच्छैव। कालं कर्म स्वभावं चेति वाक्ये, उपाददे इति कथनात्। अयमपि व्यापकः। सर्ववस्तुपश्चात्कृत्य स्वयं गोचरो भवति। यथा स्वभावदुष्टेषु ज्ञानादिकं तिरस्कृत्य मागेवानुभवमारोहति। यत्रापि नारोहति तत्रापि परिणामः स्वभावत इति वाक्यात्तत्कार्येण परिणामेनानुमेय इति न विशिष्य तत्र कश्चिद्विचार इति स्वरूपकोटिः। द्वितीया कारणकोटिः। तत्राष्टाविंशति तत्त्वानि। तेषां च तत्त्वत्वं भगवद्भावरूपत्वात् तस्य भावस्तत्त्वमिति। भगवता या कारणता सा लोकेऽष्टाविंशतिधा प्रकटेति यावत्। न त्वनारोपितरूपत्वेन। श्रुतिविरोधात्। कारणत्वं त्वण्डसृष्ट्याविर्भावकशक्त्याधारत्वाद् असाधारणत्वेन, न त्वीश्वरेच्छादिवत् साधारणत्वेनेति ज्ञेयम्। अतः परं गीतां तृतीय-

स्कन्धं चाश्रित्य तेषां लक्षणान्युच्यन्ते । कार्यकोटिस्तु पश्चाद्वाच्या । तत्र तावत् सुखज्ञानावरकत्वे प्रकाशकत्वे सुखात्मकत्वे च सति सुखासक्त्या ज्ञानासक्त्या च देहिनो देहाद्यासक्तिजनकं सत्त्वम् । तदुक्तं, तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम् * सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चाऽनघेति । अत्र गुणान्तरेऽतिव्याप्तिवारणाय जन्ये सत्त्वविशेषेऽव्याप्तिवारणाय च तृतीयान्तद्वयम् । गुणान्तरामिश्रितज्ञानसुखात्मकस्वरूपकथनाय सत्यन्तम्। तच्च केवलं स्वरूपलक्षणं पुरुषेऽतिव्याप्नोतीति तद्वारणाय कार्यलक्षणेन सहैवोपदिष्टम् । देहिन इत्यसम्भववारणाय । जीवादन्यस्य बन्धाभावात् । रागात्मकं वा तृष्णासङ्गादिजनकं वा कर्मासक्त्या देहिनो नितरां देहाद्यासक्तिजनकं वा रजः । तदुक्तं, रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् * तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनमिति । अत्र तृतीयलक्षणे गुणान्तरेऽतिव्याप्तिवारणाय तृतीयान्तम् । अन्येन सत्त्वाद्याधिक्यज्ञापनाय नितरामिति। द्वितीयं तूपलक्षणविधया लोभः प्रवृत्तिरारम्भ इत्यादिवाक्योक्तकार्यान्तराणामपि ज्ञापकम् । प्रथमं तु स्वरूपलक्षणम् । विद्धीति कथनात् । रागश्च स्त्रीपुंसोः परस्परं स्पृहेति रामानुजाचार्याः । विषयेषु गर्द्ध इत्यन्ये । आवरणशक्तिजन्यं सर्वदेहिमोहकं प्रमादालस्यनिद्राभिर्देहिनो देहाद्यासक्तिजनकं तमः । तदुक्तं, तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् * प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारतेति । अत्र तृतीयान्ते उपलक्षणविधा ज्ञेया । अप्रकाशोऽप्रवृत्तिश्चेति वाक्यात्। शेषं पूर्ववत्॥ कापिलास्तु, प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योन्यं वैधर्म्यं, लघ्वादिधर्मैरन्योन्यसाधर्म्यं गुणानामिति प्रवचनसूत्रद्वयस्थादिपदाभ्यां कार्यान्तराण्यपि सङ्गृह्णते। यथा हि सांख्यकारिका। प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्ति-

नियमार्थाः * अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥ सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः *गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिरिति । एतदर्थस्तु— सुखदुःखमोहस्वरूपाः प्रकाशप्रवृत्तिनिग्रहफलका यथाक्रमं गुणाः । ते पुनरन्योन्याभिभवनान्योन्याधारत्वान्योन्यजननान्योन्यमिथुनक्रियाकाः पुरुषार्थ स्वत एव भवन्ति. न तु केनचित् प्रेरिताः । यथा वर्त्तितैले अनलविरोधिनी सहानलेन रूपप्रकाशलक्षणं कार्यं कुरुतो, यथा वा वातपित्तश्लेष्माणः परस्परविरुद्धाः शरीरधारणलक्षणं कार्यं कुर्वन्ति तथैते गुणाः परस्परविरोधिनोऽप्यनुवर्त्तन्ते, स्वकार्यं च कुर्वन्तीति । शेषं स्पष्टमिति सांख्यतत्त्वकौमुद्यां व्याख्यातः । तत्र स्वतोऽनुवर्त्तनादिकमनादरणीयम् । स्वभाववादानीश्वरवादाश्रयणात् । तथात्वे श्रुतिस्मृतिविरोधात् । अन्योन्यजननमिथुनवृत्तित्वं च तथा । लक्षणसाङ्कर्यप्रसङ्गात् । रजसो दुःखात्मकत्वं च तथा । रागात्मकत्वविरोधात् । शेषं तु गीतादिविरोधाभावादनुमतमेव । एते च गुणा यदा भगवतः सकाशादेवोत्पद्यन्ते तदा माया चिच्छक्तिरूपा आनन्दरूपा त्रिविधा । इत्थं विचिन्त्य परमा स तु वासुदेवनामाऽवधार्य निजकारणमुक्तिदाता * तस्याज्ञयैव नियता परमापि रूपं वव्रे द्वितीयमिति यत् प्रवदन्ति मायामिति पञ्चरात्रवाक्यात् । तन्मायाफलरूपेणेति, दैवी ह्येषा गुणमयीति च भगवद्वाक्यात् । द्वितीयस्कन्धे, सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः * स्थितिसर्गनिरोधेषु गृहीता मायया विभो इति मायायाः करणत्वबोधकब्रह्मवाक्याच्च । एतेषु मूलगुणेषु स्थित्यावधिकृतसत्त्वं यदान्योपमर्दवशाद् दुर्बलं भवति तदा देवादिरूपेण भगवन्तं मार्ग्यावतारयति स्वांशधर्मादिस्थापनार्थम् । तदा स्वयं, तद्वतारशरीरसमवायि वा, शरीरशोधकं वा, शरीररूपं वा, माधु-

र्भावे निमित्तं भवति। तदा सत्त्वस्यावयवा अपि पृथक्पृथग्रूपाणि बिभ्रतीति प्रथमस्य दशमे, यदा हीति श्लोके स्थितम्। यदा पुनस्तन्मायाफलरूपेणैकादशोक्तरीत्या उभयात्मिका चिच्छक्तिरूपा। दैवी ह्येषा गुणमयीति वाक्याद् गुणमयी माया भवति तदा तु, तमो रजः सत्त्वमिति प्रकृतेरभवन् गुणाः * यया प्रक्षोभ्यमाणायाः पुरुषानुमतेन चेति वाक्यात् प्रकृतिधर्मरूपविषयगुणा भवन्ति। क्षोभ्यमाणत्वोक्तेः। तदग्रे च, तेभ्यः समभवत् सूत्रमिति महत्तत्त्वोत्पादकत्वकथनान्महदुत्पत्तेश्च। ततोऽभवन्महत्तत्त्वमव्यक्तात् कालनोदितादिति, दैवात् क्षुभितधर्मिण्यां स्वस्यां योनौ परः पुमान् * वीर्यमाधत्त साऽसूत महत्तत्त्वं हिरण्मयमिति तृतीयस्कन्धादिवाक्यैः क्षोभोत्तरभावित्वनिश्चयाद्वैषम्यापरपर्यायस्य क्षोभस्य च सजातीयसंवलनात्मकपरिणामरूपत्वादपि तथा। एतेषां च सत्त्वादीनां गुणत्वं न परार्थत्वात्। तथा सति संघाततया गुणानां प्रत्येकं सर्वदा त्रिगुणत्वे लक्षणासाङ्कर्यमसद्भावात्। किन्तु बन्धकत्वादेव। नच क्षोभस्य पाश्चात्त्येनाक्षुब्धानां स्वरूपाप्रत्यायकत्वात् कार्यलक्षणाव्याप्तिः शङ्क्या। स्वरूपायोग्यतया गुणाभिमानिबन्धकत्वेन च लक्षणसमन्वयात्। भगवतो निर्गुणत्वं तु सूत्रकार्पासन्यायेन। यथा कार्पासे सूत्रं न, किन्तु कार्पासमेव स्वावयवैः पौर्वापर्यमापद्यमानं सूत्रतामापद्यते, तथा निर्गुणो भगवान् गुणानुत्पादयतीति सुबोधिन्युक्तदिशा ज्ञेयम्। सदंशात्मकत्वं चिदंशाद्रज आनन्दांशाच्च तम इत्यादित्वादिसर्गाभिप्रायं, कल्पान्तराभिप्रायं वाऽतो न दोष(१) इति गुणानां लक्षणानि॥

(१) पूर्वोक्तकल्पाभिप्रायम्। कल्पान्तरे त्वेकादशस्कन्धोक्तरीत्या सच्चिदानन्दात्मकाद् ब्रह्मणः सकाशान्मायोत्पत्तौ तद्गुणत्रयस्य विभाग इत्यतो न दोष इति वा पाठः॥

अथ पुरुषः ॥ तल्लक्षणं त्वात्मेति देहेन्द्रियादिकं सर्वं परार्थमतति व्याप्नोत्यधितिष्ठतीत्यात्मा। आत्मनस्तु त्रीणि लक्षणानि। तेष्वनादित्वे सति निर्गुणत्वे सति प्रकृतिनियामकत्वे सत्यहंवित्तिवेद्यत्वमित्येकं लौकिकम्। स्वयम्प्रकाशत्वमित्यपरं स्वरूपलक्षणम्। विश्वगतगुणदोषसम्बन्धाभावेऽपि सम्यक् संसर्गवत्त्वमिति तृतीयं मुक्त्युपयोगि। तदुक्तं तृतीयस्कन्धे। अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः॥ प्रत्यग्धामा स्वयञ्ज्योतिर्विश्वं येन समन्वितमिति। अत्र प्रथमलक्षणेऽनादिपदं महदादिसाधारणसादित्वनिषेधपरत्वेन व्याख्येयम्। द्विधा समभवद् बृहदिति वाक्यानुरोधात्। तेनैव भगवद्वारणमपि। शेषं तूपयोगि। तत्र देहादिवारणाय प्रकृतिनियामकत्वे सतीति व्यतिरेकव्याप्त्या तथात्वसाधनायानादीति। तथैवानादित्वसाधनाय निर्गुणेति। कालवारणायाहंवित्तीत्यादि। इदं च लक्षणं व्यतिरेकमुखेनेतरभेदसाधने व्याप्यत्वेन पर्यवस्यति। प्रयोगस्तु— पुरुषः प्रकृतिप्राकृतभिन्नः। उक्तलक्षणकत्वात्। यन्नैवं तन्नैवमिति। द्वितीयं स्वात्मत्वसाधकम्। तथाहि। सुषुप्तौ द्विविधेऽपि करणे लीने ततः कुतोऽपि हेतोरुत्थितस्य पुंसः सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति। आत्मानमप्यबुद्ध्वा शायितोऽस्मीत्यादिस्मरणात् सुषुप्तावनुभवोऽस्तीति अनुमीयते। अनुभवं विना स्मरणायोगात्। अनुभवत्वेन स्मरणत्वेन कार्यकारणभावात्। स च न सविषयकः। तथा सति विषयमपि तदानीं प्रकाशयेत्। नापि साक्षात्परम्परया वा विषयजन्यः। तथा सति सविषयकः स्यात्। सविषयकस्य विषयजन्यत्वनियमात्। प्रत्यक्षं परोक्षं वा विषयप्रकाशनप्रसङ्गाच्च। अतो विषयाजन्यो निर्विषयक एव विलक्षणः कश्चिदनुभवोऽस्तीति निश्चीयते। एवं सति विषयकालभेदेन भिन्नेष्वपि स्मरणेषु योऽहंतामभिमन्यमानो नि-

सदानुस्यूतः स एव तदानीमपि मुक्ताऽद्वैतः अविषयः केवला-ऽनुभवरूप इदानीं स्वाज्ञानमाननाचदानीमस्पष्टप्रकाशः स्वयमेव स्वरूपेण प्रकाशते इति स्वयम्प्रकाशं तत्स्वरूपं मन्तव्यम् । किञ्च निद्राया परस्पर्शादौ मां स्पृशतीत्यादिज्ञानाभावान्न देहाध्यासः । पश्यामि सङ्कल्पयामि श्वसिमीत्याद्यनुव्यवसायाभावान्नेन्द्रिय-प्राणमनोऽध्यासः। अतः परमहङ्काराध्यासोऽवशिष्यते । सोऽपिचे-न्नाहमासमिति स्मरणेऽभावविषयत्वेन भानत्तदा सुषुप्तौ केवलो द्रष्टैव विनिद्रोऽवशिष्यते । नच स्मरणानुरोधाचदानीमहमध्यासा-पत्तिः । स्मरणस्य विशेषमत्रयत्वेन विशेषानुग्रहजन्यत्वात्।सोऽयं देवदत्तः कुण्डलीति प्रत्ययवत् । अस्तित्वसाधनप्रयोगस्तु— सुषु-प्त्युत्तरकालीनं न किञ्चिदवेदिषमित्याद्याकारकं स्मरणमनुभवपू-र्वकम् । स्मरणत्वात्।यदेवं तदेवम् । यन्नैवं तन्नैवम् । उक्तस्मरण-जनकोऽनुभव आत्माभिन्नः । अविषयत्वात् । यन्नैवं तन्नैवमिति । एवमनुमानाभ्या विलक्षणानुभवे तस्यात्माभेदे च सिद्धे आत्मा-ऽस्तित्वमनुक्त्यैव सिद्ध ज्ञेयम् । यत्तु सुषुप्तौ सुखमात्मा वा न प्र-काशते । अभासमानस्य च व्यवहारमात्रेण प्रकाशनं न वक्तुं शक्यम् । किञ्च । सुप्तापादुत्थिताः कामुकाः आश्लिष्टां कामि-नीमनुद्ध्वा निर्विशन्ते । मया मूढनाच्छयितं, कामिनीं विना वृथैव यामिनी गतेत्यादि । यदि सुषुप्तौ स्वल्पोऽपि परमानन्दोऽनुभूतः स्यान्निर्वेदो नावकल्पेत । सुखितिस्मरणान्निर्वेदश्चेत् सुखमस्वाप्स-मिति व्यवहारो न युज्येत । अतः सुषुप्त्युत्थितस्य सुषुप्तावप्रगतं किञ्चिदा दुःखस्मरतः स्मरणानुत्पत्त्यैव सुषुप्त्यवस्थाया न मे दुःखमासीदित्यवगम्य तत्रैव दुःखाभावे गुणवृत्त्या सुखव्यवहारः । आत्मानमप्यबुद्ध्वा शयितोऽस्मीति व्यवहाराच्च, नात्मापि तत्र स्वप्रकाशो इति शाङ्करीपिकाकाराः ॥ तदविचारचारु ॥ त-

-त्यादि ॥ सुखमहमस्वाप्समिति स्मरणे स्वप्नक्रियाविशेषणत्वेन स्मर्यमाणस्य सुखस्य सुषुप्तिसमानकालीनत्वमेव गोचरीक्रियते। तच्च सुखं सत्सम्पत्त्येति श्रुत्याऽवसीयते। अतो नायं गौण्या व्यवहारः। कामुकनिर्वेदस्तु बाह्यसुखाभावादेवावकल्पमानो न तत्रसमुखबाधक इति। आत्मावोधज्ञानं तु विषयत्वेनात्मबोधाभावविषयकमिति न स्वप्रकाशतां बाधते। अन्यथा सुखात्मानावपि न स्मर्येयाताम्। अनुभवमन्तरेण स्मरणायोगादित्युक्तम्। ननु स्मरणस्य स्वसजातीयानुभवजन्यत्वनियमानुरोधाद्विषयत्वेनैवैषां भानमङ्गीकार्यम्। तच्चार्थान्तरतापादकं प्रत्यक्षविरोधि च। निर्विषयं तु ज्ञानं न क्वापि सिद्धमतो नेद युक्तमितिचेन्न। तत्ताया इवेदानीं सविषयत्वस्य स्फूर्तावपि तदानीं निर्विषयत्वस्याबाधाद् उक्तनियमस्य वाऽप्रयोजकत्वात्। अन्यथा तत्तायामतीतत्वस्य चास्फुरणापत्तेः। निर्विषयत्वस्य च जन्यज्ञान एव बाधकत्वेनास्वरूपाज्जन्यज्ञानाबाधकत्वात्। अतो न चोद्यावसरः। अत एव श्रुतिरपि, अत्रात्मा स्वयञ्ज्योतिर्भवतीत्याद्येति दिक्॥

एवं तस्य केवलत्वे सिद्धे यत्तस्मिन् कर्तृत्वादिना सगुणत्वप्रत्ययः स सृष्ट्यनुकूलभगवदिच्छया प्रकृत्याद्यविवेककृतः। सूर्यस्येव रक्तादर्शादौ रक्तप्रत्ययः। अत एव च मुक्तियोग्यत्वम्। अन्यथा बन्धस्य स्वाभाविकत्वापत्तौ मोक्षशास्त्रवैयर्थ्यापत्तेः। स्वाभाविकस्य नाशायोगात् प्रवृत्तिविघातेऽननुष्ठानलक्षणाप्रामाण्यापत्तेश्च। स्वभावनाशाङ्गीकारे च दुग्धादिवत् स्वरूपनाशप्रसङ्गादनित्यतापत्तेश्च। नच शुक्लपटन्यायेन स्वभावनाशाङ्गीकारे स्वरूपनाशाभावाददोष इति वाच्यम्। तत्र स्वभावानाशात् क्षालनादिना पुनरुद्भवदर्शनात्। अभिभवमात्रं परम्। तथा सति पुनर्बन्धापत्तौ न स पुनरावर्तत इत्यादिश्रुतिविरोधापत्तेः। तदिदं

हृदि कृत्वा तृतीयं लक्षणम्। सोऽयं न नाना, किन्त्वेक एव सर्वत्र। अहमात्मा गुडाकेश सर्वभूताशयस्थित इति वाक्यात्। प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपीति वाक्यस्थयोरेकवचनान्तयोः पदयोर्मध्य एकस्य व्यक्तिपरत्वमन्यस्य जातिपरत्वमित्यत्र विनिगमकाभावाच्च। ज्ञानं त्वन्यतमो भाव इति वाक्याच्च। कालवृत्त्या तु मायायां गुणमय्यामधोऽसजः * पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवानिति प्रकृतौ वीर्याधानमात्रार्थमेव करणत्वेनैव तस्यापेक्षणाच्च। सांख्यान्तरे स्वयमेवेश्वर इत्युच्यते। पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि* तदन्यकल्पनाऽपार्थेति पञ्चविंशतितत्त्वोपपादन एकादशे भगवद्वचनात्। चिद्रूपत्वेन पुरुषेश्वरयोरवैलक्षण्यात्। तदुपपादितं तृतीयसुबोधिन्यां श्रीमदाचार्यैः। तथाहि। पुरुषस्त्वेक एव। पुरुषेश्वरयोरत्र न वैलक्षण्यम् अण्वपि तदन्यकल्पनाऽपार्थेति। अतो जीवेश्वरावधवस्थाभेदेनैव भिन्नौ, न स्वत इति यदेव पुरुषलक्षणं तदेव जीवलक्षणम्। प्रकृतिरपि यद्येका भवेद् अवस्था न भिद्येत। अतः प्रकृतिद्वयं मन्तव्यम्। तत्रैका व्यामोहिका, द्वितीया तु मूलप्रकृतिः। यदा भगवदिच्छया पूर्वाभिन्यते तदा इच्छाव्यापारभूतैर्मोहकप्रकृतिगुणैर्बद्धो वशीकृतो जीवावस्थां प्राप्नोति। यदा तु मूलप्रकृतिं तदा स्वरूपस्थित एव जगत्कारणं भवति। प्रदेशभेदेन वा ते उभे पुरुषसङ्गते। यथाऽऽकाशे क्वचिद् ग्रहादि, क्वचिन्न, तद्वत्। जीवानां पृथक्त्वे श्रुतिस्मृतिविरोध आपद्येत। प्रपञ्चस्य मिथ्यात्वेऽपि शास्त्रविरोधः। अनिर्मोक्षः। एकमुक्तौ सर्वमुक्तिरविश्वासश्च स्यात्। अथ उभयं यथोपपद्यते तथा मूलपुरुषः प्रकृतिद्वयं गृह्णातीति मन्तव्यमिति। प्रकृते त्वयं द्वारभूत एव भगवदंशः। ईश्वरस्तु भगवान् स्वयमेव। उत्तमः पुरुषस्त्वन्य इति वाक्यात्। तत्स्वरूपं तु शास्त्रार्थप्रकरण-

निरन्य एव मयाञ्चितमिति । नात्रोच्यते । जीवस्तु पुरुषतत्त्वाद् भिन्न एव । एकस्यैव ममांशस्येति, ममैवांशो जीवलोके जीवभूतः सनातन इति भगवद्वाक्याद् । परं तु चिद्रूपत्वेन तत्सजातीयः पुरुषस्यैवांशो वा । क्षरः सर्वाणि भूतानीति वाक्याद् । एकस्य फलत्वमिसनेनाचार्यैः फलत्वाङ्गीकाराद् । प्रथमस्कन्धे, तस्यैव हेतोः प्रयतेत कोविद इत्यस्य सुबोधिन्यामपि पुरुषांशत्वोक्तेः । स्वमात्मनात्मानमवेहीत्यत्राक्षरांशपुरुषांशभेदेन द्विविधजीवाङ्गीकाराच्च । एवमपि भगवदंशत्वाविरोधाच्च उभयथापि स्वरूपलक्षणे कोऽपि न विशेषः । तेन सुषुप्त्यादिसाक्षित्वेन जीवात्मसिद्ध्यैव मूलपुरुषस्यापि सिद्धिरस्त्यूह्य ॥

कापिलास्तु— अव्यक्तमहदहङ्कारादयः परार्थाः । सङ्घातत्वाद् । पर्यङ्कासनादिवत् । संघाताः, त्रिगुणात्मकत्वाद्, अविवेकित्वाद्, विषयत्वाद् सामान्यत्वादचेतनत्वाद्, प्रसवधर्मित्वादिति पञ्चभिर्हेतुभिः संघातत्वम् । तेन च परार्थत्वमव्यक्तादीनां साधयित्वा, यदार्था एते स परः पुरुषोऽस्ति । स च पूर्वोक्तेभ्योऽव्यक्तादिभ्यो विपरीतस्तद्विलक्षणश्च । तथाहि । पुरुषः, अपरार्थः । असंघातत्वाद् । असंघातः । अत्रिगुणत्वादविवेकित्वादविषयत्वादसामान्यत्वाच्चेतनत्वाद् अप्रसवधर्मित्वाच्च । यन्नैवं तन्नैवम् । अत्रिगुणः । परानधिष्ठीयमानत्वाद् । यन्नैवं तन्नैवम् । रथादिवद् । व्यक्ताव्यक्तभिन्नः । भोक्तृत्वाद् । कैवल्यार्थं प्रवर्तमानत्वाच्च । यन्नैवं तन्नैवम् । व्यक्ताव्यक्तवत् । यद्यपि संघातलिङ्गकानुमाने दृष्टान्तस्य पर्यङ्कादेः सङ्घातान्तरार्थत्वमेव दृष्टमिति दार्ष्टान्तिकेऽप्यव्यक्तादौ सङ्घातान्तरार्थत्वापत्त्या पुरुषस्यापि सङ्घातत्वापत्तिरिसर्धान्तरताऽऽपतति, तथाप्यनवस्थापत्तिभिया पक्षे दृष्टान्तीयासोपधर्मापत्त्याऽनुमानमात्रोच्छेदप्रसङ्गेन चासंघातरूपस्यैव पुरुषस्य तेना-

पि सिद्धिः। एवं सिद्धः पुरुषः प्रकाशस्वरूप एव, न तु जन्यज्ञानवान्। अनङ्गश्रुतेः। अन्यथा परिणामित्वापत्तेरनिर्मोक्षप्रसक्तेश्च। सुषुप्त्याद्यसाक्षितापत्तेश्च। स च व्यापको नित्यः प्रतिशरीरं भिन्नश्च। यथाहुः— संघातपरार्थत्वात्त्रिगुणादिविपर्ययादधिष्ठानात्। पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च॥ जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च। पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैवेति। तेषु प्रकृतौ महत्तत्त्वे वा प्रतिबिम्बितो यः स सर्वज्ञत्वं सर्वकर्तृत्वं चात्मन्यभिमान्यमान ईश्वर इत्युच्यते। रजस्तमोभ्यामुपरक्तेऽधर्मादियुक्ते महत्तत्त्वादौ तादृशे महत्तत्त्वे वा प्रतिबिम्बितश्च जीवात्मेत्युच्यत इत्याहुः॥

पातञ्जलास्तु— अविद्याऽस्मितारागद्वेषाभिनिवेशाऽऽख्यैः पञ्चभिः क्लेशैर्विहितनिषिद्धव्यामिश्ररूपैस्त्रिविधैः कर्मभिर्जात्यायुर्भोगाख्यैकैर्विपाकाख्यैस्त्रिभिः कर्मफलैराशयाख्यैः संस्कारैश्च त्रिष्वपि कालेष्वसंस्पृष्टः पुरुषान्तरेभ्यो विशिष्टः स्वत एव सकलजगदुद्धरणक्षमः पुरुष ईश्वरः। स चाऽनुमानागमाभ्यां सिद्ध्यति। तथाहि। अतीतानागतज्ञत्वं क्वचिन्निरतिशयत्वरूपां काष्ठां प्राप्तं सातिशयधर्मत्वान्महत्त्वाल्पत्वादिवत्। यत्र चेदं निरतिशयता प्राप्तं स ईश्वर इति सामान्यतस्तत्सिद्धौ विशेषेण तत्स्वरूपम् आगमादवगम्यते। स एव च निर्माणार्थं कायमधिष्ठाय ब्रह्मादिभ्यो वेदाद्युपदिशति। यस्य यस्य यद्यदिष्टं तत्तेभ्यो दत्वा सर्वान् संसारिण उद्धरिष्यामीत्यध्यवसायेन प्रकृतिपुरुषसंयोगवियोगौ च करोति। न च क्षेत्रज्ञाधिष्ठानेन तत्संयोगसिद्धिः। तेषां प्रकृतिस्वरूपानभिज्ञत्वेन तत्कृताधिष्ठानस्याशक्यवचनत्वात्।

न च वत्सार्थं क्षीरस्येव स्वतः प्रकृतेः संयोगार्थं प्रवृत्तिरिति वाच्यम्। तथापि चेतनानधिष्ठितस्य क्षीरस्याप्रवृत्तिरिति दृष्टान्तवलेना-

ऽप्यधिष्ठातुः सिद्धौ क्षेत्रज्ञानामयोग्यत्वादीश्वरं विना तदसिद्धेः । एतेनैव कृषीवलकृतधान्यारोपदृष्टान्तोऽपि दत्तोत्तरः । कालादृष्टादीनामुत्तरभावित्वाचैः स्वपूर्वकालीनसंयोगासम्भवात् । अतोऽन्यपुरुषविलक्षण एव भगवानीश्वरः । तस्य च तथाविधमैश्वर्यमनादिनिरतिशयसर्वज्ञानसमाधिकरणादनादिसम्बद्धसत्त्वोत्कर्षात् । तस्य च सत्त्वस्यानादिः केवलसात्त्विक एवोत्कर्षात् परिणाम ईश्वरभोग्यतया व्यवस्थितः । अन्यप्राणिनां चित्तं यथा सुखदुःखमोहात्मना परिणमन्निर्मले सात्त्विके धर्मात्मसत्त्वे प्रतिसंक्रान्तं चित्प्रतिबिम्बस्य संवेद्यं भवति, नैवमीश्वरस्य । अत एव च न मुक्तात्मनां तत्तुल्यत्वम् । तेषां पूर्वं क्लिष्टत्वात् । अनेकेषामीश्वरत्वे भिन्नाभिप्रायत्वेन कार्यानुत्पत्तिप्रसङ्गाच्चेति भगवानीश्वरोऽतिरिक्त एवेति । संसारिणस्तु नित्योदितचिच्छक्तिरूपाः स्वसन्निहिते सत्त्वे प्रतिसंक्रान्ताः सत्त्वगतं चैतन्यमभिव्यञ्जन्ति । अत एवास्मिन् दर्शने द्वे चिच्छक्ती, नित्योदिताऽभिव्यङ्ग्या चेति । तत्राभिव्यङ्ग्याधारभूतं सत्त्वमामोक्षप्राप्तेर्भोग्यं भवति । तदेव भोग्यसत्त्वं सांख्यैः सुखदुःखभोक्तृतया कर्मात्मेत्युच्यते । भोगस्तु सुखदुःखमोहात्मकचित्तस्य इन्द्रियविषययोगाद्विषयाकारेण परिणतस्य पूर्वोक्ते सत्त्वे स्वाकारसमर्पणाद्भवतीति जीवेश्वरव्यवस्थामाहुः ॥ शेषं तु सांख्यवदेवेति ॥

भाट्टास्तु— प्राणनादिलिङ्गैः सुखादिभिर्ज्ञानेन चात्मानं शरीरादिभिन्नत्वेन साधयन्ति । तथाहि । कौष्ठ्यस्य वायोरूर्ध्वाधोगमनं प्राणापानशब्दवाच्यम्, तद्धेतुभूतः प्रयत्नः सुखादयो ज्ञानं च न शरीरधर्माः । अयावच्छरीरभावित्वात् । ये हि कार्यद्रव्यविशेषगुणा रूपादयस्ते द्रव्यनाशाद् विरोधिगुणान्तराद् वा नश्यन्ति । प्राणनादयस्तु शरीरनाशाभावेऽपि विरोधिगुणान्तराविर्भावाभावे-

ऽपिनश्यन्तीसतो न शरीरगुणाः। किञ्च, ये शरीरगुणास्ते स्वपरप्रत्यक्षविषयाः। सुखादयस्तु न तथेति न, शरीरगुणाः। अतोऽयावच्छरीरभावित्वं प्रत्यक्षत्वे सति, स्वपरप्रत्यक्षत्वं चेति, द्वौ हेतू सुखादिषु शरीरगुणतां निवारयन्तावन्यगुणतां बोधयतः। तत्र योऽसावन्यः स आत्मेति। किञ्च। पूर्वाभ्यस्तस्मृत्यनुबन्धेन बालिना हर्षशोकभयादिसम्प्रतिपत्तिर्बालस्य दृश्यते। जातिस्मराश्च केचिदद्यत्वेऽपि देहान्तरवृत्तं वृत्तान्तं बोधयन्त उपलभ्यन्त इत्युपलब्धिसिद्धः शरीरात्मनोर्भेदः। एतेन, देहात्मवादिनश्चार्वाका निरस्ताः। किञ्च, सर्व एव विशेषगुणाः कारणे वर्त्तमाना एव, कार्यद्रव्यगुणतां भजन्ते, न स्ववर्त्तमानाः। शरीरारम्भकेषु च परमाणुषु न चैतन्यमस्ति। ततः कथं चैतन्यस्य शरीरगुणता स्यात्। तस्मादन्यश्चेतन इति। एतेनैव शरीरारम्भकपरमाणुपुञ्जरूप आत्मेति वदन्तो निरस्ताः। किञ्च, एकस्यैव पुञ्जस्य तत्तज्जन्मीयदेवनरतिर्यक्कीटादिशरीरारम्भकत्वे पर्यायेण तेज पृथिव्यादिप्रधानत्वविरोधः परिमाणादिविरोधश्च। चेतनत्वे बुद्ध्याश्रयसाधकानुमानादिषु लाघवोपनीतैकत्वभानविरोधश्च। नच पुञ्जैकत्वमेव तत्र भासत इति वाच्यम्। पुञ्जघटकानां चेतनत्वेन बहुत्वभाने नियामकाभावादित्यन्यत्र विस्तरः। किञ्च, ज्ञातृविषयस्तावदहम्प्रत्यय इत्यविवादम्। यो हि पराम्पृशति स स्वात्मानमहमिति पराम्पृशति। पश्याम्यहमिति। न च शरीरस्य ज्ञातृत्वम्। दत्तोत्तरत्वात्। स्थूलोऽहमित्यादौ तु भ्रान्तत्वोपचारोपपत्तितःपि-द्रप्रतीतिनव। अन्यथा मम शरीरं, सुखं मम जायतेऽहं गच्छामीत्यादौ वैपरीत्यमपि भासते। तथा श्रुतार्थापत्त्या श्रुत्याद्यनिर्णयः। तथाहि। स्वर्गकर्मत्यादिश्रुतयो हि शरीरातिरिक्तपरलोकफलोपभोगयोग्यकर्तारमन्तरेणानुपपद्यमानास्तमाक्षिपन्ति। किञ्च,

साक्षादेव उपनिषदा समर्थयन्ति । अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मेति । तस्मान्मानसप्रत्यक्षरूपाहम्प्रत्ययगम्यो ज्ञाता । नच शरीरादाविवात्मन्यप्यहम्प्रत्ययो भ्रान्त इति वाच्यम् । बाधकाभावात् । नापि योगिनां प्रत्यक्षम् । तेषामप्यात्मन्यहंवित्तिवेद्यत्वव्यवहारदर्शनात् । अत एव, अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा । यस्मात् क्षरमतीतोऽहम् । मम योनिर्महद् ब्रह्मेत्येवमादावहंशब्दः परस्मिन् पुरुषे ध्रुवम् । न हि महद्विकारोऽहङ्कारः कृत्स्नस्य जगतः प्रभवः । नापि क्षराक्षराभ्यामुत्तमः । नापि ब्रह्मशब्दवाच्ये प्रधाने गर्भं दधाति । पुरुषसम्पर्ककृतत्वात् प्रकृतिक्षोभस्य । उपनिषत्स्वपि, ब्रह्म वा इदमग्र आसीदित्युपक्रम्य पठ्यते । तदात्मानमेवावेदहं ब्रह्मास्मीति । मन्त्रवर्णेऽपि मनुरभवमहं सूर्यश्चेति । अतोऽभ्रान्ताहंवित्तिवेद्यो ज्ञाता योगिनां मानसप्रत्यक्षः । निर्मुक्ताहङ्कारममकारवचनन्तु संमूढाहंमतिनिर्मुक्तिपरम् । अत एव ज्ञानिनां न पितृपुत्रत्वाद्यहङ्कारो, नाऽपि तेषु ममकार इति युज्यते । इन्द्रियाद्भेदस्तु, योऽहमद्राक्षं सोऽहं स्पृशामि, योऽहमस्प्राक्षं सोऽहं शृणोमि स्मरामीति सर्वत्र ज्ञातुरेकस्य प्रत्यभिज्ञानादेव सिद्धः । मनस्तु न ज्ञातृ । प्रत्यक्षसिद्धस्य ज्ञातुः स्वरूपादिज्ञानानां स्वव्यतिरिक्तकारणाधीनत्वात् सुखादिज्ञानेषु करणत्वेनैव तस्य कल्पितत्वात् ॥ तस्माच्छरीरेन्द्रियान्तःकरणातिरिक्त एव जन्यज्ञानसुखाद्याधारो मानसप्रत्यक्ष आत्मा । स च नानैव । व्यवस्थासामञ्जस्यात् । ईश्वरत्वं तु कर्मणामेव । यदि कश्चिदस्ति तदा सोऽपि कर्म विना फलासम्भवात् तदधीनः फलसमर्पकोऽस्त्वित्याहुः ॥

प्राभाकरास्तु— सर्वास्वर्थवित्तिषु तावद्वेत्ता भासते । अन्यथा कस्यचित् सर्वधर्मस्फूर्तिरितरस्य नेत्यतिशयो न स्यात् । नच करचरणादिसन्निवेशविशिष्टस्य तदा भानमस्ति । अतोऽस्ति प्रति-

शरीरं शरीराद् भिन्न आत्मा । स च स्वप्रकाशसंविदाश्रयोऽणुश्चेत्याहुः । शेषं तु भाट्टवदिति ॥

नैयायिकास्तु— योऽहमद्राक्षं सोऽहमधुना स्पृशामीति प्रत्ययाद् अनुभवसंस्कारस्मृतीनां सामानाधिकरण्येन कार्यकारणभावाच्चात्मनः स्थिरत्वम् । जातमात्रबालस्य स्तनपानादौ प्रवृत्तिदर्शनात् । तस्याश्च पूर्वानुभूतक्षुन्निवृत्तिकारणाऽनुभवजन्यस्मृतिं विनाऽनुपपत्त्या तस्यात्मनः पूर्वापरजन्मीयशरीरावच्छिन्नस्य पूर्वोक्तयुक्त्यैवैक्यम् । तेन चानादित्वमनादिभावत्वेन च विनाशाप्रतियोगित्वमतश्च नित्यत्वसिद्धिः । किञ्च पूर्वशरीरादिविनाशानन्तरमपि शरीरान्तरे यः सुखदुःखाद्यनुभवः स पूर्वशरीरकृतपुण्यपापफलीभूतत्वेन श्रुतिपुराणानुमानप्रसिद्धिप्रमितोऽस्ति । स च नान्यकृतपुण्यपापादिना सम्भवति । तथा सति कृतस्य निष्फलत्वेनाकृतस्याकस्मात् फलवत्त्वेन कृतहान्यकृताभ्यागमादिदोषापत्तेः । गयाश्राद्धजातेष्टिश्येनेष्ट्यादौ तु पुत्रपितृत्विक्कृतकर्मणा पितृपुत्रयजमानानां या फलसिद्धिः सा तु श्रुतिविशेषरूपनिमित्तवलादिति वैयधिकरण्येऽपि न दोषः । अतः शरीरेन्द्रियव्यतिरिक्त आत्मा । एवं मनसोऽपि व्यतिरिक्त आत्मा । अन्यथा ज्ञानेच्छादीनामतीन्द्रियत्वापत्तेः । अणुगुणानामतीन्द्रियत्वान्मनसश्चाणुत्वात् । विभुत्वे तु पुरीतदादिसंयोगस्य सार्वदिकत्वाज्जाग्रदाद्यवस्थाव्यवस्थानुपपत्तिः । एवञ्च तस्येतरभिन्नस्यात्मनोऽणुत्वे युगपत्पादशिरःप्रभृतिषु सुखदुःखाद्यनुभवो न स्यात् । अयौगपद्येऽप्यतिशैघ्र्याद्यौगपद्यभ्रम इतिचेन्न । अणुत्वसाधकप्रमाणाभावात् । एषोऽणुरात्मेत्यादीनां श्रुतीनां दुर्ज्ञेयत्वाभिप्रायकत्वात् । नाप्यध्यात्मपवनः शरीरावच्छिन्नचैतन्यरूपो वाऽऽत्मा । तथा सति मध्यमपरिमाणवत्त्वेनानित्यत्वापत्तेः । नचेष्टापत्तिः । पूर्वमनित्य-

तया निरस्तत्वात् । अत एव च न सङ्कोचविकाशशालिपरिमाणवत्त्वमतः क्षपणकदिगम्बरादिमतं कदर्थमेव । सावयवत्वापत्तेश्च । एतेनैव च नानापरिमाणवत्त्वमप्यपास्तम् । अतः पारिशेष्यात् तस्य विभुत्वसिद्धिः । किञ्च, देशान्तरे यद् द्रव्यमस्मद्भोगायोत्पद्यते तत्रास्मददृष्टं कारणत्वेन वक्तव्यम् । अत उत्पत्तिदेशे अदृष्टवदात्मसंयोगः कारणं वर्त्ततेऽतोऽपि विभुत्वसिद्धिः । स च जीवात्मपरात्मभेदाद् द्वेधा । तत्रेश्वरस्तु कार्यत्वादिलिङ्गकानुमानैः सिद्धो नित्यज्ञानचिकीर्षाकृतिमानक एव । जीवात्मा तु प्रतिशरीरं शरीरिभिरहं जानामीच्छामि करोमि सुखीत्यादिप्रतीतौ तत्तच्छरीरावच्छिन्नसुखादिवैशिष्ट्येनाहन्तया प्रतीतो बुद्धिसुखदुःखेच्छाद्वेषयत्नधर्माधर्मसंख्यापरिमाणपृथक्त्वसंयोगविभागाख्यचतुर्दशगुणवान् नानेत्याहुः ॥ वैशेषिका अप्येवमेवाहुः ॥

तत्र तावत् पूर्वोक्तपक्षेषु तनुभृतां व्यापकत्वं स्वतो नानात्वं च यदुक्तं तन्न सङ्गच्छते । स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेष्वित्यादिश्रुतिस्तु तस्य भगवत्त्वाभिप्राया । मुक्तानां तथात्वस्फूर्त्तेश्च । मुक्त भगे० स्वैरितरत्र चाधुनैरिति व्यपदेशाच्चैश्वर्यादीनामिव तदानीं व्यापकत्वस्याप्याविर्भावकथनेऽपि बाधकाभावात् । ब्रह्मभावे जाते विरुद्धधर्माश्रयत्वाङ्गीकारेऽपि दोषाभावाच्च । न च मुक्तानां नियम्यत्वानुपपत्तिः । भगवतो मुक्तोपसृप्यत्वकथनात् । चतुर्विधा भजन्ते मामित्यत्र ज्ञानिनोऽपि भजनश्रवणाच्चेत्यन्यत्र विस्तरः । एतेनैव स्वतो नानात्वमपि निरस्तं बोध्यम् । विशेषतस्तु सर्वं प्रभुभिरविरोधतृतीयचरणभाष्ये शास्त्रार्थनिबन्धे विद्वन्मण्डनादौ च प्रपञ्चितं, कर्तृत्वं च जीवस्य शास्त्रार्थवत्त्वाधिकरणे । तच्च भगवत्कृतमिति, परात्तु तच्छ्रुतेरित्यधिकरणेऽशत्वं च नानाव्यपदेशाधिकरणे स्थापितमिति दिक्-

मात्रमन्त्रोक्तम्। ईश्वरस्त्वङ्गीकार्य एव। अन्यथा भोगनियमानुपपत्तेः। किञ्च, कर्म कुर्वाणाः फलं प्राप्नुवन्तीति निर्माणादिषु जीर्णकूपारामादिषु च तथा दर्शनात्। यागश्च स्वर्गं पाक ओदनमिव न साक्षात् साधयति, येनेश्वरापेक्षा न स्यात्। स्वर्गश्च ब्रह्माण्डाधिपस्याधीनो लोकात्मकत्वात्। सुखसाधनान्यपि तदधीनानि। अन्यथा कृते यागेऽपूर्वे निष्पन्ने तदानीमेव स्वर्गो भवेत्। प्रतिबन्धस्याशक्यवचनत्वात्। दृष्टार्थागता एतद्देहादेः प्रतिबन्धकत्वकल्पनेऽपि विनिगमनाविरहादीश्वर एवाङ्गीकार्यः। तथा सति तेनैवैकेन महाराजवत् फलनियमसिद्धौ प्रतिनियतकर्मणामनेकानामीश्वरस्याङ्गीकारोऽनेकप्रतिबन्धकाङ्गीकारश्च व्यर्थ एव। कल्पनागौरवादप्रामाणिकत्वाच्चेत्यन्यत्र विस्तरः। न च तस्य कर्माधीनत्वम्। प्रत्युत कर्मणामेव तदधीनत्वम्। एष उ एव साधु कर्म कारयतीत्यादिश्रुतेः। प्रकृतिपुरुषसंयोगार्थमप्यवश्यमङ्गीकार्यः। न चानाद्यदृष्टेन तदुपपत्तिः। प्रकृतिपुरुषव्यतिरिक्तं सर्वं सादीति सिद्धान्तव्याकोपात्। अनादिभावस्य प्रकृतिवद् ध्वंसाप्रतियोगित्वान्मोक्षोच्छेदप्रसङ्गाच्च। प्रवाहानादित्वे न अदृष्टेन सयोगः संयोगेनाविवेकात् कर्तृत्वाभिमानेन कर्मकरणेऽदृष्टमिति चक्रकापत्तेः। व्यक्तिभेदे त्वनन्तसंयोगकल्पनापत्तेः। नच गर्भदासवदनभिसन्धायैव स्वभावात् प्रकृतिप्रवृत्तिर्नर्त्तकीवत् कुलवधूवच्च चारितार्थ्याद् दृष्टदोषत्वाच्च निवृत्तिरिति न दोष इति युक्तम्। मोक्षे स्वभावनाशे प्रकृतिनाशप्रसङ्गात्। नच अस्तु तदंशेन नाशः। उभयोर्व्यापकत्वेन एकदेशसंयोगस्याशक्यवचनत्वात् सर्वप्रयोगे वक्तव्ये मुक्तौ च तन्नाशे सर्वस्या एव नाशप्रसङ्गात्। अनित्यताप्रसक्तेश्च। तथा सत्येकमुक्तौ सर्वमुक्त्यादिप्रसक्तेश्च। अचेतनत्वेन स्वतश्चारितार्थ्यदृष्टदोषत्वादिज्ञानस्याशक्यवचनत्वाच्च।

चेतनाधिष्ठानेन तत्साधने तु क्षेत्रज्ञाधिष्ठानस्याशक्यवचनत्वात् सिद्धं तदधिष्ठातेश्वरेणेति दिक्॥

सन्तानविज्ञानवादिनस्तु— क्षणिकविज्ञानसन्तान एवात्मा। नचाश्रयमन्तरेण ज्ञानेच्छासुखादिकमनुपपन्नमिति वाच्यम्। आश्रयानुपलब्ध्या तेषां स्वतन्त्रत्वाङ्गीकारात्। नचाहम्प्रत्ययगम्य एवाश्रय इति वाच्यम्। ज्ञानस्यैव नीलमहं जानामीति विपर्यवसितदर्शनस्याध्यवसायात्। क्षणिकज्ञानाऽन्यात्मतत्त्वे प्रमाणाभावात्। नच प्रत्यभिज्ञानुपपत्तिः। सन्तानैक्यादेवोपपत्तेः। उपलब्धुः स्मर्तुश्चैक्याभावात्। एकस्य स्थास्नोः पुरुषस्य क्वाप्यनुपलम्भात्। अतः क्षणभङ्गुरं ज्ञानमेवात्मा, न तु ततोऽन्य इत्याहुः। तदपि कदर्थम्। यथाहुः प्राञ्चः—

प्रत्यभिज्ञायते कर्त्ता यः पूर्वापरकालयोः।

तस्य स्थास्नोः स्फुटो भेदो विज्ञानात् क्षणभङ्गुरात्, इति॥

तथाहि। विषयप्रत्यभिज्ञाया भवेत् सन्तानेनापि निर्वाहः। नतु ज्ञातृप्रत्यभिज्ञायाः।योऽहं पूर्वमद्राक्षं सोऽहमधुनाऽनुपश्यामीत्यत्र ज्ञातुरेकत्वावगमात्। विज्ञानस्य क्षणिकस्य तदानीं विनष्टत्वेनाऽहंवित्तिगोचरस्य तदानीं वक्तुमशक्यत्वात्। सुषुप्तावहम्प्रत्ययसन्तानस्य नष्टत्वेन तत उत्थितस्य ज्ञातृप्रत्यभिज्ञानुपपत्तेर्दुर्वारत्वाच्चेति। जीवस्य प्रतिबिम्बरूपता तु शास्त्रार्थप्रकरणे विद्वन्मण्डनादौ च निराकृता। जीवस्वरूपं च विचारितमिति नेह प्रपञ्चः॥ इति पुरुषो निरूपितः॥

अथ प्रकृतिः॥ तल्लक्षणं तु प्रधानमिति। भगवता जगदुपादानत्वेन निर्मितं मुख्यं भगवद्रूपमित्यर्थः। तस्य च षड् लक्षणानि भगवद्रूपषड्गुणत्वबोधकानि। तदुक्तं, यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम्॥ प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवदिति॥

तत्र त्रिगुणमिति साम्यावस्थोपलक्षितगुणत्रयात्मकम् । कार्यत्वार-
णाय साम्यावस्थोपलक्षितेति । यथा सच्चिदानन्दं ब्रह्म, क्रिया-
ज्ञानानन्दा धर्मा अपि भवन्ति, तथा त्रिगुणात्मकं प्रधानम्। उद्भू-
तास्तद्वशतो गुणा अपि भवन्ति। तेन धर्मधर्मिभावोऽपि नानुपपन्नः
अयमपि कापिलाद् विशेषः।एतेन त्रिविधसृष्टिकरणार्थं भगवदन-
मैश्वर्यमुक्तम्। एते च गुणाः, प्रजायेयेतीच्छया जघन्यभावं प्राप्ताः
सच्चिदानन्दानामाभासा अंशाः, भगवत उत्पन्नायां तस्यां शक्तौ
प्रतिष्ठितास्तस्याः प्रधानत्वबोधकाः । अव्यक्तमिति तस्य वीर्यम् ।
न केनापि कालादिना तदभिव्यक्तं भवति । तथा सत्यनित्यतायां
पुनः सृष्टिर्न स्यात् । नित्यमिति सदैकरूपं कीर्तिरेषा । प्रकृता
सदैव कालादयोऽप्युत्पद्यन्ते तिष्ठन्ति विलीयन्ते चेति त्रैकालि-
काबाधविषयत्वरूपस्य नित्यत्वस्य न हानिः। सदसदात्मकमिति
श्रीः । तस्यैषा शोभा यत्र कार्यकारणात्मकमविशेषमिति ज्ञानहे-
तुः । अन्यथा संसारिणो विवेक्तुमसमर्था न मुक्ताः स्युः । विशे-
षवदिति वैराग्यहेतुः । सर्वान् विशेषान् प्रदर्श्य पुनस्तूर्ष्णीं तिष्ठ
तीति । एतस्या भगवदंशत्वं च प्रतिज्ञादृष्टान्तानुपरोधाधिकरणे
व्यवस्थापितम् । प्रकृतिपुरुषयोश्च स्वस्वामिभाव एव सम्बन्धो-
ऽन्यत्र । प्रकृते तु वीर्याधानस्य विवक्षितत्वात् संयोगोऽपि ।
साकारत्वं चैतयोर्भगवतः साकारत्वादेवोपपन्नमिति न काचिद्
देहेन्द्रियाद्यनुपपत्तिः। उपपादितं चैतदाचार्यैस्तत्त्वस्तुतौ। तथाहि।
भगवतः सर्वतःपाणिपादत्वाद्यदंशा एते प्रतिरूपतया निर्गतास्तत्र
सर्वत्रैव कारणप्रतिरूपहस्तपादादीनां विद्यमानत्वात् तैरेव तेषां
व्यवहार इति ॥ शरीरं तूत्पन्नमेव, अभिमानिनोऽपि चिदंशा
एव विशेषा इति तु महदादिसंग्रहायेति न कोऽपि शङ्कालेशः ॥
इति प्रकृतिः ॥

अथ महान्॥स चात्र क्षुब्धेभ्यो गुणेभ्य उत्पद्यते। तमोरजः सत्त्वमिति प्रकृतेरभवन् गुणाः * मया प्रक्षोभ्यमाणायाः पुरुषाऽनुमतेन च ॥ तेभ्यः समभवत् सूत्रं महान् सूत्रेण संयुत * इति वाक्यात्।अर्थस्तु,सूत्रं सूचनात् क्रियाशक्तिमान् प्रथमो विकारः। ततो महान् ज्ञानशक्तिमान्।॥ च सूत्रेण संयुतः सम्यङ्मिश्रितः। ततः पृथङ्न, किन्त्वेकमेव वाच्यम्। ज्ञानक्रियाशक्तिभ्यां द्वेधोच्यत इति। नच, दैवात् क्षुभितधर्मिण्यां स्वस्यां योनौ परः पुमान् * वीर्यमाधत्त साऽसूत महत्तत्त्वं हिरण्मयमित्यादिवाक्यविरोधः। क्षुब्धानां गुणानां व्यापारतया तत्रात्र च विवक्षितत्वात्। एतद्वाक्यार्थस्तु— दैवात् कालात् क्षुभिता धर्माः सत्त्वादयो यस्याः, तादृश्यां स्वक्षेत्रभूतायां प्रकृतौ परः पुमान् प्रथमपुरुषो वीर्यमाधत्त यथा स्वभार्यायां पुरुषः। तस्येन्द्रियाणि भगवत इवाऽऽनन्दमयानि। रेतस्तु मच्चिदंशः। चिदंश एवेति के। सदंशस्तु प्रकृतेः सकाशात् सम्बद्ध्यते।ततः सा प्रकृतिर्महत्तत्त्वमसूत।तस्य शरीरं हिरण्मयम्। यथा सूर्यान्तर्गतनारायणस्य। आनन्दवतेरिरूपे हिरण्यरूपता भवतीति। महतश्च लक्षणत्रयमाध्यात्मिकाधिदैविकाधिभौतिकभेदेन। तत्राद्यं स्वरूपलक्षणं, द्वितीयं तु देवेषु तत्स्वभिद्धिर्येन रूपेण तद्रूपज्ञानादुपासनार्थम्। तृतीयं तु लोके तद्रूपलक्षणार्थम्। अन्यथा मतिवादिनो न मन्वीरन्। तदुक्तं, विश्वमात्मगतं व्यञ्जयित्यादि श्लोकत्रयेण। विस्तरभयादत्र तदर्थं सङ्क्षिप्य लक्षणानि प्रदर्श्यन्ते। प्रथमश्लोकोक्तानि त्रीणि लक्षणानि गुणत्रयकार्यत्वव्यञ्जकानि। तत्र कूटस्थत्वे सति स्वाधारविश्वव्यञ्जकत्वमिति सात्त्विकं स्वरूपलक्षणम्। ब्रह्माण्डवारणाय प्रलयम्। प्रकृतिवारणाय शेषम्। जगदङ्कुरत्वं द्वितीयं राजसम्। अनिमर्थतमोनाशकत्वमिति तामसम्। द्वितीयश्लोके त्वाधिदैविकं

वासुदेवाविर्भावस्थानशुद्धसत्त्वात्मकत्वम् । तद्रूपतयोपास्यत्वं चोक्तम् । इदमेव च कार्येश्वररूपं निरीश्वरसांख्यानाम् । तृतीये त्वाधिभौतिकं चित्तत्वमिति लक्षणम् । चित्तत्वं च निर्विषयसर्वविकाररहितज्ञानवृत्तिकत्वम् । बुद्धिवारणाय निर्विषयेति । मनोवारणाय सर्वविकाररहितेति । अहङ्कारवारणाय ज्ञानेति । सात्त्विकाहङ्कारस्य तथात्वेऽपि पदार्थस्यैकत्वाच्छान्तिघोरविमूढात्केवलज्ञानत्वं व्यावर्त्तत एव । एवं शुद्धमनसोऽपि। आत्मवारणाय वृत्तीति ॥ सांख्यास्तु— निश्चयवृत्तिकमन्तःकरणं त्रिगुणात्मकमाद्यं कार्यं वा बुद्धिरिति लक्षणमाहुः । तन्मते बुद्धिचित्तयोः पर्यायत्वमत्र तु पर्याययोर्भेद इति विशेषः । अस्य च गोलकं हृदयम् । ब्रह्मा देवता । एतत्तत्त्वे प्रमाणं चाग्रे वक्ष्यते ॥ इति महान् ॥

अथाहङ्कारः ॥ स च महतः सकाशादुत्पद्यते । तदुक्तं, ततो विकुर्वतो जातो योऽहङ्कारो विमोहनः * वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिवृत् ॥ तन्मात्रेन्द्रियमनसां कारणं चिदचिन्मय * इति । विकुर्वत इति कालेन क्षुब्धगुणात् । त्रिवृदिति त्रिव्यूहः । चिदचिन्मय इति। चिदाभासत्वाच्चिदचिद्ग्रन्थिरूपः। तस्याध्यात्मिकं सामान्यलक्षणं तु—तत्तन्मात्रेन्द्रियमनोजनकतमआदिगुणवत्त्वम्। तत्र तन्मात्राजनकत्वं तामसत्वम् । इन्द्रियजनकत्वं राजसत्वम् । तदेव चास्य तैजसत्वम् । मनोजनकत्वं सात्त्विकत्वं वैकारिकत्वं वैकृतत्वमिति च तस्यैव पर्यायौ । मनःपदं देवानामप्युपलक्षकम् । तेन दिगाद्येकादशदेवजनकत्वमपि सात्त्विकस्य लक्षणम् । तदुक्तम्, अर्थस्तन्मात्रिकाज्जज्ञे तामसादिन्द्रियाणि तु * तैजसाद्देवता आसन्नेकादश च वैकृतादिति । देवास्तु, दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः * चन्द्रश्चेत्येकादश ज्ञेयाः । चकारान्मनः ।

इत्याध्यात्मिकानि विशेषलक्षणानि। आधिदैविकलक्षणं तु सङ्कर्षणाधिष्ठानत्वमिसेकमेव। भौतिकलक्षणं तु कर्तृकरणकार्यत्वम्। तत्र प्राणिषु विद्यमानस्य सात्त्विकाहङ्कारस्य कर्तृत्वं लक्षणम्। करणत्वं राजसस्य, कार्यत्वं तामस्य। कर्तृत्वं च, कर्ताहमिति बुद्धिविषयत्वम्। एवमन्यदपि ज्ञेयम्। इदं धर्मपुरःसरं लक्षणत्रयम्। धर्मिपुरःसरं तु शान्तघोरविमूढत्वमिति भौतिकं स्वरूपलक्षणम्। अत एवाहङ्कारेण शान्तिरप्रयोजिका। अत्रापि तृतीयस्कन्धादेव पूर्ववद्विभागः। निरहङ्कारस्य नैते भावा उत्पद्यन्ते। अत एव भगवत्परास्ञितयविलक्षणो भवति। भौतिकलक्षणेन प्रमाणमप्युपदिष्टं भवति। विशेषस्तृतीयसुबोधिनीतोऽवगन्तव्यः। प्राणो बुद्धिश्चास्यैव रूपान्तरम्। ज्ञानशक्तिः क्रियाशक्तिर्बुद्धिः प्राणस्तु तैजस इति द्वितीयस्कन्धात्। तेन सर्वेन्द्रियबलदातृत्वं प्राणलक्षणम्। क्रियाशक्तिमत्त्वात्। बुद्धेस्तु त्रीणि लक्षणानि। तत्र द्रव्यस्फुरणविज्ञानत्वं स्वरूपलक्षणम्। इन्द्रियानुग्राहकत्वं संशयादिपञ्चवृत्तिकत्वं चेति द्वयं कार्यलक्षणं तृतीयस्कन्धादवगन्तव्यम्। अहमोऽपि हृदयं गोलकं रुद्रो देवता। एवं प्राणबुद्ध्योरपीत्यहङ्कारः॥

अथ तन्मात्रा। सा च भूतसूक्ष्मावस्था। इदमेव तल्लक्षणम्। ताः पञ्च सूत्रे उद्दिष्टाः। निर्विशेषशब्दादिगुणवद् भूतत्वम्। अहङ्कारोपादेयत्वे सति तत्त्वान्तरोपादानत्वं वा तल्लक्षणम्। ताश्च शब्दस्पर्शरूपरसगन्धभेदात् पञ्च। योगिनां गोचराः। विशेषा एव तेषामस्मदादिगोचरा इति सांख्याः। तदस्माकमपि संमतम्॥

अथ विशेषलक्षणानि। तत्र श्रोत्रग्राह्यधर्मवान् शब्दः। अनेन प्रमाणमुक्तम्। शब्दार्थेष्वतिव्याप्तिवारणाय धर्मपदम्। नभस्तन्मात्रत्वं द्रष्टृदृश्यलिङ्गत्वं चेत्यपि तल्लक्षणम्। गजो गत इत्युक्ते

गृहस्थितो बहिःस्थितं गजद्रष्टारं स्वरेणानुमिनोति । एवं टङ्काराः दिना घण्टादिकमपि । इदमपि तृतीयस्कन्ध उक्तम् । अर्थाश्रयत्वं शब्दस्य द्रष्टृलिङ्गत्वमेव च * तन्मात्रत्वं च नभसो लक्षणं कवयो विदुरिति द्वितीये च । लिङ्गं यद् द्रष्टृदृश्ययोरिति ।

अर्थाश्रयत्वं चाधिदैविकं वर्णेषु तन्मात्ररूपे शब्दे नानुमन्यते । मतान्तरत्वात् । तेषां नामसृष्टयन्तःपातित्वेनैतद्भिन्नत्वादिति बोध्यम् । रूपसृष्टयन्तर्गतोऽयम् । ततोऽयं तु कार्यगतः सविशेषः सन् पञ्चानामपि गुणः । यत्तु नैयायिकाः शब्दस्याकाशमात्रगुणत्वमिच्छन्ति । तन्न । परस्य दृश्यते धर्मो ह्यपरस्मिन् समन्वयात् * अतो विशेषो भावानां भूमावेवोपलक्ष्यत इति । नभसोऽथ विकुर्वाणादभूत् स्पर्शगुणोऽनिलः * परान्वयाच्छब्दवाँश्चेत्यादिवाक्यविरोधात् । नचात्र कणादादिमुनिप्रणीतदर्शनविरोधात् तौल्यमिति वाच्यम् । शब्दप्रामाण्ये मुनिप्रणीतत्वस्यातन्त्रत्वात् । अन्यथा ताथागतादिदर्शनानामपि प्रामाण्यप्रसङ्गात् । किन्तु वेदाद्यविरोधस्यैव तन्त्रत्वं पुराणस्य तु वेदहृदयत्वाद् वेदरूपत्वाच्च दर्शनापेक्षया प्रबलत्वात् तद्दर्शनमुपेक्ष्यमेव । तेन भेर्यादिशब्दो भौम एव । अयं च कार्यगतो विसारी सावयवश्चेत्युपपादितं शब्दखण्डे । तथा शब्दोत्पत्तिप्रकारः शब्दश्रवणप्रकारश्च तत्रैव निपुणतरमुपपादित इति न पुनर्निरूप्यते । कार्यगतश्च शब्द उदात्तानुदात्तस्वरितकम्पितषड्जर्षभगन्धारमध्यमपञ्चमधैवतनिषादादिभेदादनन्तविध एव । तथा स्पर्शोऽनेकविधोऽपि । नच मानाभावः । नेत्रगोलकावच्छेदे धूमस्पर्शस्येव महागुलीयन्त्रशब्दजन्यस्पर्शस्य मर्मस्पृग्वाक्यजन्यस्य स्पर्शस्य च हृदयावच्छेदेन त्वचाऽनुभवात् । अत एव न काश्चिन्मर्माणि स्पृशेदिति स्मृतिरपि सङ्गच्छते । नच गुणे गुणानङ्गीकारात्तैत्रमिति वाच्यम् । संख्यावद् वक्तुं शक्य-

स्यात् । कल्पनाया दृष्टानुसारित्वादिति ॥ यत्तु शब्दस्य भूम्यादिगुणत्वे घ्राणेन्द्रियादिग्राह्यत्वापत्तिरित्युक्तम् । तन्न । तत्तद्भूतगुणत्वेन तत्तद्भौतिकेन्द्रियग्राह्यत्वेन व्याप्त्यभावात् । पार्थिवरूपादीनां चक्षुरादिग्राह्यत्वदर्शनेन व्यभिचारात् । यत्तु भाट्टाः, शब्दो द्रव्यम् । साक्षात्सम्बन्धेनेन्द्रियग्राह्यत्वात् । घटवदिति प्रयुञ्जते । सङ्कोचविकाशात्मकपरिमाणशाली चेति कल्पयन्ति । तथाहि । भेरीशब्दः श्रोत्रेण गृह्यत इत्यनुभवसिद्धम् । तत्र कदम्बगोलकादिन्यायकल्पनेऽनेकशब्दतत्प्रागभावविरामादिकल्पनागौरवम् । एक एव शब्दस्तावद् दूरवर्ती समुत्पद्यत इत्यङ्गीकारे निकटस्थदूरस्थयोर्युगपच्छ्रवणापत्तिर्न तु क्रमेणेति सङ्कोचविकाशशालिपरिमाणवान् कल्प्यते । प्रयोगश्च—शब्दो द्रव्यमेव, न तु गुणः । सङ्कोचविकाशात्मकपरिमाणवत्त्वात् । भस्त्रावदिति । तेन तत्रैव शब्दे वाय्वनुसारेण विकाशात्मकं परिमाणमुत्पद्यते । तदाऽसौ शब्दः श्रोत्रमाप्नोतीति प्रत्यक्षीक्रियत इत्याहुः ॥ तेषां यद्यपि कल्पना लघीयसी, तथापि प्रत्यक्षानाधिगतस्य परिमाणस्य कल्पनया सिद्धौ तेन शब्दे द्रव्यत्वसिद्धिः।तत्सिद्धौ च तत्र तादृशपरिमाणसिद्धिरित्यन्योन्याश्रयः । किञ्च पूर्वप्रयोगेण द्रव्यत्वसिद्धावपि। तादृशपरिमाणवतः शब्दस्य दूरस्थश्रवणपर्यन्तमुत्पत्तिदेशे स्थितौ निकटस्थस्य श्रवणाभावापत्तिः । वायुना ततो नयने च समस्वरश्रवणापत्तिर्न तु महाप्लुतप्लुतदीर्घह्रस्वादिश्रवणव्यवस्था। तस्मादस्मदुक्त एव पक्षः साधीयान् । यत्तु शब्दो नित्यो, निःस्पर्शद्रव्यत्वाद् आत्मवदिति, नित्यत्वसाधनम् । तदपि हृदयदेशावच्छेदेन स्पर्शानुभवादुक्तरीत्या द्रव्यत्वासिद्धेश्च निरस्तं ज्ञेयम् । यच्च, शब्दो नित्यो, व्योमैकगुणत्वादिति साधनम्। तदपि पञ्चभूतगुणत्वस्याङ्गीकारादेव पक्षे हेत्वसिद्धेर्निरस्तमिति दिक् ॥इति शब्दः ॥

अथ स्पर्शः । स च त्वग्ग्राह्यः । तल्लक्षणं, वायुतन्मात्रत्वम् । अयं कार्यगतः सविशेषः सन् चतुर्णामपि गुणो भवति । तेन शब्दव्याप्यगुणत्वं वा रूपव्यापकगुणत्वं वाऽपि तल्लक्षणम् । सिद्धान्ते तु मात्रारूपो मृदुकठिनशीतोष्णभेदाच्चतुर्विधः । मृदुत्वं कठिनत्वं च शैत्यमुष्णत्वमेव च ॥ एतत्स्पर्शस्य स्पर्शत्वं तन्मात्रत्वं नभस्वत इति वाक्यात् । गुणात्मा तु मृदुपिच्छिलकठिनशीतोष्णानुष्णाशीतलघुगुरुसंयोगादिभेदाद् बहुविधः । मृद्वादिशब्दाश्च धर्मवाचका एव प्रचुरप्रयोगाद्धर्मिणमपि बोधयन्ति । यथा कोशकारः, शीतं गुणे तद्वदर्थाः सुशीमः शिशिरो जड इति । श्रीभागवते च, वस्तुनो लघुकाठिन्यं मृदुगुर्वुष्णशीतताम् । जिघृक्षतस्त्वङ् निर्भिन्नेति शुकोऽप्याह । अत एव लोके भारादिपदप्रयोगश्च । तत्र मृदु कोमलः । यथा मालतीकुसुमादौ । स च गाढस्पर्शेन गृह्यते । चाक्षुषं तूपनीतभानरूपम् । अन्यथा काठिने गुलमनवरङ्गाख्यपुष्पे मृदुत्वभ्रमो न स्यात् । पिच्छिलोऽपि तस्यैव भेदः । स च पट्टदुकूलादिषु । कठिनस्तु पाषाणादिषु । शीतो जले । उष्णस्तेजसि । अनुष्णाशीतस्तु वायौ, भूमौ च । लघुस्तु वायुतेजोजलभूमिषु। यथा सूक्ष्मवायुस्पर्शो ज्वालास्पर्शस्तूलस्पर्शश्च । लघुत्वादेवोर्ध्वगमनं तेजसः । जलीयस्तु गङ्गायमुनयोः कूपनद्योर्वा पयसि पेपीयमाने मुखावच्छिन्नत्वेनैव प्रत्यक्षः । गुरुरपि वायुजलभूमिषु । तत्र वायवीयस्तु वायुपूरितदृतिनमनोन्नेय एव । प्रचितस्यैव वायोस्तदारम्भकत्वात् । बाह्ये वायौ त्वनारम्भादेव । तदननुभवस्तु वेगप्रतिबद्धत्वात्। जलीयस्तु मुखावच्छिन्नत्वचा प्रत्यक्षोऽपि भौमस्तु विष्टम्भेन प्रत्यक्षः । पाणौ फलकुसुमयोः स्थापने पाणिनमनतोलनाभ्यां विनैव फले गुरुत्वानुभवात् । यद्यपि शास्त्रान्तरे गुरुत्वं भिन्नो धर्म उत्तोलनादिनाऽनुगम्यते, तथापि

सोऽस्मिन् शास्त्रे स्पर्श एव । स्पर्शसहितेनैव तोलनादिना तदवगमात् । स्पर्शं विना यत्र गुरुत्वावगमस्तत्र त्वानुमानिक एव । पर्वते वह्नेरिव । किञ्च गुरुत्वं यत्र दृष्टं, तत्रापेक्षिकमेव दृष्टपूर्वतश्च परमाणौ त्रुटौ वा न वक्तुं शक्यम् । आद्यपतनासमवायिकारणस्य तत्र प्रत्यक्षतो बाधात् । जालार्करश्म्यवगतः स्वमेवानुपतन्नगामिति वाक्यात् । एतेन लघुत्वमपि व्याख्यातं ज्ञेयम् । कार्योत्पत्तेः पूर्वमपेक्षाबुद्ध्यनुदयेनापेक्षिकस्य लघुत्वस्याशक्यवचनत्वात् । यत्तु वैशेषिकाः— अस्ति नित्यमतिरिक्तं गुरुत्वं परमाणुमात्रवृत्ति, तेन कार्ये गुरुत्वान्तरं तु न जन्यते । यदि जन्येत तदा तोलकमितावयवद्वयारब्धेऽवयविनि अवयवगुरुत्वाभ्यां सहास्य तोलकचतुष्टयमितं गुरुत्वं स्यात् । तच्च तदनुसार्यवनमनादर्शनादशक्यवचनम् । न च ताभ्यां कार्ये स्वरूपमेव गुरुत्वं जन्यते । स्वभावेन तज्जनने नियामकाभावात् । तच्च घटलग्नतृणादेरिवाग्राह्यमिति वाच्यम् । अप्रत्यक्षस्य तस्यानुमेयत्वे तदुत्पत्तावेव मानाभावात् । अतो नित्यं निरपेक्षं परमाणुमात्रवृत्त्येव गुरुत्वम् । अवयविनि तु तद्बहुत्वादेव गुरुत्वाधिक्यप्रत्यय इति । तन्न । बहुत्वस्य महत्त्वमात्रबोधकत्वात् । तूलादिपुञ्जेषु तथात्वधारणात् । बहुतूलपुञ्जाल्पपाषाणयोः पातने पाषाणप्रथमपातबाधापत्तेश्च । बहुत्वबोधितगुरुत्वस्य पाषाणेऽभावात् । किञ्च, तूलपुञ्जे आद्यपतनासमवायिनो गुरुत्वस्याभावात् पाषाणे बहुत्वबोधितगुरुत्वस्याभावादपेक्षाबुद्धेः पर्यायेणोभयत्रोदयात्तत्रापेक्षिकस्यापि तस्य निर्वक्तुमशक्यत्वाल्लक्षणेऽव्याप्तिप्रासाच्च । किञ्च, यत्र शिथिलावयवश्लिष्टावयवौ तूलपाषाणौ द्वावपि संश्लिष्टौ तत्र तोलनेन शिथिलावयवे पातमज्जनाभ्यां श्लिष्टावयवे गुरुत्वबुद्धिरुदेतीति सत्प्रतिपक्षग्रासः साध्याप्रसिद्धिश्च । अतोऽतिरिक्तत्वातीन्द्रियत्वाद्यङ्गीकारः मन्दास्तपादविश्वासादेवेति

दिक् । केचित्तु, परमाणुषु गुरुत्वं नाङ्गीकुर्वन्तः संयोगेन शब्दवच्छिथिलावयवसंयोगेन लघुत्वं क्लिष्टावयवसंयोगेन गुरुत्वमित्याहुः । तदप्यसङ्गतम् । स्पर्शातिरिक्तस्य संयोगस्यापि वक्तुमशक्यत्वात् । स्पृष्ट एव लोके संयुक्तव्यवहारात् । संयोगे स्पर्शव्यवहाराच्च । नच लौकिकव्यवहारो भ्रान्तेति वक्तुं शक्यम् । शवस्पृशं दिवाकीर्तिं चितिं यूपं रजस्वलाम् * स्पृष्ट्वा त्वकामतो विप्रः स्नानं कृत्वा विशुद्ध्यतीति स्मृतावपि तथा प्रयोगात् । यत्तु, चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च * पतत्यज्ञानतो विप्रो ज्ञानात् साम्यं तु गच्छतीत्युक्त्वा । यत् करोत्येकरात्रेण वृषलीसेवनाद् द्विजः * तद्भैक्ष्यभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहतीति प्रायश्चित्तान्तरविधानादस्ति स्पर्शसंयोगयोर्भेद इति । तदप्यसङ्गतम् । तस्य ज्ञानप्रयुक्तत्वादष्टविधमैथुनक्रियानिर्वृत्तिप्रयुक्तत्वाच्च । नच संयोगस्य द्विष्ठत्वेन स्पर्शस्य चैकवृत्तित्वेन प्रसंसतो भेदनिश्चयात्कैवमिति वाच्यम् । संयोगे व्यासज्यवृत्तित्वस्य विप्रतिपन्नत्वात् । इदमनेन सदृशमिदमनेनेति प्रतियोगिनमपेक्ष्य तत्र तत्रावगम्यमानस्य सादृश्यस्य प्रतिधर्मिभिन्नत्ववदिदमनेन संयुक्तमिदमनेनेति बुद्धिविषयस्य संयोगस्यापि प्रतिधर्मिभेदाङ्गीकारे बाधकाभावात् । हरिद्राचूर्णरूपाभ्यां विजातीयरूपवत् पाकजमृदुत्वादिवच्च द्रव्यद्वयस्पर्शाभ्यां तदानीं संयोगाख्यस्य विजातीयस्य तस्य जननाद् भेदज्ञानेऽपि स्पर्शातिरेकस्य दुरुपपादत्वाच्च । अन्यथा द्वित्वादावपि संख्यातोऽतिरेकप्रसङ्गात् । संयोगजस्तु न संयोगः । भिन्नतया प्रतीयमानत्वात् । नच स्पर्शस्य त्वगेकगम्यत्वात् संयोगस्य त्वक्चक्षुर्गम्यत्वादस्ति भेद इति वाच्यम् । अप्रयोजकत्वात् । त्वग्ग्राह्यगुणत्वस्यैव स्पर्शत्वात् । चक्षुर्ग्राह्यत्वेऽपि त्वग्ग्राह्यत्वानपायात् । ननु के द्वितीयस्कन्धवाक्ये

लघ्वादिग्रहणत्वङ्निर्भेदकथनेनार्थत इतरनिषेधसिद्धेः संयोगे स्पर्शत्वं न युक्तमिति चेत्। अत्र पृच्छामः। कथमत्र निषेधः। किं यस्मादेवं तस्मान्नेतरग्रहणाय त्वङ्निर्भेद इति, उत तस्मादेत एव स्पर्शो नेतर इति। अथवा तस्माल्लघ्वादिषट्कं नेतरग्राह्यमिति। तत्र नाद्यः। संयोगस्यापि त्वचा अग्रहणापत्तेः। न द्वितीयः। वाक्ये निर्देशात् स्पर्शसामान्यस्पर्शत्वहानिप्रसङ्गात्। अतस्तृतीय एव पक्ष आदर्तव्यः। ततश्च न संयोगे स्पर्शत्वायोग इति न किञ्चिदेतत्। ननु संयोगस्य स्पर्शत्वे त्वग्लक्षणस्य चक्षुष्यतिव्याप्तिरितिचेन्न। वायुविशेषगुणत्वेन स्पर्शग्रहस्य तत्र विवक्षितत्वेन चक्षुष्यपि च तदभावेनादोषात्। नच स्पर्शस्य पृथिव्यादिचतुष्टयवृत्तित्वादस्ति भेद इति वाच्यम्। संयोगस्याकाशादिपञ्चकवृत्तित्वे मानाभावात्। आकाशे कन्दुकः, इदानीं घटः, मान्यां चन्द्र इत्यादौ तु कालिकसम्बन्धस्वरूपसम्बन्धाभ्यामेव यथासम्भवं वृत्तिः नियमासिद्धेः। अन्यथा सर्व एवात्मानः काले न स्युः। किञ्च, आकाशादौ संयोगाङ्गीकारे समवायिकारणनिर्वचनाशक्तेः। तथाहि। न संख्यापृथक्त्वयोस्तथात्वम्। तयोर्विजातीयगुणजनकत्वस्यान्यत्रासिद्धत्वात्। यत्र समविषमानेकद्रव्यजन्ये कार्ये त्रिजातीयरूपरसाद्युत्पत्तिस्तत्रापि कारणगतरूपरसादेरेवासमवायित्वं न संख्यायास्तस्याः स्वरूपतो भानं नियम्यैवान्यथासिद्धत्वात्। नापि परिमाणस्य। अतिमहतस्तस्य कार्याजनकत्वात्। नापि विभागस्य। तस्य संयोगजनकतायाः क्वाप्यदर्शनात्। नापि विशेषगुणानाम्। संयोगानन्तरभावित्वात्। नापि घटादिकर्मणः। तस्य तथात्वे निमित्तकारणनिर्वचनाशक्तेः। नच कालेश्वरेच्छादीनामेव निमित्तत्वमिति साम्प्रतम्। तेषां सामान्यत्वेनागतिकगतित्वादिति। नचैव देहविष्टम्भानुपपत्तिः। प्राणसंयोगेनैव तत्सम्भ-

थात् । यस्याः कालेन नोद्याया वियोगः प्राणदेहयोः * प्राणिनः सा स्वसमये मृत्युरत्यन्तविस्मृतिरिति मृत्युलक्षणेन तथावधारणात्। नचात्ममनसोः संयोगराहित्ये ज्ञानानुदयप्रसङ्ग इति वाच्यम् । कार्यकारणकर्तृत्वाध्यासेनेन्द्रियप्रेरणेन च तत्सम्भवस्योपपादितत्वात् । व्यापकत्वं च न सकलमूर्तद्रव्यसंयोगित्वं, किन्तु दैशिकपरिच्छेदरहितत्वमेव । जन्ये ईश्वरे तु देशकालपरिच्छेद्यत्वमिति न कोऽपि चोद्यावसरः । मनसस्तु स्पर्शवत्त्वेऽपि न दोषः । अत्रमयत्वेन वक्ष्यमाणत्वादिति ।तस्मान्न स्पर्शातिरिक्तः संयोगो, न वा गुरुत्वादयः । श्लेषस्तु विभागाभाव एव । संयुक्ता अप्यङ्गुलयश्चलास्तो भवन्ति । संश्लेषे तु न तथा । यथा मिलिताङ्गुलेरिति । एवञ्च स्नेहोऽपि स्पर्शस्यैव भेदः । त्वचैवावगमात् । नच संग्रहनिमित्तत्वेन मृजा नाश्यत्वेन च सोऽतिरिक्त एवास्त्विति वाच्यम् । स्पर्शस्यैव तथात्वाङ्गीकारे बाधकाभावात् । एतेनैवोभयविधं द्रवत्वमपि व्याख्यातं ज्ञेयम् । चक्षुषा तद्ग्रहस्तूपनीतभानरूप एव रूपान्तरक्रियाद्यनुमेयत्वाद्यस्येत्यलं प्रसक्तानुप्रसक्त्या ॥ इतिस्पर्शः॥

अथ रूपम् । तच्च चक्षुर्ग्राह्यम् । तल्लक्षणं च तेजस्तन्मात्रत्वम् । द्रव्याकृतितुल्याकृतिकत्वम् । सर्वदोपसर्जनतया प्रतीयमानत्वम् । व्यक्तिसंस्थासमानसंस्थाकत्वं च ।तदुक्तं, द्रव्याकृतित्वं गुणता व्यक्तिसंस्थात्वमेव च * तेजस्त्वं तेजसः साध्वि! रूपमात्रस्य वृत्तय इति । तच्च तन्मात्रारूपमेकविधमेव । मूले रूपभेदागणनात् । कार्यगतं तु गुणरूपं भास्वरशुक्लनीलपीतहरितलोहितादिभेदादनन्तविधं रङ्गकारादिषु प्रसिद्धम् । तेन स्पर्शव्याप्यगुणत्वं, रसव्यापकगुणत्वं च तल्लक्षणं ज्ञेयम् । चित्रमप्यतिरिक्तं रूपम् । पार्थसारथिमिश्रास्तु कारणगुणानां न कार्यगुणारम्भकत्वम् । गुणद्वयप्रतीत्यभावात् । यदि हि द्वौ गुणौ प्रतीयेयातां तन्तुष्वेकः

पटे चापरः। ततः कार्यकारणभावं मपद्येयाताम्। किन्तु तन्तुरूपमेव तन्तुषु पटभावमापन्नेषु पटरूपतया प्रतीयते, न तु रूपान्तरम्। चित्रपटेऽप्यवयवभेदद्वारेणैव नानारूपमन्वयस्य शक्यवचनत्वाच्चित्रशब्दस्य नानापर्यायतया लोकप्रसिद्धेश्च चित्रमपि नातिरिक्तं रूपमित्याहुः। तच्चिन्त्यम्। चित्रे तथा वक्तुं शक्यत्वेऽपि यत्र हरिद्राचूर्णयोः कार्ये कुङ्कुमादौ निम्बूकरसाक्तहारिद्रवसनादौ वा विजातीयं रक्तं पीतं च रूपं प्रतीयते तत्र कारणगुणारभ्यत्वस्यावश्यकत्वाच्चित्रस्यातिरिक्तत्वाङ्गीकारेऽपि बाधकाभावात्॥ केचिदालङ्कारिकास्तु—यद्यपि रूपाणि षड्विधानि तथापि पारिशेष्यात् त्रीण्येव सिद्ध्यन्ति। पीतारुणयोर्नीलहरितकृष्णाना चैवयात्। ननु घटपटयोरिव पीतरक्तयोर्भेदप्रतीतेर्निह्नोतुमशक्यत्वात्। कारणविशेषगुणाना कार्ये स्वसजातीयगुणारम्भकत्वस्वाभाव्याच्च न तयोरभेदः सिद्ध्यति। नच भेदप्रतीतिर्भ्रमः। बाधकाभावात्। पीते काञ्चने रक्तप्रतीतिरेव बाधकमिति चेन्न। सा पीतातिरिक्तविषयेति। नच कारणगुणानारब्धे पाकजन्ये रक्ते तयोरभेदप्रतीतिः सुस्था। तत्र, पीतं नष्टं पाकेन रक्तमुत्पन्नमिति प्रतीतेरेव भेदप्रसाधकत्वात्। रक्तस्य पीतध्वंससमानाधिकरणत्वादितिचेत्। तदिदं न क्षोदक्षमम्। हरिद्राकिंशुकादिरसे चूर्णादिक्षारयोगेन रक्तिमोपलब्धेरन्यत्वानुपलब्धेश्चान्वयव्यतिरेकाभ्या तदभेदस्याप्तत्वात्। धवलनीलयोगे वर्णान्तरमुपलभ्यत एवेतिचेन्न। मिथो वर्णयोर्योगे वर्णान्तरोपलब्धेर्नभेदप्रसाधकत्वम्। क्षारादेरवर्णत्वेन तत्प्रसाधकत्वमिष्टम्। एतदन्यथानुपपत्त्या तदभेदकल्पनमावश्यकम्। तत्र क्षारादिरर्थञ्जक इति चेत्। ओमिति ब्रूमः। विद्यमानभावस्यैव व्यञ्जकेनोपलब्धेः। उत्कर्षाधायकः स इति चेन्न। उत्कर्षस्य स्वसजातीय-

प्रमाणसिद्धेस्तद्भेदो दैवसिद्धः । न हि रामभद्रस्य उत्कर्षोऽपरत्वं, किन्तु स्वसजातीयेभ्योऽधिकयम । हरिद्रारुणेति प्रयोगात् । तत्र पाकेनैव रूपपरावृत्तिरितिचेत् । स्फटिकेऽङ्गारादौ चूर्णाद्ययोगेऽपि पाकप्रसक्त्या रूपपरावृत्तिर्दुर्वारा। किञ्च, अभिव्यञ्जकसमवधानेऽभिव्यञ्जकस्य तदाविर्भावकत्वेन पीते रक्ताभेदासिद्धेः । पीतं, रक्तासन्ताभावप्रतियोगि । तदन्यापतियोगित्वे सति प्रतियोगित्वात् । रक्तवत् । व्यतिरेके नीलादिवदिसादिना तदऽभेदासिद्धेः । उभयत्रापि पीतत्वस्य त्वन्मते साध्याव्यापकत्वात्सोपाधिता । साध्याभावोपाध्यभावव्याप्तेः पीते व्यभिचरितत्वात् । पक्षतावच्छेदकस्यानुपाधित्वाच्च । मधूपासनायां यत्पीतं चारुणं चेति प्रकृत्य, न पीतादरुणं नारुणात् पीतं भिन्नमिति तयोरभेदो दर्शितः । तस्मात् प्रत्यक्षाऽनुमानशब्दाऽर्थापत्तिप्रमाणेभ्यस्तयोरऽभेदः सिद्धयतीति । अत एवोदयेऽरुणेंऽशुमालिनि पुनः पीतिमप्रतीतिः । तस्मादारुण्यापकर्षः पीतः पीतोत्कर्षोऽरुण इत्युत्कर्षापकर्षयोः स्वावच्छिन्नावच्छेदकत्वनियमात् तयोरैक्यसिद्धिः । अत एव न पीताम्बरे हरावरुणपदवाच्यता । एतेन तेजसः शुक्लभास्वरं रूपमित्युक्तिः प्रत्युक्ता । भास्वरत्वाऽङ्गीकारेऽपि शुक्लानङ्गीकारात्।चन्द्रमसि मण्यादौ च तदौष्ण्यवत् प्रभूतपाथःपृथिवीभागगतरूपेणाभिभवसम्भवात् । यदरुणं तत्तेजसो यद् धूम्रं तद्वायोर्यन्नीलं तन्नभस इति आथर्वणीयाच्च वैदिकस्यैव तच्छोभते। एवं नीलमेघश्यामो हरिरिति सार्वजनीनप्रयोगान्नीलश्यामयोः पर्यायतया तयोरपि न भेदः सिद्धयतीति । अजामेकां लोहितशुक्लकृष्णामिति श्रुतौ प्रकृतेस्त्रिगुणत्वप्रतिपादनात्तज्जन्यस्य जगतोऽपि त्रिगुणत्वमेवेति सिद्धम् । गुणानां चैतद्रूपत्रयवत्त्वमेव । इतरेषामत्रैवाऽन्तर्भाव इत्याहु ॥ तत्र रोचिष्णु ॥ अबाधितप्रत्यक्षे-

णैव पीतारुणयोर्भेदनिश्चयात् । नच तस्योत्कर्षापकर्षविषयत्वा-न्न जातिभेदनिश्चायकत्वमिति वाच्यम् । हरिद्रारुण्यादिप्रत्यये पीतिमारुणिम्नोः सहैव भावेन पीतिम्नि तदपकर्षरूपत्वस्याशक्य-वचनत्वात् । एकविषययोस्तयोः सहानवस्थानात् । अन्यथा कौसुम्भाद्यपकर्षेऽपि पीतप्रत्ययापत्तेः । अतः क्षारादिनापि पीति-म्ना सहैवारुण्यमभिव्यज्यते। अम्लादिना चारुण्यनाशेनाभिभवेन तत्रापि वा पीतिमोत्कृष्यते इति प्रत्यक्षानुरोधेनावश्यं मन्तव्य-मकामैरपि। किञ्च, पीतोत्कर्षस्यारुणत्वं वक्तुमुद्यदंशुमालिनिद-र्शनमप्यसङ्गतम् । उत्कर्षदशाया पीतत्वभानात् । तथैव सुवर्णा-दावप्यवगन्तव्यम् । एवं सिद्धे भेदे प्रत्यक्षबाधितमनुमानादिकम-प्यप्रमाणम् । मधूपासनाश्रुतिरपि भिन्नपदेनाविविक्तत्वमेव तयो-र्वक्ति, न त्वैक्यमिति न विरुध्यते । अत एवाथर्वणीयश्रुति-रपि वायोर्धूम्रमधिकं रूपं वदन्ती कार्येषु कार्याकृतिवद्रूपमप्यति-रिक्तं योपपतीति युज्यते। नीलमेघश्यामो हरिरित्यादावपि श्याम-पदस्य रूपद्वयवाचकत्वम् उपमानपदसमभिव्याहारादवगतव्यम् । कर्पूरगौरः शिवः, स्वर्णगौरी पार्वतीत्यादिषु तथा दर्शनात् । न च श्वेतपीतयोरैक्यं युष्मत्सम्मतम् । अतस्तद्वदन्यत्राप्यवधेयम् । अजामेकामिति श्रुतिरपि सांख्यमते प्रकृतिपरा, वेदान्तिमते तेजो-ऽबन्नपरा। उभयथापि कारणरूपं निरूपयन्ती कार्यमिव रूपान्तरं अन्यं संगृह्णाति। न तु निन्हुत इत्यन्तर्भावेऽपि रूपान्तरमवर्जनीय-मिति दिक् ॥

प्रकृतमनुसरामः ॥ भास्वरं तु परप्रकाशकम् । तच्च स्वाश्र-याधिकदेशवृत्ति । विसारित्वात् । मणिप्रभादौ तथा निश्चयात् । नच तस्यास्तज्जनितविरलसजातीयद्रव्यान्तरत्वमिति वाच्यम् । रूपवत्त्वेन स्पर्शवत्त्वेन व्याप्तेस्तस्या अपि स्पार्शनप्रसङ्गात् । नच

तस्या अनुद्भूतः स्पर्शोऽस्तीति वाच्यम् । मानाभावात् । उक्त-मस्य क्वाप्यदर्शनात् । कारणे उद्भूतः कार्येऽनुद्भूत इति वैप-रीत्याच्च । नच तदवयवा अतिरिक्ता एवेति वाच्यम् । मणिना-शेऽपि तदारम्भकावयवानाशात्तदिस्थ्यसापत्तेः । मणिं विनापि तदुत्पत्तिप्रसङ्गाच्च । मणेः प्रभेतिवत् प्रभावयवानां प्रभेत्वापत्तेश्चेति । इदं च, गुणाद्वालोकवदिति सूत्रे प्रपञ्चितमाचार्यैरिति विशेषा-क ङ्क्षायां ततोऽवधेयम् ॥ इति रूपम् ॥

अथ रसः ॥ स च रसनेन्द्रियग्राह्यः । तल्लक्षणं तु जलत-न्मात्रत्वम् । स च तन्मात्रारूपोऽव्यक्तमधुर एव । कार्यगतस्तु भौमो व्यक्ताव्यक्तभेदभिन्नः कषायमधुरतिक्तकट्वम्लक्षारमिश्रभे-दात् सप्तविधः । तदवान्तरभेदैस्त्वनन्तविधः । गुडशर्कराद्राक्षादुग्धा-दौ तथोपलम्भात् । तेन गन्धव्यापकगुणत्वं रूपव्याप्यगुणत्वं च तल्लक्षणम् । अथ जलेऽव्यक्तमधुर एव । रसान्तरप्रतीतिस्त्वाधार-धर्मसम्बन्धात् । तदुक्तं, भौतिकानां विकारेण रस एको विभिद्यते इति ॥ इति रसः ॥

अथ गन्धः । स च घ्राणेन्द्रियग्राह्यः । तल्लक्षणं तु पृथिवी-तन्मात्रत्वम् । स च व्यक्ताव्यक्तभेदाद् द्विविधः । कार्यगतस्तु गुणरूपः षड्विधः । करम्भपूतिसौरभ्यशान्तोग्राम्लादिभिः पृथ-क् * द्रव्यावयववैषम्याद् गन्ध एको विभिद्यते इति वाक्यात् । तदवान्तरभेदैस्त्वनन्तविधः । तेन रसव्याप्यगुणत्वं तल्लक्षणम् । तत्र करम्भो मिश्रः । स च व्यञ्जनादिषु प्रसिद्धः । एतेन जातिसाङ्कर्यमपि परिहृतं बोध्यम् । अन्यथा लवङ्गादौ यत्र सौर-भ्यं न तत्र पूतित्वम् । यत्र पूतित्वं हिङ्ग्वादौ न तत्र सौरभ्य-म् । उभयसमावेशश्च व्यञ्जन इति तद् स्यादेव । पूतिर्दुर्गन्धः, सौरभ्यं सुगन्धः । पूतिसौरभ्ययोरेव शान्तोग्रौ भेदौ । तत्र शान्त-

पत्रादिगन्धः शान्तः। उग्रश्चम्पकादेर्लशुनादेश्च। अम्लो निम्बूकादेः पर्युषितसूपादेश्च। आदिशब्देन धूमधूपादीनामनेकविधो गन्धोऽपि संगृहीतो ज्ञेयः। अयं च स्वाश्रयाधिकदेशवर्त्ती केतकादिसुगन्धस्यैव दूरत उपलब्धेः। नच द्रव्यावयवनिर्गमादेवोपपत्तौ स्वाश्रयाधिकदेशवृत्तित्वाङ्गीकारो न युक्त इति वाच्यम्। प्रामाणिकत्वात्। तदुपपादितं विद्वन्मण्डने प्रभुचरणैः। तथाहि। दृश्यते विविधचर्मपुटवेष्टितस्यापि मृगमदस्य गन्धोपलम्भो वणिङ्मार्गेषु। न हि तत्र तदवयवनिर्गमापूर्वतरप्रवेशौ सम्भवतः। नच तत्रापूर्वतरप्रवेशस्य वक्तुमशक्यत्वेऽप्यवयवनिर्गमस्त्वदण्डवारितः। तद्भागापगमस्यानुभवसाक्षिकत्वादिति वाच्यम्। तथा सति गन्धोपलम्भसमये प्रसारितमुखस्य तद्रसोपलब्धिप्रसङ्गात्। तेषामवयवानां योग्यत्वात्। अन्यथा गन्धोऽपि नोपलभ्येत। गन्धस्यैवोलम्भे नियामकाभावाच्च। नन्वदृष्टमेव तथेतिचेत्। अहो गौरवभीतिर्वावदूकस्य यदवयवनिर्गमं पुनस्तदवयवपूरणं तद्धेतोरदृष्टस्य च कल्पनं रसाद्यनुभवप्रतिबन्धकादृष्टान्तरस्य च कल्पनां वदतोऽप्यसङ्कोचस्तुण्डस्य, गन्धातिरिक्तेति मात्रकथने च सङ्कोचः। ननु मास्त्वदृष्टकल्पनं, तथापि त्रुटौ रूपस्येव तेषु गन्धस्यैवोद्भूतत्वं कल्प्यत इति चेन्न। यत्रोग्रगन्धस्य कस्यचित् कुसुमस्य लशुनादेर्वा स्पर्शमात्रेऽपि ततो मुहुर्मुहुस्तनया क्षालनेऽपि करस्य न तद्गन्धापगमोऽनुभूयते तत्र तेषां वक्तुमशक्यत्वात्। स्पर्शमात्रलग्नतदवयवानां सकृत्प्रोञ्छनेऽप्यसहिष्णूनां सकृत्क्षालनेऽपि न स्थितिसम्भवः। कुतस्तरां मुहुस्तथा करणे। अतो द्रव्याधिकदेशवृत्तित्वं गन्धस्य मन्तव्यम्। विनश्यद्वस्तुगुणानामनाश्रितत्वेनाङ्गीकारो यथा तव तथा द्रव्याधिकदेशवृत्तित्वेनानुभवेऽपि कुरुष्वेत्यादि। श्रुतिरपि, यथा वृक्षस्य संपुष्पितस्य

दूराद्गन्धो वातीति । अत्र तदन्वयव्यतिरेकनिरूपणार्थमेव दूरपदम् । यत्तु प्रसारिणमुखस्य रसानुपलम्भे गन्धोपलम्भसामग्र्या एव प्रतिबन्धकत्वमिति कश्चिदाह । तत् फल्गु । विजातीयगुणोपलम्भकत्वेन रूपेण प्रतिबन्धकत्वस्याशक्यवचनत्वात् । एककालावच्छेदेन नेत्रगोलकान्तस्त्वचा चक्षुषा च वह्न्यौष्ण्यरूपयोर्ग्रहणस्य सर्वजनीनत्वात् । गन्धोपलम्भकत्वेनेतिचेन्न । असिद्धत्वाद्वैपरीत्यस्यापि सुवचत्वाच्च । नच फलबलेन तस्याः प्राबल्यं कल्प्यत इति वाच्यम् । फलस्यास्मदुक्तरीत्यापि सिद्धेस्तस्या एव बलवत्त्वे नियामकाभावात् । क्षणान्तरे रसोपलम्भप्रसङ्गाच्च । नच तद्गतरसादीनामनुद्भूतत्वमिति वाच्यम् । अनारम्भकेषु तेष्वनुद्भूतरसाद्यङ्गीकारस्य प्रमाणरहितत्वादिति दिक् ॥ नच मुहुःक्षालनाद्विना गन्धापगमतारतम्ये गन्धस्य सावयवत्वापत्तिरिति वाच्यम् । इष्टापत्तेः । नच स्पर्शवत्त्वापत्तिः । सावयवद्रव्यत्वेनैव स्पर्शवत्त्वेन व्याप्तिरङ्गीकारात् । भूतसूक्ष्मरूपत्वेनेष्टापत्तेश्च । एतेनारम्भकत्वमपि दत्तोत्तरं ज्ञेयम् । गन्धनैव चन्दनस्पृष्टवायुसम्पर्कशालिशालान्तरवैसं, निम्बतरुविशेषसम्पर्कशालिवातसंसर्गजमुखतिक्तत्वमपि व्याख्यातं ज्ञेयम् । नचैवं सर्वत्रातिप्रसङ्गः । उत्कटत्वानुत्कटत्वयोरेव गन्धादिनिर्गमानिर्गमनियामकत्वादिति सङ्क्षेपः ॥ इति गन्धः ॥ इति तन्मात्राणां लक्षणानि ॥

अथ भूतानां लक्षणान्युच्यन्ते ॥ तत्राकाशादिपञ्चकान्यतमत्वं सविशेषशब्दादिमत्त्वं वा सामान्यलक्षणम् । बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वमिति भूतत्वलक्षणं त्वग्रे आलङ्कारिकैर्दूषणाद्योग्यताघटितत्वेऽपि प्रमाणरहितत्वान्नादृतम् । एवमन्यदपि बोध्यम् ॥ अथ वैशेषिकम् ॥ तत्राकाशस्य भूतावकाशदातृत्वं बहिरन्तर्व्यवहारविषयत्व, घ्राणेन्द्रियान्तःकरणाधारत्वं, चेति लक्षण;

प्रथम। तदुक्तं, भूतानां छिद्रदातृत्वं बहिरन्तरमेव च * प्राणे-न्द्रियात्मधिष्ण्यत्वं नभसो वृत्तिलक्षणमिति। तत्राद्यमाधिदैविकस्य स्वाधिभौतिकस्वरूपकर्मकदातृत्वस्य तत्रैव सत्वात्। द्वितीयं स्वा-धिभौतिकं स्वरूपलक्षणं व्यवहारोपयोगि। नचावरणेऽतिव्याप्तिः। तस्य विषयपरिच्छेदकत्वात्। अत एव, न भूप्रदेशे दिशि च। आन्तरो देशो बाह्यो देशः। आन्तरा दिग् बाह्या दिगिति। तत्र विद्यमानत्वेनाभिलप्यमानत्वात्। अतो धूमोऽन्तरेव, न बहिरिति व्यवहारसाक्षिको विवर एव बहिरन्तरव्यवहार इति। एतेनाकाश-मनिच्छन्तो म्लेच्छा भाट्टैकदेशिनश्चापास्ताः। अयं नित्य इति वैशेषिकादयः। तथाहि। समवाय्यादिकारणत्रयसामग्र्या हि सर्वोत्पत्तिः। तत्राकाशावयवासिद्ध्या समवाय्यभावेन तद्द्वयसं-योगरूपासमवायिनोऽप्यभावात्। केवलनिमित्तेन कार्योत्पत्त्यद-र्शनात्। सृष्टिप्रागभावदशायामसुषिरत्वस्यासम्भाव्यत्वात् पृथि-व्यादिवैधर्म्याद् विभुत्वात् सम्भवश्रुतेरुपाधिपरत्वेन गौणत्वेनाज-त्वसिद्धिरतोऽयं नित्य इति वदन्ति। तद् वियदुत्पत्त्यधिकरणे दूषितं व्यासैः। तद् दिङ्मात्रं प्रदर्श्यते। तथाहि। नभो जन्यं, विकारि-त्वात्। विकारि, लौकिकव्यवहारविषयत्वाद्। घटादिवदित्यनु-मानेन, आत्मन आकाशः सम्भूत इतिश्रुत्यनुगृहीतेन जन्यत्वसिद्ध्या ईश्वरस्यैव समवायिनो निमित्ताद्विभागाच्च समवायिनः सुखेन जन्यत्वसिद्धिः। क्रमसृष्ट्यन्तरेऽपि तत्सिद्धिरत्यूह्योऽतः सुष्ठु॥

अथ प्रसङ्गादिदं विचार्यते। आकाशनीलप्रतीतिर्या सा भ्रमः प्रमा वेति। तत्र बहवः। आकाशस्य रूपवत्त्वे न मानम्। तथाहि। न तावत् प्रत्यक्षम्। आकाशे तद्रूपं वा पश्यामीत्यप्रत्ययात्। नीलं नभोऽस्तीति प्रतीतिः सार्वलौकिकीति चेत्। तस्या भ्रान्तत्वात्। ननु रूपवतः प्रत्यक्षविषयता न नियता। परमाणौ व्यभिचारादि-

तिचेन्न। सहकार्यभावस्य तत्र तन्त्रत्वात्। किं तत्सहकारीतिचेत्। महत्त्वमेव। नापि, वायुभिन्नत्वे सति महत्त्वात्। पृथिवीवदित्यनेन आकाशे रूपसिद्धिः। द्रवत्वस्य तत्रोपाधित्वात्। नापि, क्रियादिरहितत्वे सति भूतत्वात्। यन्नैवं तन्नैवम्। कालवदित्यनेन सिद्धिः। द्रव्यारम्भकत्वस्योपाधित्वात्। आद्यक्षणीयघटादौ व्यभिचाराच्च। बहिरिन्द्रियग्राह्यविशेषगुणवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यधर्मवत्त्वस्य कालादीतरद्रव्यत्वस्य वा भूतत्वस्य तत्रापि सत्त्वात्। किञ्च। आकाशो यदि रूपवान् स्यात् परममहान्न स्यात्। बहिरिन्द्रियग्राह्यो वा स्यात्, स्पर्शवान् वा स्यात्, पृथिव्यादित्रयं वा स्यादिति बाधकतर्कपराहतमाकाशस्य रूपवत्त्वमित्याहुः॥ तत्र साहित्यसर्वस्वकारः॥ नेदमुचितम्। नीलं नभः पश्यामीति निःशङ्कं सार्वजनीनप्रत्ययात्। नचासौ भ्रमः। तत्कारणीभूतदोषस्य विकल्पपराहतेः। तथाहि। किमसौ विषयदोषः सादृश्यनिबन्धन इदं रजतमिति वत्? उत करणदोषः पित्तादिनिबन्धनः। शङ्खः पीत इतिवत्। नाद्यः। असम्भवात्। विषयगतदोषजन्यभ्रमत्वावच्छिन्नं प्रति धर्मिप्रमोपसहकृतारोपस्य तन्त्रत्वात्। प्रकृते तदसम्भवात्। नभस्त्वस्यावच्छेदकताया व्यवस्थापयिष्यमाणत्वात्। न द्वितीयः। अस्य प्रत्ययस्य सार्वजनीनत्वात् युगपत् सर्वजनकरणदोषस्य वक्तुमशक्यत्वात्। नचैन्द्रजालिकमायायां यथा वस्तुग्रहणप्रतिबन्धरूपः करणगतो विषयगतो वा दोषः सार्वजनीनस्तथात्रेति वाच्यम्। तत्रेन्द्रजालिकस्य तत्परिपन्थिमन्त्रादिमतोऽन्यस्य यथावस्तुग्रहणदर्शनेन तस्यासार्वजनीनत्वनिश्चयात्। किञ्च सर्वेषां रूपातिवादिनां मते आकाशस्यातीन्द्रियतायाः सम्मतत्वेन तदधिकरणकभ्रमायोगात्। अतो बाधकाभावात् सा प्रतीतिः प्रमैव। सामीप्ये नैल्याभावप्रत्यय एव बाधक इति चेन्न।

व्यापकस्याकाशस्य दैशिकपरत्वापरत्वात्मकदूरत्वसामीप्ययोरनधिकरणत्वात्। पुरुषसंदृष्टदेशवित्तस्य सामीप्यमस्य इति चेत्। तत्राकाशस्यातीन्द्रियत्वेन सामीप्याद्यविषयत्वात्। नयनसंसृष्टाञ्जनवत् सागरनीलिमवच्च समीपे तद्ग्रहणेऽप्यदोषात्। तस्माददुष्ट आकाशमसक्षतापक्षः। एवञ्च पूर्वोक्तानुमानमपि मानम्। ननु द्रवत्वमुपाधिः। तस्य प्रलये पृथ्वीतेजःपरमाण्वोः साध्याव्यापकत्वात्। घटवह्न्यादावपि तथात्वाच्च। घटादौ द्रवत्ववद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वेन द्रवत्वसिद्धेर्न साध्याव्यापकत्वमिति चेन्न। तद्वृत्तितादृशजातिमत्त्वेन तत्तद्गुणसाधने। द्वेषवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वेनेश्वरेऽपि द्वेषापत्तिः। किञ्च। व्याप्यधर्मस्यैव विशेषेण व्यापकधर्मस्यापि नियामकत्वापत्तिः। तदिष्टत्वे गन्धवद्वृत्तिपृथिवीत्वव्यापकजातिमत्त्वेनाकाशादावपि गन्धादिसाधनापत्तिः। नचैवं घटवह्न्यादावसत्त्वेन द्रवत्वं पृथिवीतेजसोर्भागासिद्धं स्यादिति वाच्यम्। इष्टापत्तेः। तस्यालक्ष्यत्वात्। यथोपलम्भं तन्नियमस्य युक्तत्वादिति। यद्यप्यनाकाशभिन्नत्वमुपाधिस्तथापि साध्याभावोपाध्यभावयोर्वायौ व्यभिचरितत्वेन पक्षे साधनाव्यापकत्वस्यादूषकत्वेन च न तत्सम्भवः। एतेन द्रवत्वाऽभावस्य रूपाभावसाहचर्यादुपाधिदृढीकरणमुत्क्षिप्तम्। वस्तुतस्तु द्रवत्वं जल एव। नच घृततैलसुवर्णादौ वह्न्यादिसंसर्गेण तदुपलब्धिस्तर्हि न स्यादिति शङ्क्यम्। तदन्तर्गतानां जलांशानामेव तद्वत्ताभ्युपगमेन तदभिव्यक्तावुपलम्भसम्भवात्। अन्यदा तदनुपलब्धिस्तु हिमकरकादाविव पार्थिवभागबाहुल्याद्, अभिव्यञ्जकसंयोगाद्वेसाद्धुः। अपिच, द्वितीयानुमाने द्रव्यारम्भकत्वोपाधिस्तु रूपवदन्त्यावयविनि साध्याव्यापकत्वान्निरस्तः। आद्यक्षणावच्छिन्ने बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वरूपभूतत्वस्य हेतोरभावान्न व्यभ-

चारोऽपि। निरुक्तभूतत्वयोरायविवक्षायां तद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यधर्मस्य भूतत्वस्यैव मूर्तत्वस्य मनसि द्वितीयविवक्षायां भाट्टानां शब्दे, वेदान्तिनामज्ञानेऽस्मन्मते तमस्यतिव्याप्तेः। वक्ष्यते च तमसो द्रव्यत्वमुपरिष्टात् ॥

योऽपि,यदि रूपवान् स्यात्पृथिव्यादित्रयं स्यादित्यादिरुत्प्रेक्षितस्तर्कः। सोऽपि दुस्तर्क एव। वायुभिन्नत्वे सति निष्क्रियत्वोपाधिग्रासात्।यदि रूपवान्न स्याद्वायुभिन्नत्वे सति बहिरिन्द्रियग्राह्यविशेषगुणवान्न स्यादिति प्रतितर्कपराहतेश्च। नच स्पर्शवत्त्वमुपाधिः।प्रभायां साध्याव्यापकत्वात्। तत्राप्यनुद्भूतः स्पर्शोऽस्तीति चेन्न। मानाभावात्। स्पर्शवद्वृत्तित्वादिविवक्षायाः प्रागुक्तरीत्याऽपाक्षिप्तत्वात्। रूपवत्त्वेन तत्साधने त्वग्ग्राह्यत्वस्योपाधित्वात्। अपिच, रूपं पृथिव्यादित्रयाकाशेतरवृत्त्यत्यन्ताभावप्रतियोगि, वायुस्पर्शेतरबहिरिन्द्रियग्राह्यविशेषगुणत्वात्। गन्धादिवत्। शब्दो रूपसमानाधिकरणः। तादृशविशेषगुणत्वात्। रसादिवत्। द्रवत्वासामानाधिकरण्यमुपाधिरिति चेत्। विषमव्यापकत्वात्। प्रलयकालीनतेजःपरमाणुषु साध्याव्यापकत्वाच्चेति। नच विभुत्वानि स्पर्शत्वाभ्यां सत्प्रतिपक्ष इति वाच्यम्। आद्ये स्पर्शवत्त्वस्य, द्वितीये वेगवत्त्वस्योपाधित्वात्। नचोपाधेः सत्प्रतिपक्षोत्थापकतया सत्प्रतिपक्षे न दूषकत्वमिति वाच्यम्। उपाधेर्हेत्वाभासत्रितयोत्थापकतया निर्णयात्। उपाधेर्व्यतिरेकोपसंहारे सत्प्रतिपक्षोत्थापकत्वेन प्रसज्ज्यतां दूषकत्वम् प्रकृते तदभावेन तस्यादूषकत्वात्। एतेनाकाशस्य रूपत्वे सिद्धे प्रत्यक्षासिद्धिरप्यत्यूहैव। स्यादेतत्। चक्षुरिन्द्रियजन्यद्रव्यसाक्षात्कारत्वावच्छिन्न महत्त्वसमानाधिकरणरूपवत्त्वस्य कारणत्वात्। वियति च प्रत्यक्षपरिपन्थिनः परमहत्त्वस्य साक्षात् कथं तत्प्रत्यक्षमिति चेन्न। उच्यते। लाघवेन अणुपरिमाणेतरपरि-

माणसमानाधिकरणरूपवत्त्वस्यैव प्रयोजकत्वात् । पक्षी चलति, नेह पक्षी, इह पक्षीत्यादिप्रत्ययानामपि वियत्प्रत्यक्षसाधकत्वमुपपद्यते । आलोकमण्डलविषयत्वे तु तदपगमेऽपि तथा प्रत्ययानापत्तिः । इहेति निर्देशानुपपत्तिश्च । तद्भूदेशोर्ध्वभागानुगमेन प्रत्ययस्य देशविषयत्वापादनं प्रत्यभिज्ञानिर्वहणं चानिर्वहणमेव । तदुपेक्षितमित्यलं विस्तरेणेत्येवमाकाशस्य रूपवत्त्वं साधयति स्म । सिद्धान्तस्तु— नाकाशे रूपम् । उपरि नीलं पश्यत अ काशं पश्यामीत्येव प्रत्ययात् । नीलं नभः पश्यामीत्यत्रापि न गुणित्वेन नभसो भानम् । गुणत्वेन नीलत्वत्वे मानाभावात् । घटादौ पाकादिना रूपपरावर्त्तने तत्रिष्ठनीलादेर्गुणनिश्चयेन प्रकृते वैलक्षण्यात् । नच वायुभिन्नत्वे सति महत्त्वात् पृथिवीवदित्याद्यनुमानेन तत्सिद्धिः । नीरूपः, परममहत्त्वात् । आत्मादिवदिति प्रत्यनुमानेन सत्प्रतिपक्षत्वात् । नापि वायुभिन्नत्वे सति वहिरिन्द्रियग्राह्यविशेषगुणत्वादित्यनेन । तत्र स्पर्शवत्त्वस्योपाधित्वात् । नच तस्य प्रभायां साध्याव्यापकत्वमिति वाच्यम् । तस्या गुणत्वेन रूपवत्त्वाभावाददोषात् । पृथिव्यादित्रयभिन्नत्वादित्यनेन सत्प्रतिपक्षत्वाच्च । नचात्र वायुभिन्नत्वे सति निष्क्रियत्वमुपाधिरिति वाच्यम् । तस्य मनसि साध्याव्यापकत्वेनानुपाधित्वात् । अतः पुराणादौ तेजोविशेषगुणत्वेनैव रूपस्य निरूपणादाकाशे तदुपगमो न प्रामाणिकः । नच यद् धूम्रं तद्वायोर्यन्नीलं तन्नभस इति श्रुतिसिद्धत्वान्न तथेति वाच्यम् । तस्यास्तद्देवतारूपपरत्वेनाप्युपपत्तेः । अन्यथा वायावपि धूम्रवर्णापत्तेः । नच सङ्काकाण्डाभगोक्षाभमिति वृष्टिलक्षणेषु ज्योतिर्वचनान्नैवमिति वाच्यम् । यत्र कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति * सिद्धिं तत्र विजानीयात् तस्मिन् स्वप्ननिदर्शन इति श्रुत्या स्वप्नस्य सिद्धिसूचकत्ववत्तादृशभ्रमस्य वृष्टि-

सुनकत्वेऽपि वचनोपपत्तेः । तस्मादाकाशे रूपप्रतीतिर्भ्रान्तिव । नचोक्तरीत्या भ्रमहेतोर्निरस्तुमशक्यत्वान्नेदं साम्प्रतमिति वाच्यम्। रूपवद्द्रव्यग्राहकस्य चक्षुषो मध्ये रूपवद्द्रव्याभावेन दूरगमने आकाशे नीलिमेव दृश्यत इति चक्षुरसामर्थ्यदोषस्यैव हेतुत्वात् । नच तत्र रूपवतां सूर्यकिरणानामेव सत्त्वात् कथं रूपवद्द्रव्याभाव इति वाच्यम् । तेषां विरलत्वेनायोग्यतया तत्सत्ताया अप्यभावक-ल्पत्वात् । अन्यथा, छायायां साचि तिष्ठतोरिवाग्रसंलग्नानामपि तेषां दर्शनप्रसङ्गात् । नच सार्वजनीनत्वान्नायं भ्रम इति वाच्यम्। देहात्मभ्रमवदुपपत्तेः । योगिनां तदभावादसार्वजनीनः स इतिचेत्। तुल्यम् । कपिलादीनामेव तथा वचनात् । एतेनैवाग्रे बाधाभावो-ऽपि, प्रयुक्तः । नन्वेवं सति सामीप्ये नीलभ्रमापत्तिरितिचेन्न । दूरत्वस्यापि सहकारित्वात् । नच विभौ दूरत्वमनुपपन्नमिति वाच्यम्।तद् दूरेतदन्तिके इति श्रुतौ विभुन्यपि ब्रह्मणि तदङ्गीका-रादत्राप्युपपत्तेः । प्रदेशदूरत्वस्य शक्यवचनत्वाच्च । किञ्च । गन्धर्वनगरवदाकाशे तादृशवस्तुसामर्थ्यादपि तादृशभ्रमोपपत्तेः । नचाकाशस्यातीन्द्रियतया तदधिकरणकभ्रमायोग इति वाच्यम् । वस्तुसामर्थ्येन तस्याप्यैन्द्रियकत्वात् । अन्यथा कालवदाकाशस्या-ऽप्यप्रत्ययापत्तेः । ननु वस्तुसामर्थ्यात् प्रमैव कुतो नाङ्गीक्रियत इति चेत् । पुराणादौ रूपानुक्तेरिति वदामः । तर्हि अवकाशप्र-त्ययोऽपि भ्रमोऽस्त्वितिचेन्न । बहिरन्तर्व्यवहारविषयत्वस्य भूता-नां छिद्रदातृत्वस्य च शास्त्रेणैवोक्तत्वात् । तस्माद्वस्तुसामर्थ्यजन्य-त्वाविशेषेऽपि आकाशे नीलरूपं मसेमषीव प्रतीतिर्भ्रान्ता, न तु नीलाभिन्नमाकाशं पश्यामि, आकाशं वा पश्यामीति । एतेना-काशे सर्वदा सूक्ष्मनीलमेघसत्त्वमङ्गीकुर्वन्तोऽपि निरस्ता ज्ञेयाः । एवमेवान्धकारप्रतीतिरपि ज्ञेया । तस्यापि पदार्थान्तरत्वात् । यथेद

तथाऽन्धकारवादे प्रपञ्चितमिति न पुनः प्रपञ्च्यते । तेनैतत् सिद्धम् । चक्षुःस्वसामर्थ्येनाकाशं न गृह्णाति । आकाशमेव तु स्वसामर्थ्येन स्वात्मानं ग्राहयति । गन्धर्वनगरवत् पिशाचवच्चेति दिक् । एतेनैवाकाशप्रतिबिम्बतत्प्रतीती अपि व्याख्याते ज्ञेये । अस्य च शब्द एव विशेषगुणः । तस्य मात्रा गुणः शब्द इति वाक्यात् । विशेषगुणत्वं च कारणेऽनुद्भूतत्वे सति स्वस्मिन्नुद्भूतगुणत्वमित्याकाशः ॥

अथ वायुः ॥ तल्लक्षणं तु अरूपित्वे सति चालनव्यूहनद्रव्यशब्दगन्धनयनसर्वेन्द्रियबलदानाख्यकार्यकत्वमेकमेव । तदुक्तं, चालनं व्यूहनं व्याप्तिर्नेतृत्वं द्रव्यशब्दयोः * सर्वेन्द्रियाणामात्मत्वं वायोः कर्माभिलक्षणमिति । तत्र चालनं शाखादेः । व्यूहनं पतिततृणादेर्वासयैव । मेलनं प्राप्तिर्गन्धस्य घ्राणाप्रापणम् । द्रव्यनयनं च द्रव्यघटादेरन्यत्र नयनम् । शब्दनयनं तु पूर्वमुपपादितम् । सर्वेषामिन्द्रियाणां बलदश्चायम् । एतदभावे किमपीन्द्रियं कार्यक्षमं न भवतीति । एवञ्च प्राणरूपोऽपि संगृहीतो ज्ञेयः । अस्य च स्पर्शो विशेषगुणः । शब्दश्च कारणान्वयात् । तेनायं द्विगुणः । तदुक्तं, नभसोऽथ विकुर्वाणादभूत् स्पर्शगुणोऽनिलः । परान्वयाच्छब्दवाँश्च प्राण ओजः सहो बलमिति । अयं च मीमांसकमते त्वचा प्रत्यक्षः । यथाहुः । महदुद्भूतस्पर्शवद्द्रव्यत्वेनैव त्वचो योग्यता । लाघवात् । उद्भूतरूपवत्त्वस्य प्रवेशे गौरवापत्तेः अतो द्रव्यचाक्षुषत्वावच्छेदेनैवोद्भूतरूपहेतुता लाघवादुचिता । एवञ्च सार्वजनीनप्रतीतिरप्यनुकूला भवतीति ॥ इति वायुः ॥

अथ तेजः ॥ तस्य च प्रकाशनपाचनपानहिममर्दनादनशोषणाख्यषट्कार्यकत्वं सामान्यलक्षणम् । तदुक्तं, द्योतनं पचनं पानमदनं हिममर्दनम् * तेजसो वृत्तयस्त्वेताः शोषणं क्षुत्तृडेव चेति ।

तच्च तत्त्वरूप एव प्रसिद्धम् । ब्रह्माण्डान्तःस्थे त्वन्यतरत्वाधिक-त्वं लक्षणमिति ज्ञेयम् । तेन चन्द्रादावपि जलकृतो नोष्णस्पर्शा-भिभवः । तत्र द्योतने प्रकाशनं सूर्यादेरेव । पाचनमौदर्यवह्नेः । पाककरणं वा वह्नेर्वह्नेः । फलादेः सूर्यस्यापि । पानं जलादेः । अदनमन्नादेः । इदमप्यौदर्यस्यैव । हिममर्दनं हिमदूरीकरणम् । शोषणं चानुमेयम् । हिमवाय्वपेक्षया आतपे वस्त्रादिषु जलाकर्ष-णस्य शैघ्र्यात् । एतेनैव सिकतासर्परादौ व्यभिचारः परिहृतो बोध्यः । पानमदनं चान्तःप्रवेशरूपत्वादेकमेव । तेन पञ्चैव रूप-पाः । क्षुत्तृषौ च तेजोरूपे एव । तेन चेतनकर्तृकत्वेऽपि पानादन-योर्न तेजःकार्यत्वहानिः । अस्य च रूपं विशेषगुणः । शब्दस्पर्शौ च कारणान्वयात् । तेन त्रिगुणम् । तदुक्तम्, उदपद्यत तेजो वै रूपवत् स्पर्शशब्दवदिति ॥ इति तेजः ॥

अथ जलम् ॥ तस्य च, क्लेदनपिण्डनतृप्तिप्रीणनाप्यायन-प्रेरणतापापनोदनभूयस्त्वाख्याष्टकार्यकत्वं सामान्यलक्षम् । तदु-क्तं. क्लेदनं पिण्डनं तृप्तिः प्राणनाप्यायनोदनम् * तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमाः । तत्र तत्त्वरूपे कार्येऽपि च समम् । क्लेदनमार्द्रीकरणं वस्त्रादेः । पिण्डनं संग्रहश्चूर्णीभूतानां पिण्ड-तासम्पादनम् । यथा सक्तूनाम् । तृप्तिः क्षुदादिनिवृत्त्या पुरुष-स्य सन्तर्पणम् । भुक्त्वापि जलेऽपीते तृप्तो न भवतीति । प्राणनं जीवनम् । आप्यायनं प्राणसन्तर्पणम् । प्रेरणं च प्रवाहादौ । प्रवाहेनैव पदार्था नीयन्ते, कूलादिश्च पात्यते । तापापनोदः प्रसि-द्धः । भूयस्त्वम्, एकस्मिन् देशे सजातीयप्रचुरस्यैवावस्थानम् । यद्वा, यत्रापः प्रविशन्ति तद् भूयो भवतीति। एवं घृततैलादौ यद् क्लेदकत्वं संग्राहकत्वं च दृश्यते, सोऽपि जलधर्म एव। वह्न्यादिसं-सर्गेण परमभिव्यज्यते । कार्यस्य पाञ्चभौतिकत्वात् । तेन नाति-

व्याप्तिशङ्कालेशः । तेषु जलव्यवहाराभावस्तु भूतान्तरकृतप्रतिबन्धनिबन्धनः । करकास्विव । करकास्वपि काठिन्यप्रतीतिर्भ्रान्ता । तत्र नैमित्तिकस्य तस्य सत्त्वात् । इसेआतिशैत्येन संरुद्धे वायौ जलस्य पिण्डने करकोत्पत्तेः । अत एव हिमालयोपसकागतगङ्गाप्रवाहोपरि पुरुषाः पद्भ्यां पद्यन्ते । अन्यथा मज्जेयुरेव । शीतकाले च निर्वाते मिट्टिकायामम्भसि निशि स्थापिते प्रातश्च तज्जलपात्रेऽधोमुखे कृतेऽपि न तज्जलस्य पातः । छुरिकया विदार्य फलवज्जलस्य भक्षणमपि मध्यदेशीयजनानुभवगोचर इति दिक् । अस्य च विशेषगुणो रसः । शब्दस्पर्शरूपाणि परान्वयात् । तेनेदं चतुर्गुणम् । तदुक्तं, तेजसस्तु विकुर्वाणादासीदम्भो रसात्मकम् * रूपवत् स्पर्शवच्चाम्भो घोषवच्च परान्वयादिति इति जलम् ॥

अथक्षितिः ॥ तल्लक्षणं तु, भावनं ब्रह्मणः स्थानं धारणं सद्विशेषणम् * सर्वतत्त्वगुणोद्भेदः पृथिवीवृत्तिलक्षणमिति वाक्यात् । भावनादिपञ्चवृत्तिकत्वं शास्त्रे उक्तं, तथापि प्रकृते व्यवहारोपयोग्येन विस्तरभिया विविच्यते । वाक्यव्याख्यानं सुबोधिन्यां द्रष्टव्यम् । तत्र रूपवत्त्वे सति साक्षात्सर्वजगद्धारकत्वमित्येकं लक्षणम् । कालादिवारणाय सत्यन्तम् । आवरणतत्त्ववारणाय साक्षादिति । आधारत्वे सति सर्वतत्त्वव्यावर्तकत्वं वा । न हि काष्ठादिकं विना वह्निराविर्भवति । न वा पृथिवीं विना समुद्रादिः । न वा व्यजनादिकं विना वायुः । न वा गर्तादिकं विना आकाशः । न वा शरीरं विना सर्वेन्द्रियादिकमात्मा चाविर्भवतीति सर्वं सुस्थम् ॥

नैयायिकास्तु, पाकजानुष्णाशीतस्पर्शवती पृथिवीत्याहुः ॥ मुक्तावलीकारस्तु— गन्धवती पृथिवीति लक्षयित्वा पाषाणादौ

अव्याप्तिवारणाय यद् द्रव्यं यद् द्रव्यध्वंसजन्यं तत्तदुपादानोपादेय-मिति व्याप्तिं दर्शितवान्। तदर्थस्तु— यद् द्रव्यं पाषाणभस्मा-ख्यद्रव्यं, यद् द्रव्यध्वंसजन्यं पाषाणाख्यद्रव्यध्वंसजन्यं, तद् भस्म, तदुपादानोपादेय पाषाणोपादानभूता येऽवयवास्तदुपादेयमिति। अनया च व्याप्त्या पाषाणारम्भकेषु सिद्धे गन्धे तत्कार्ये पाषाणे-ऽप्यस्त्यनुद्भूतो गन्ध इति न लक्षणव्यभिचार इति। तदविचार-चारु। पाषाणध्वंसजन्यत्ववद्वह्निध्वंसजन्यत्वस्यापि भस्मनि सत्त्वात् पाषाणोपादानोपादेयत्ववद् वह्न्युपादानोपादेयत्वस्यापि शक्यव-चनत्वात्। सति वह्नौ भस्मासम्भवात्। तथा सति वह्न्यादाव-प्यनुद्भूतगन्धापत्तिर्व्याप्तिव्यभिचारो वेति। न चोद्भूतरूपवद्यद्-द्रव्यध्वंसजन्यत्वमत्र विवक्षितम्। तथाच वह्निध्वंसजन्यत्वेऽप्यनुद्भू-तरूपवद्वह्निद्रव्यध्वंसजन्यत्वं, न तदुद्भूतरूपतद्ध्वंसजन्यत्वम्। उद्भूतरूपे तस्मिन् ध्वस्तेऽपीङ्गालभावेन भस्माभावात्। यदा चानुद्भूतोऽपि ध्वस्यते तदैव भस्म भवतीति न व्यभिचार इति वाच्यम्। तथापि दग्धकर्करे व्यभिचारात्। उद्भूतरूपवह्निध्वंस एव दग्धतासम्भवात्। सति वह्नावङ्गारव्यवहारात्। जलादिसेकेना-नुद्भूतध्वंसे तु भस्मतासम्भवात्। अतो दुर्वारस्तत्र व्यभिचारः। यत्तु तेजोऽवयवाना विजातीयद्रव्यं मत्यनुपादानत्वादत्रोपादानपदे विजातीयोपादानता विवक्षिता। अतोऽत्र विवक्षा विनैव निर्वाह इति। तन्न। सुवर्णरूपं विजातीयद्रव्य मति तेजोऽवयवानामेवो-पादानत्वात्। अत एवं वक्तव्यं— यन्निःस्नेह गुरुद्रव्य निःस्नेह-गुरुद्रव्यध्वंसजन्य तन्निःस्नेहगुरूपादानोपादेयम्। अथवा, यद्ग-न्धवद्द्रव्यमितरध्वंसजन्यं तत्स्वमजातीयोपादानोपादेयमिति। एवं भस्मारम्भकावयवेषु गन्धसिद्धौ तदुपादये पाषाणेऽपि साजात्या-दनुद्भूतगन्धसिद्धिर्भवति। तथापीय नासत्कार्यवादिनामुपयोग-

नी । अवयवेष्वसत्येव गन्धो निमित्तवशाद् भस्मन्येवोत्पद्यते । तत्प्रागभावस्य तत्र सत्त्वात् । कपालेषु घटवत् । द्वितीयक्षणे गुणवदिति । अत इदमपि तन्मतमपाकुर्वत् सत्कार्यवादमेव स्थापयतीति समर्थितं स्वमतमिति दिक् ॥

अस्याश्च विशेषगुणो गन्धः । शब्दस्पर्शरूपरसास्तु कारणान्वयात् । तदुक्तं, विशेषस्तु विकुर्वाणादम्भसो गन्धवानभूत् * परान्वयाद्रसस्पर्शशब्दरूपगुणान्वित इति नैव पञ्चगुणेति ॥ इति पृथिवी ॥

सौगतास्तु—रूपादिव्यतिरिक्तं द्रव्यं नाम न किञ्चिदुपलभामहे । न च तस्योपलम्भकमस्ति । चक्षुरादीनां रूपादिष्वेवोपक्षीणत्वात् । गन्धरूपरसस्पर्शसङ्घातः पृथिवी । रसरूपस्पर्शसङ्घात आपः । रूपस्पर्शसङ्घातस्तेजः । शब्दस्पर्शसङ्घातो वायुः । एवं रूपादिसङ्घातभेदादेव पृथिव्यादिविभागा, न द्रव्यं नाम किञ्चिदित्याहुः ॥

तदन्ये न सहन्ते॥ यथाह शास्त्रदीपिकाकारः।आगमापायिरूपादिषु यदनपायि प्रत्यभिज्ञायते तद् द्रव्यम्। दर्शनस्पर्शनाभ्यां चास्य ग्रहणम् । प्रत्यभिज्ञा च । यथा बदरफले श्यामावस्थाया रक्तावस्थायां च । यथा घटपिण्डकपालावस्थासु मृद्द्रव्यम् । अस्ति हि तत्र पिण्डाद्यवस्थाभेदे श्यामरक्तरूपभेदेऽपि द्रव्यप्रत्यभिज्ञा । मृदियं पिण्डावस्थाम् अपहाय घटावस्था सञ्जाता । सा श्यामिमानं सक्त्वा पक्वा सती अरुणिमानं गृहीतवती। अनन्तरं घटावस्थामप्यपहाय कपालिका सञ्जातेति । एवं तन्तुपटाद्यवस्थास्वपि द्रष्टव्यम् । आह च । आविर्भावतिरोभावधर्मकेष्वनुयायि यत् * तद्धर्मि यत्र वा ज्ञानं प्राग्धर्मग्रहणाद्भवेदिति । तथा यादृशमस्माभिरभिहितं द्रव्यं तादृशस्यैव हि सर्वस्य गुण एव भिद्यते, न स्व-

रूपमिति । तद् सिद्धं द्रव्यमिति । अत्राकाशादिभ्यो वाय्वाद्युत्पत्त्यङ्गीकाराच्छ्रुतिसिद्धो विजातीयारम्भकतावादोऽङ्गीकृतो बोध्यः । यत्तु विजातीयं न विजातीयस्यारम्भकमिति नैयायिकादिमतं तच्चूपेक्ष्यम् । तन्तुपटयोरेव वैजात्येन व्यभिचारात् । तन्तुत्वपटत्वयोर्भिन्नत्वात् । नाऽपि पृथिवीत्वकार्पासत्वादिकमादाय निर्वाहः । नियामकाभावात् । द्रव्याद् गुणकर्मोत्पत्तिदर्शनाच्च । स्थूलाग्नौ वायोरेव कारणत्वेनोपलम्भाच्च । अन्यथा तदवयवबाहुल्यानुपपत्तेः । ततः पूर्वं पटे तन्तूनामिव वायौ वह्न्यवयवानामनुपलम्भात् । एवञ्च गोमयाद् वृश्चिकादेर्देवान्मनुष्यादेर्वानराद् ऋक्षादेः मलस्ततः शास्त्रतश्च सिद्धोत्पत्तिरिति तद्विरुद्धं तन्मतमिति दिक् ॥ इति भूतानां लक्षणानि ॥

अथेन्द्रियाणां लक्षणानि ॥ तत्र तैजसाहङ्कारोपादेयत्वे सति ज्ञानक्रियान्यतरकरणमिन्द्रियम् । यत्स्पन्दादिक्रियाजनकवाय्वादिवारणाय सत्यन्तम् । प्राणबुद्धिवारणाय शेषम् । देहसंयुक्तत्वे सति स्वफलेनात्मव्यापकत्वं वा । इदमेव मुख्यं लक्षणम् । साक्षाद्व्युच्चरणेऽपि तु समन्वयात् । कालिकाव्याप्तेरदुष्टत्वाच्चेति । मीमांसकास्तु, यत् सम्प्रयुक्तेऽर्थे विशदावभासं ज्ञानं जनयति तदिन्द्रियम् । नैयायिकास्तु, शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमाहुः ॥ तानि ज्ञानेन्द्रियकर्मेन्द्रियभेदाद् द्वेधा । तत्र वागादीनि पञ्च कर्मेन्द्रियाणि । श्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि ॥ नैयायिकास्तु, कर्मेन्द्रियाण्यनङ्गीकुर्वन्तः श्रोत्रादीनां पञ्चानां भौतिकत्वमाहुः । तन्न । साक्षात्स्रष्टा भगवत एवेन्द्रियोत्पत्तिश्रुतेः । एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ॥ खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणीति । क्रमस्रष्टौ चाहंकारिकत्वश्रुतेः । मृदभूतांशत्वेन ज्ञानकरणत्वानुपपत्तेश्च । आदि-

सं वै चक्षुर्गच्छतीत्यादिना देवतासु तल्लयश्रवणाच्च । अन्यथा देवताम् अनादृत्य परमाणुभाव एवोच्येत । केचित्तु इन्द्रियाणि नित्यान्याहुः । तदप्येतेनैवापास्तम् । अन्ये तु गोलकानां दृश्यत्वादिन्द्रियाणामैन्द्रियकत्वमाहुः । तदप्यसङ्गतम् । छिन्नकरणस्य शब्दश्रवणानुपपत्तेः । नष्टछिद्रचक्षुषश्चाक्षुषापत्तेश्च । अतो रूपाद्युपलब्धिः करणसाध्या क्रियात्वात् । छिदिक्रियावदित्यनेनेन्द्रियाणां करणत्वेन रूपेण सिद्धौ गोलकं न करणम् । उक्तरीत्यान्वयव्यतिरेकव्यभिचारादित्येवं गोलकातिरिक्तेन्द्रियसिद्धौ तस्यातीन्द्रियत्वमवसीयते । अपरे, तु एकमेवेन्द्रियम् । व्यापिकायास्त्वच एव तत्तदवच्छेदेन तत्तज्ज्ञानजनकत्वात् कृतमिन्द्रियान्तरेणेत्याहुः । तदपि न । उपाधिभेदशक्तिभेदयोः कल्पनापत्तेः । सर्वेन्द्रियाणि चेति श्रौतबहुवचनबाधापत्तेश्च । नच क्रमसृष्टिविकस्मात् तैजसात् कथं नानाविधेन्द्रियोत्पत्तिः सम्भवतीति वाच्यम् । भगवदिच्छासहकृतात्तस्मात्तदनुसारेण गुणपरिणामभेदे देहस्यावस्थाभेदेनेव तस्यापि भिन्नाऽवस्थत्वेन नानाविधोत्पत्तिसम्भवात् । अतो न किञ्चिदनुपपन्नम् । तानि चैकादशाणूनि च । तदुपपादितमविरोधचतुर्थपादभाष्ये । नित्यानि चेत्यपि । मायावादिनस्तु, अनित्यत्वं मध्यमपरिमाणत्वं भौतिकत्वं चाहुः । तदपि तत्रैव निरस्तम् । देवताधिष्ठितत्वादेव च स्वकार्यक्षमत्वमतो न त्वचो व्यापकत्वकल्पनमपि युक्तम् । चक्षुषो गमनादेरपि तत एवोपपत्तेरित्यपि तत्रैव । तत्र व्यवहारजनकमिन्द्रियं, वह्निदेवताकमिन्द्रियं वा वाक् । शिल्पजनकमिन्द्रियमिन्द्रदेवताकमिन्द्रियं वा दोः । आनन्दजनकमिन्द्रियं प्रजापतिदेवताकमिन्द्रियं वा मेढ्रम् । गतिजनकमिन्द्रियं विष्णुदेवताकमिन्द्रियं वाङ्घ्रिः । विसर्गजनकमिन्द्रियं मित्रदेवताकमिन्द्रियं वा पायुः । गोलकान्येषां प्रसिद्धानि । एतावान्

परं विशेषः। दोरादिचतुष्कमन्यदेशावच्छेदेनापि कार्यं जनयति। अन्यथा मल्लविद्याकुशलानां खञ्जानां च हस्ताभ्यां चलनं, विषयेन्द्रियसंयोगाच्चक्षुरादिष्वानन्दः, पद्भ्यां तालादिवादनं, नेत्राभ्यामश्रुः, शरीरे च खेदरोमहर्षादीनि न स्युः। वागिन्द्रियं तु न तथेति॥ इति पञ्चकर्मेन्द्रियाणि॥

अथ ज्ञानेन्द्रियाणि॥ तत्र नभोगुणविशेषत्वेन शब्दग्राहकमिन्द्रियं दिग्देवताकं वा श्रोत्रम्। वायुगुणविशेषत्वेन स्पर्शग्राहकमिन्द्रियं वायुदेवताकं वा त्वक्। एवमग्रेऽपि। पार्थिवेषु गन्धसामान्यत्वात्। गन्धलक्षणेऽपि न विशेषपदवैयर्थ्यम्॥
गन्धग्राहकमिन्द्रियम् अश्विदेवताकं वा घ्राणम्। रूपग्राहकमिन्द्रियं सूर्यदेवताकं वा चक्षुः। रसग्राहकमिन्द्रियं वरुणदेवताकं वा रसनम्। एतेष्वाद्यं लक्षणं तृतीयस्कन्धीयकापिलवाक्योक्तम्। द्वितीयं द्वितीयस्कन्धवाक्यानुसारीति बोध्यम्। गोलकान्येषां प्रसिद्धानि। एतावान् विशेषः। त्वक्चक्षुषी द्रव्यस्यापि ग्राहके नान्यानीति नैयायिकादयः। अस्माकं तु न तथेत्युपपादितं प्रत्यक्षविचारे। एतानि दशापि राजसाभ्यां बुद्धिप्राणाभ्यां परिगृहीतत्वादपि राजसानि। न तु ज्ञानजनकानि सात्त्विकानि क्रियाजनकानि जडपर्यवसानात् तामसानि। तदुक्तं, तैजसानीन्द्रियाण्येव ज्ञानकर्ममयानि च * ज्ञानशक्तिः क्रियाशक्तिर्बुद्धिः प्राणस्तु तैजस इति। एतेन, सात्त्विकमेकादशकं प्रवर्त्तते वैकृतादहङ्कारादिति प्रवचनसूत्रोक्तमत्र नाभिप्रेतमिति ज्ञापितम्। एतेषु चक्षुःश्रोत्रघ्राणहस्तपादा द्विगोलकाः। जिह्वाख्यं तु गोलकं वाग्रसनाभ्यामाधिष्ठितम्। पायूपस्थावेकैकगोलकौ। त्वग् व्यापिकेति। एतेषां देवाः पूर्वमुक्ताः। तेषां कार्यं विषयाभिव्यक्तिः। तदुक्तमाचार्यैस्तृतीयस्कन्धे, अर्थाभिव्यञ्जनं यत इत्यस्य व्याख्याने,

देवाधिष्ठानव्यतिरेकेण केवलादिन्द्रियाच्छब्दज्ञानादिकं न भवतीति सामर्थ्यं देवतानामेव। इन्द्रियाणामेव सामर्थ्यं कल्प्येत यदि कल्पिनं शास्त्रं स्यात्। यथासिद्धमत्रोच्यत इति देवाधीनैव विषयप्रकाशनशक्तिरिति ज्ञानेन्द्रियाणि च वस्तुप्राप्यप्रकाशकारीणि। सौगतास्तु श्रोत्रस्याप्राप्यकारित्वमाहुः। तदन्ये दूषयन्ति। यथाह शास्त्रदीपिकाकारः।अप्राप्यकारित्वे हि सन्निकृष्टविप्रकृष्टस्थितौ युगपच्छब्दमुपलभेयाताम्। तयोस्तु क्रमेणोपलब्धिर्न कथञ्चिदप्यप्राप्यकारित्वे समर्थयितुं शक्या। किञ्च, क्षणिको वा शब्दः ? स्थायी वा। यदि क्षणिकः प्रत्यासन्नैर्गृहीतमात्रो नष्टः, कथं विप्रकृष्टैर्गृह्यते। स्थायित्वं तु सौगतानामनभिमतमेव। स्थायित्वे प्रत्यासन्नानां चिरकालं श्रवणमनुवर्त्तेतेति। तस्मात्प्राप्यकारित्वं श्रोत्रस्य सम्भवतीति वृत्तस्तु न व्यापारत्वं, किन्तु ज्ञानावस्थात्वमेवेति व्युत्पादितं पूर्वम्। कर्मेन्द्रियेषु तु तत्तत्क्रियैव व्यापारः। सर्वेषामानन्दानामुपस्थ एकायनमित्यादिश्रुतेः। तज्जन्या स्थूलशरीरक्रिया च फलमिति सङ्क्षेपः॥ इतीन्द्रियाणि॥

अथ मनः॥ तचोभयात्मकमुभयकार्यकर्तृत्वात्। तस्य च सङ्कल्पविकल्पात्मकत्वं स्वरूपलक्षणम्। कामजन्यकत्वं कार्यलक्षणम्। एतदाध्यात्मिकं लक्षणद्वयम्। आधिदैविकं तु अनिरुद्धाविर्भावस्थानत्वम्। भौतिकं तु योगिभिः शनैः संराध्यत्वम्। एतदुक्तं, यत्सङ्कल्पविकल्पाभ्यां वर्तते कामसम्भव इत्यादिना। एतस्येन्द्रियत्वं प्रत्यक्षखण्ड एव विचारितम्। इदं च, नेन्द्रियम्। इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः * मनः सर्वेन्द्रियाणि चेत्यादिश्रुतेः। मनःषष्ठानीन्द्रियाणीति भगवद्वाक्यं तु यजमानपञ्चमा इडां भक्षयन्तीत्यत्रापि, अनृत्विक्त्वेऽपि यजमानस्य पञ्चत्वसंख्यापूरकत्ववन्मनसः षष्ठसंख्यापूरकत्वेनाप्युपपत्तेः।इन्द्रियाणां

मनश्चास्मीति तु, नक्षत्राणामहं शशीतिवन्नियामकत्वभूतिकथनमात्रपरमिति। अन्यथा ज्ञानं ज्ञानवतामहमिति वाक्येन ज्ञानेऽपि ज्ञानवत्तापादनप्रसङ्गात्। इन्द्रियाणां दर्शकं चेत्यादावपि व्यवहारस्त्विन्द्रियनियामकत्वनिबन्धनः। क्रियाज्ञानप्रयत्ने सङ्कल्पयामीत्यनुव्यवसायात् स्वगम्यं मनः। आत्मनात्मानं वेत्तीत्यत्र आत्मन इवोपाधिभेदेनैकस्यापि मनसः प्रमेयत्वप्रमाणत्वयोरुपपत्तेः। योगजधर्मसत्कृतेन तेन अतीन्द्रियज्ञाने स्वविषयज्ञानस्य सुवचत्वात्। अनागतमतीतं च वर्तमानमतीन्द्रियम् * विप्रकृष्टं व्यवहितं सम्यक् पश्यन्ति योगिन इति वाक्यात्। यामीति मम मनोऽस्तीत्यभिलापादपि तथा। एवञ्च, कामः सङ्कल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एवेति श्रुतौ मकारवाचकेतिशब्दप्रयोगात् कामादितुल्याः सुखदुःखप्रयत्नद्वेषादृष्टस्नेहाद्या अनुक्ता अपि मनस एव गुणा ज्ञेया, न चात्मनः। शाण्डिल्यशतसूत्रीयभाष्ये त्वनुमानमपि दर्शितम्। तथाहि। सुखादयो न साक्षादात्मनिकाराः। आत्मनि प्रतीयमानत्वात्। गौरत्वादिवत्। सुखाद्युपलब्धिः सकरणिका। क्रियात्वात्। छिदिक्रियादिवदित्यत्र लाघवात् समवायेनैव करणजन्यत्वं युज्यते। श्रोत्रजन्यत्वमिव शब्दस्य। सुखादयः करणसमवेताः। घ्राणादीन्द्रियग्राह्यगुणत्वात्। स्पर्शशून्येन्द्रियग्राह्यगुणत्वाद्वा। शब्दवदिति। शास्त्रान्तरे तु स्मृत्याद्यनुमेयं मनः। तच्च सकलशरीरव्यापिमनोरथाभिमानिकसुखदर्शनाद् व्यापकमिति मीमांसकाः। अन्ये तु, कारणत्वात् सक्रियत्वादुत्क्रमणादिश्रुतेर्मनो गच्छतीति व्यवहाराच्चाणुपरिमाणमाहुः। तत्रापि नित्यमित्यद्वैवैनाशिकाः। अनित्यमिति सांख्याद्याः। सिद्धान्ते तु चन्द्रदेवताकत्वाभ्रानाकिरणशालि। एतस्माज्जायते, तन्मनोऽसृजतेति श्रुत्या जन्यम्। तथा प्राण इत्यधिकरणे, जीवा-

ऽतिदेशेनाणुत्वादेर्व्यवस्थापनादणुपरिमाणम् । अन्ये तु करणत्वात् क्रियावत्त्वादुत्क्षेपणादिश्रुतेर्मनो गच्छतीति व्यवहाराच्चाणुपरिमाणमाहुः । आभिमानिकसुखं सामर्थ्यादेवोपपद्यमानम् । तस्य च रूपद्वयमान्तरं बाह्यं चेति प्रत्यक्षखण्डे ज्ञानक्रियायामेव निरूपितम् । सामर्थ्यादेवाभिमानिकादिसुखोपपत्तेः श्रुत्यैवाणुत्वादिकं सिद्ध्यतीति सङ्क्षेपः । अस्यापि गोलकं हृदयम् ॥ इति मनः ॥ इत्यष्टाविंशतितत्त्वलक्षणानि ॥

ननु संख्यादीनां गुणानां सामान्यादीनां चाण्डसृष्टेः पूर्वं सत्त्वात् कथमेतावन्त्येव तत्त्वानीति चेत् । अपृथग्विद्यमानत्वादिति ब्रूमः । यत्र हि तत्त्वानामुत्पत्तिरुक्ता एकादशस्कन्धादौ तत्र तेषां शरीरसत्त्वेऽपि न हस्तपादादीनां यथा पृथगुक्तिस्तथा संख्यादीनामपीति विद्यमानत्वेऽपि तेभ्यः पृथग्विद्यमानत्वाभावात् तत्त्वानामाधिक्यम् । स्वव्यापारेण कार्याजननाच्च कारणत्वमपि । वस्तुतस्तु वैशेषिकप्रतिपन्नानां पूर्वोक्तरीत्या द्रव्याणां तत्त्वादिषु निवेशात् । चतुर्विंशतिगुणेषु शब्दादीनां पञ्चानां तत्त्वेषु पृथक्त्वस्याविर्भावे संयोगगुरुत्वद्रवत्वस्नेहानां स्पर्शे भावनासंस्कारस्य ज्ञाने धर्माधर्मयोः कर्मण्यन्तर्भावस्योपपादितत्वात् । सामान्यस्याकृतौ व्यक्तौ च मतभेदेन निवेशात् । विशेषाणां मायाणिकत्वस्य पदार्थखण्डने शिरोमणिनैव नित्यद्रव्याणां स्वतो व्यावृत्तत्वाङ्गीकारेणोपपादितत्वात् । समवायस्य तादात्म्य एव वेदान्तिभिरन्तर्भावितत्वादभावस्य च तिरोभावशक्तौ पूर्वमन्तर्भावितत्वात् । संख्यापरिमाणविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः स्थितिस्थापकसंस्कारवेगाख्यौ संस्कारौ उत्क्षेपणादीनि पञ्चकर्माणि चावशिष्यन्त इति तेष्वतत्त्वं शङ्क्यते । तदेवापृथग्विद्यमानत्वेन परिह्रियते इति न कोऽपि शङ्कालेशः । तस्मादष्टाविंशतिरेव तत्त्वानि ॥ इति कारणकोटिः ॥

एतावानेव ग्रन्थ उपलब्धः ।

(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्र .वि० सं० ( मीमांसा ) २

(८) ब्रह्मसूत्रभाष्यम्-बादरायणप्रणीत-वेदान्तसूत्रस्य यतीन्द्र श्रीमद्विज्ञान-भिक्षुकृत व्याख्यानम् । सम्पूर्णम् । ( वेदान्त. ) ६

(९) स्याद्वादमञ्जरी-मल्लिषेणानिर्मिता सम्पूर्णा । ( जैनदर्शनम् ) २

(१०) सिद्धित्रयम्-विशिष्टाद्वैत-ब्रह्मनिरूपण-परम्-श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम् । सम्पूर्णम् ( वेदान्तः ) १

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टा-रकाचार्यसंगृहीतः । आचार्यचित्सुख-मुनिविरचितव्याख्योपेतः ( वेदान्तः ) ४

(१२) विभक्त्यर्थनिर्णय.न्यायानुसारिप्रथमादि-सप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायरचितः । सम्पूर्णः ( न्यायः ) ५

(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् । सं० ( मीमांसा ) २

(१४) न्यायसुधा ( तन्त्रवार्त्तिकटीका ) भट्ट-सोमेश्वरविरचिता । ( मीमांसा ) १६

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता । ( वेदान्तः ) २

(१६) मीमांसाबालप्रकाशः ( जैमिनीयद्वादशा-ऽध्यायार्थसंग्रहः ) श्रीभट्टनारायणात्मज-भट्टशङ्करविरचितः । ( मीमांसा ) २

(१७) प्रकरणपञ्चिका ( प्रभाकरमतानुसारि-मीमांसादर्शनम् ) महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितं, श्रीशङ्करभट्टकृतो मीमांसा-सारसंग्रहश्च सम्पूर्णः ( मीमांसा ) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यास प्रणीत-स्वकृतव्याख्यासमलङ्कृतश्च । ( वेदान्त ) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्का-चार्यविरचितभाष्यसहितम् । १३

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितम् ( वेदान्तः ) १

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्ण-विरचितया खण्डनफक्किकाविभजनाख्यया व्या-ख्यया ( विद्यासागरी ) ति प्रसिद्धया समेतम् । ( वेदान्तः ) १२

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता । १

(२३) श्रीलक्ष्मीसहस्रम्-बालबोधिनीव्याख्यया-ऽवतरणिकया च सहितम् । ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता ( वेदान्त )

(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्योः मानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि । ( न्यायः )

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । स्वभियटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम्

(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिक कापिल्य जैन वैशेषिक जैमिनीयदर्शन संक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः ।

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्याः जागदीशी टीका ।

(३०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

(३१) स्मृतिसारोद्धारः विश्वम्भरत्रिपाठिसंकलितः ।

(३२) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता ।

(३३) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजी महाराजाविरचितः । २

पत्रादिप्रेषणस्थानम् } हरिदास गुप्तः, चोखम्बा, बनारस सिटी